THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

No. 69.

PART I.

---

EDITED BY

MAHAMAHOPADHYAYA

GOPINATH KAVIRAJ, M. A.

---

THE

# SAMKSEPA ŚĀRĪRAKA

of SARVAJNATMA MUNI

WITH

# TATTVABODHINĪ

ed. by Surya Narayana Sukla

PART I.



Printed by Ali Bukhsh at the Royal Printing Works, Godowlia, Benares City and published under the authority of the Government, United Provinces by the Superintendent, Government Printing, Allahabad.



1936.

# संक्षेपशारीरकम् — Part 1

श्रीमत्सर्वज्ञमुनिविरचितम् ।

श्रीमन्नृसिंहाश्रमविरचितया तत्त्वबोधिन्याख्यया
टीकया सहितम् ।

---

वाराणसेयराजकीयसंस्कृतमहाविद्यालय न्यायशास्त्राध्यापकेन
न्यायव्याकरणाचार्य मीमांसाशिरोमण्युपाधिकेन
श्रीसूर्यनारायणशर्मशुक्लेन संशोधितम् ।



THE

# SAMKṢEPA ŚĀRĪRAKA

OF SARVAJÑĀTMA MUNI

WITH

# TATTVABODHINĪ

OF NRISIMHA ĀŚRAMA. — Part 1



---

EDITED BY

SŪRYA NĀRĀYAṆA ŚUKLA,

NYĀYA VYĀKARAṆĀCHĀRYA,

Professor, Govt. Sanskrit College, Benares.

# FOREWORD.

Credit is due to Mr. Rajendra Nath Ghosh, whose reputation in Bengal as a sincere worker in the cause of Advaita Vedanta is well known, for having brought to my notice the existence of a manuscript of a commentary on Samksepa Sariraka in possession of a certain Sannyasin at Benares. He gave me certain particulars regarding the whereabouts of the owner and asked me to arrange for a careful search of the Ms. and in the event of its discovery to see to its early publication. The clues supplied by Mr. Ghose helped me materially in getting hold of the work and having a transcript prepared of it. Thanks are also due to Pandit Surya Narayana Sukla, Professor, Govt. Sanskrit College, Benares for having gladly complied with my request to take on himself the responsibility of seeing the work through the press.

The name of Nrisimha Asrama, sometimes called Nrisimha Muni and his place in the history of Mediæval Sankara Vedanta are known to all. Nrisimha's Bhedadhikkara, Advaita Dipika (in part), Vedanta Tattva Viveka and Bhavaprakasa—a commentary on Akhandananda's Tattvabodhini (in part) have already been published. He himself wrote a commentary ( called दीपन) on the third work. He also wrote commentaries on Panchapadika (Vedantaratnakosa) and on Panchapadika-vivarana ( Prakasika ). The booklet, entitled Nrisimha Vijnapana, attributed to him, has come out in this very series ( as No. 52 ). The publication of the present commentary by this author can not therefore fail to

sophy, inasmach as it is expected to throw much fresh light on our knowledge of Nrisimha's system of thought.

Nrisimha belonged to the sixteenth century, his Vedanta Tattva Viveka being composed in Sam 1604 or 1547 A. D. He was the pupil of Jagannatha Asrama and Giıvanendra Sarasvati and the guru of Narayana Asrama. A detailed history of his life and works and of his contribution to Vedanta will appear in the general Introduction to this work (prefixed to part II).

Several commentaries are known to have been written on the Samkshepa Sariraka. Of these Madhusudana's, Rama Tirtha's and Purushottama's have been published. Nrisimha's work will certainly form a valuable addition to this literature.

GOVERNMENT SANSKRIT COLLEGE, BENARES

GOPINATH KAVIRAJ.

॥ ॐ श्रीगणेशायनमः ॥

# सटीकं संक्षेपशारीरकम् ।

—:○✻○:—

यस्याज्ञानविभूतिरम्बरमरुद्वह्न्यम्बुभूतद्भवं (?)
स्वाभाभासितभास्वदादिवपुषा येनेदमाविष्कृतम् ।
यस्मिन्सत्यसुखानुभूतिमहिमन्यारोपिता वादिभि-
र्विष्णुः शंकर आत्मभूरितिभिदा तत्संनिधत्तां महः ॥ १ ॥

अव्यासुरव्याजकृपानृसिंहपदरेणवः ।
यन्नामनिगमाधीतिरर्थितार्थसमर्थिनी ॥ २ ॥

भूमानन्दसमुद्रतृप्तमनिशं मुग्धं जनं मोहतो
दृष्ट्यैव क्षपिताखिलाघतमसा संमोचयन्तं शिवम् ।
साम्बं सेन्दुमहं परापरगुरुं व्यासासने संस्थितं
वन्दे दक्षिणदिङ्मुखं सिततरं ज्ञानाब्धिचन्द्रोदयम् ॥ ३ ॥

यस्याः प्रसादं समवाप्य लोकस्रष्टाऽभवद्विश्वपितामहोऽपि
उपासते यां मुनयोऽपि नित्यं तां वाचमाद्यामहमद्य वन्दे ॥ ४ ॥

महागणेशं निविडान्तरायतमोनिरासैकसहस्रभानुम् ।
वन्दारुवृन्दारकवृन्दवन्द्यं वन्दामहे मञ्जुलमिष्टसिद्ध्यै ॥ ५ ॥

वेदान्तार्थसरोजेषु सहस्रांशुरिवादरः ।
भासते व्याससंज्ञो यस्तं वन्दे हरिमीश्वरम् ॥ ६ ॥

नमः श्रीशंकराचार्यगुरवे शंकरात्मने ।
शरीरिणां शंकराय शंकरज्ञानहेतवे ॥ ७ ॥

श्रीमज्जगन्नाथयतीन्द्रपाद-
पद्मद्वयं चेतसि चिन्तयामि ।
स्वनद्विचित्रागमशिष्यभृङ्ग-
जुष्टं विसृष्टावधिमापराशिम् ॥ ८ ॥

गीर्वाणेन्द्रसरस्वत्याश्चरणं शरणं भजे ।
यो भवक्लेशखिन्नानां मूर्त्तं ब्रह्मापरं बभौ ॥ ९ ॥

शारीरकार्थान्सकलान्गभीरा-
न्समुद्दिधीर्षुः कृपया चकार ।
संक्षेपशारीरकनामकं यः
सर्वज्ञमात्मोत्तरमाश्रयेऽहम् ॥ १० ॥

संक्षेपशारीरकनामकेऽस्मि-
न्नशेषवेदार्थनिदानकोशे ।
कर्त्तुं यथार्हं विवृतिं कृपातः
श्रीमज्जगन्नाथगुरोर्यतेऽहम् ॥ ११ ॥

श्रीमच्छारीरकार्थमनुभवप्रधानमाविष्कर्तुं किञ्चित्प्रकरणमारभमाणः सर्वज्ञात्माचार्यस्तस्य ग्रन्थस्याविघ्नपरिसमाप्त्यादिप्रयोजनमवगीतशिष्टाचारानुमितश्रुतिप्रमितकर्त्तव्यताकं तत्त्वानुकीर्त्तनलक्षणस्मृतिरूपं मङ्गलं मुखतः, प्रेक्षावत्प्रवृत्त्यङ्गभूतविषयप्रयोजने चार्थात्, विवक्षन् तदर्थं स्वकृतं मङ्गलं ग्रन्थतो निबध्नाति—

अनृतजडविरोधिरूपमन्त-
त्रयमलबन्धनदुःखताविरुद्धम् ।
अतिनिकटमविक्रियं मुरारेः

अनृतेति। मुरारेः परमं पदं प्रणयादभिष्टवीमीति संबन्धः । मुरस्यारिः मुरारिः मुरशब्देनासुरविशेषनाम्नाऽसुरमात्रं लक्ष्यते । असुरश्चात्राविद्याकृतेन्द्रियाणि स्वकीयत्वेन मन्यमानोऽहंकारो विवक्षितः, तस्यारिः स्वरूपचैतन्यं विवक्षितम् । तद्धि तत्त्वमसीतिवाक्यसमुत्थजाताखण्डाकारवृत्त्यभिव्यक्तं सविलासमज्ञानं समूलकाषं कषति । तस्य परमं निरतिशयानन्दरूपत्वादुत्कृष्टमत एव पद्यते मुमुक्षुभिर्ज्ञायत इति पदं स्वरूपं षष्ठी च राहोः शिर इतिवदौपचारिकी । अथवा-मुरो नाम नरकासुरपरिपालकः प्रसिद्ध एव दैत्यः तस्यारिर्भगवान्विष्णुः सत्त्वप्रधानमायायां प्रतिबिम्बितचैतन्यं तस्य पदं विम्बचैतन्यमधिष्ठानं परमं च तत् निरतिशयानन्दत्वात् अर्थात्तद्व्यतिरिक्तमनित्यमसुखमित्युक्तं भवति । परमत्वादेव पदत्वमपि तस्यैव सकलाध्यासाधिष्ठानत्वात् । अभि-आभिमुख्येन प्रत्यक्तया अहं ब्रह्मेति स्तौमि अनुकीर्त्तयामीत्यर्थः । अभिपूर्वात् स्तौतेर्मिपि 'तुरुस्तुशम्यमः सार्वधातुके' इति विकल्पेनेडागमे अभिष्टवीमीति रूपं तत्त्वानुकीर्त्तनं च तत्त्वानुस्मृतिपूर्वकमिति मानसं च मङ्गलमनुष्ठितं भवति ।

नन्वनुष्ठितं मङ्गलं न समाप्तिं फलति दाम्भिकाद्यनुष्ठितनमस्कारादिमङ्गले व्यभिचारात्तत्कुतो मङ्गलस्य कर्त्तव्यतेति चेत्तत्राह प्रणयादिति । भक्तिश्रद्धादिनेत्यर्थः । तथा च भक्त्यादिकं विना मङ्गलस्यानुष्ठितस्य समाप्तिव्यभिचारेऽपि तत्पूर्वमनुष्ठितस्य न स इति भावः ।

ननु महात्मभिर्भक्तिश्रद्धादिपूर्वमनुष्ठितेऽपि तस्मिन्पञ्चपादिकादौ समाप्तिर्न दृश्यते । न च विघ्नध्वंसस्यैव मङ्गलफलत्वात्तस्य च तत्रापि संभवान्न मङ्गलस्य फलव्यभिचार इति वाच्यम् । 'आरब्धं कर्म समाप्यताम्' इति समाप्त्युद्देशेनैव शिष्टैर्मङ्गलस्यानुष्ठीयमानत्वात् । न च 'निर्विघ्नं समाप्यताम्' इति विघ्नध्वंसोद्देशेनापि तदनुष्ठीयत इति वाच्यम् । तथात्वे कर्मारम्भकाले विघ्नविरहवता पुरुषेणानुष्ठित-

भावनियमात् । अन्यथा कारीर्यादावप्यङ्गवैकल्यं (१) न कल्प्येत । न च विघ्नविरहवतोऽनधिकारात्तदनुष्ठितमङ्गलस्य व्यभिचारो न दोषायेति वाच्यम् । विघ्नज्ञानवत एव मङ्गलेऽधिकारात् विघ्नस्याप्यधिकारत्वे तन्निश्चयं विना मङ्गले न प्रवर्तेत । वैदिकप्रवृत्तावधिकारनिश्चयस्य हेतुत्वात् । न च सति विघ्ने तद्ध्वंसस्तत्फलमिति वाच्यम् । एवमपि विघ्नाभाववतानुष्ठितस्य साङ्गमङ्गलस्य फलव्यभिचारित्वदोषस्य तदवस्थत्वात् । न च विघ्नसमानकालीनस्यैव मङ्गलस्य साधनत्वं श्रुत्या बोध्यत इति वाच्यम् । तर्हि विघ्नस्य कारणतावच्छेदकशरीरनिवेशे तन्निश्चयं विना प्रवृत्त्यनुपपत्तेः वैदिकप्रवृत्तौ तन्निश्चयस्यावश्यकत्वात् । मङ्गलस्य समाप्तिं प्रति व्यतिरेकव्यभिचाराच्च न तत्साधनं दृश्यते हि मङ्गलं विनापि प्रमत्तनास्तिकाद्यनुष्ठितसमाप्तिः । ननु तत्रापि जन्मान्तरीयमङ्गलमनुमीयत इति चेन्न । अन्योन्याश्रयात् । अनुमिते हि जन्मान्तरीयमङ्गले व्यभिचारज्ञानाभावसहकृतसहचारज्ञानेन तस्य समाप्तिकारणत्वग्रहः गृहीते च तस्मिन् समाप्तिकार्येण जन्मान्तरीयतदनुमानमिति । ननुजन्मान्तरीयमङ्गलसत्त्वे प्रमाणाभाववत्तदभावेऽपि प्रमाणाभावात् जन्मान्तरीयमङ्गले संशय एव भवति । एवञ्च जन्मान्तरीयमङ्गले संशयेन तत्समाप्तिसाधनत्वस्यापि संदिह्यमानतया साध्यसंशयस्यानुमानाङ्गत्वेन शिष्टैस्तदर्थितयाऽनुष्ठीयमानत्वादिलिङ्गैःसामान्योपाधौ गृहीतव्याप्तिकैर्मङ्गलस्य समाप्तिसाधनत्वं सुज्ञेयमेवेतिचेन्न 'प्रारब्धं कर्म समाप्यताम्'ति शिष्टानां मङ्गलाचारेण मङ्गलसमान कालीनसमाप्तिं प्रत्येव मङ्गले समाप्तिसाधनत्वस्य वक्तव्यत्वेन जन्मान्तरीयसमाप्तिं प्रति जन्मान्तरीयमङ्गलस्य कारणत्वाभावनिश्चयेन समाप्तेर्मङ्गलव्यभिचारनिश्चयात् । तस्मादन्वयव्यतिरेकव्यभिचारान्नमङ्गलस्य समाप्तिसाधनत्वमिति चेत्-

---

(१) कारीर्यादाविति । 'कारीर्या वृष्टिकामो यजेत' इति श्रुत्या आसन्नसमये वृष्टिफलाय क्रियमाणकारीरीष्ट्या यदि वृष्टिर्न जायते तदा किञ्चिदङ्गवैकल्यं कल्प्यते ।

उच्यते मङ्गलं प्रधानमदृष्टद्वारासमाप्तिफलकं तस्याचारानुमितश्रुतिचोदितकर्त्तव्यत्वेनादृष्टजनकत्वावश्यंभावात् । न च मङ्गलस्य प्रधानत्वेऽन्यदापि तत्करणं, प्रधानस्यापि तस्यारम्भणीयावदितरसन्निधौ (१) विहिततया नियतानुष्ठानोपपत्तेः । तद्वदेव चास्य कामनोपाधिकर्त्तव्यत्वेऽपि नियतानुष्ठानोपपत्तिः ।

ननु मङ्गलस्यादृष्टद्वारा प्रधानत्वे तज्जन्यादृष्टस्य कारीरीजन्यादृष्टवत् फलसंपादकाशेषकारणसंपादकत्वनियमेन सति साङ्गे मङ्गले समाप्तिव्यभिचारो न स्यादिति चेत् न मङ्गलजन्यापूर्वं हि समाप्तिसाधनम् । अविवक्षितविशेषसमाप्तिसंपादकाशेषकारणं संपादयति । न त्वेतत्समाप्तिसंपादकाशेषकारणं श्रुत्याऽविवक्षितविशेषसमाप्तिं प्रत्येव मङ्गलस्य साधनत्वबोधनात् ।

नन्वाचारानुमिता श्रुतिः स्वसमानकालीनसमाप्तिं प्रत्येव मङ्गलस्य कारणत्वं बोधयतीत्युक्तमिति चेन्न-स्वस्य विशेषणत्वे स्वविशिष्टस्य स्वजन्यत्वानुपपत्तेः । उपलक्षणत्वे च समाप्तिमात्रमेव मङ्गलजन्यं स्यात् । किञ्च-शिष्टानां हि द्विविधाचारो दृश्यते 'एतत्प्रारब्धं कर्म परिसमाप्यतां' 'प्रारब्धं कर्म परिसमाप्यताम्' इति च तत्र न तावत् एतत्प्रारब्धं कर्म परिसमाप्यतामित्याचारानुमितश्रुतिर्मङ्गलस्य समाप्तिसाधनत्वे प्रमाणं तथाविधाचारेणानुमीयमानश्रुतेरपि एतत्समाप्तिकामो मङ्गलमाचरेदित्येवंरूपत्वापत्त्या समाप्त्यन्तरं प्रति मङ्गलस्य साधनत्वबोधाभावप्रसङ्गात् । द्वितीये तु जन्मान्तरीयमङ्गलस्य कारणत्वबोधोपपत्तिः । आचारानुमितश्रुतौ स्वपदवीप्साभावाच्च । न तेनापि निस्तारः । न च प्रकृतसमाप्तेरपि प्रारब्धसमाप्तित्वात् तत्संपादकाशेषकारणसंपादकत्वं

---

(१) आरम्भणीयावदिति । 'अग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारिप्समानः' इतिश्रुत्या विहिताया आरम्भणीयेष्टेः दर्शपूर्णमासार्थतया ऽक्रियमाणत्वेन प्रधानत्वेऽपि दर्शपूर्णमासपूर्वकाले नियमेनानुष्ठानम् ।

मङ्गलजन्यादृष्टस्य किं न स्यादिति वाच्यम् । समाप्त्यभावप्रयुक्तदुःखहेतुप्रबलदुरितादृष्टप्रतिबद्धत्वेन मङ्गलजन्यापूर्वस्य तत्संपादकत्वाभावात् । अप्रतिबद्धं ह्यदृष्टं स्वफलसम्पादककारणं संपादयति । अन्यथा ज्योतिष्टोमादृष्टस्य स्वोत्पत्त्यनन्तरमेव स्वर्गोत्पादकाशेषकारणसंपादकत्वप्रसङ्गात् । इह वा जन्मान्तरे वा निवृत्ते भोगादृष्टे प्रतिबन्धे मङ्गलजन्यापूर्वं विघ्नाभावादिदृष्टकारणचक्रं सम्पादयत्समाप्तिमपि सम्पादयति एवञ्च सति नान्वयव्यभिचारः । नापि व्यतिरेक व्यभिचारः उक्तप्रकारेण श्रुत्या मङ्गलस्य समाप्तिसाधनत्वबोधनेन प्रमत्ताद्यनुष्ठितस्थलेपि जन्मान्तरीयमङ्गलसंशयेन तदनुमानोपपत्तेः । न चैवं जन्मान्तरीयमङ्गलसंशयेन शिष्टानामिदानींतनमङ्गले प्रवृत्तिर्न स्यादिति वाच्यम् । तस्य दृष्टफलत्वेन यावत्फलं चित्रायागादाविव प्रवृत्त्युपपत्तेः । न च साङ्गे प्रधाने मङ्गलेऽनुष्ठिते कारीर्यादिवदग्रिमपुरुषव्यापारानुपपत्तिः, पुत्रेष्ट्यादिवदुपपत्तेः । न चैवं मङ्गलान्तरं व्यर्थं प्रचयगमनशिष्टाचारपरिपालनयोरेव तत्फलत्वात् ।

वस्तुतस्तु नित्यानां कर्मणां यथा श्रवणादिसंपत्तौ सत्यां ज्ञानं फलमितरथाभ्युदयः यथा वा धनार्जनविधेः श्रद्धादिसहकारिसंपत्तौ सत्यां कर्मसिद्धिः प्रयोजनमन्यथा भोग एव । एवं मङ्गलस्यापि स्वेतरसमाप्तिसामग्र्यां सत्यां समाप्तिरन्यथा तु विहितक्रियात्वेन कर्मणा पितृलोकः सर्व एते पुण्यलोका भवन्तीत्यविशेषेण सर्वकर्मणामभ्युदयफलश्रवणाच्चाभ्युदयः फलमिति न कस्यापि वैयर्थ्यमिति । अत एवाचार्यैरुक्तमन्यार्थमपि देवतानुस्मरणं स्वभावादेव विघ्नोपप्लवं धक्ष्यतीति ।

ननु परमपदस्य प्रत्यक्तयानुस्मरणमनुपपन्नं प्रतीचः कर्तृत्वादिविक्रियावत्त्वात्परमपदस्य च तदभावात् विरुद्धयोश्चैक्यानुपपत्तेरित्याशङ्क्य प्रत्यगभिन्नं परमपदं विशिनष्टि—अविक्रियमिति। कर्तृत्वादिविक्रियाशून्यमित्यर्थः । प्रत्यगभिन्नब्रह्मस्वरूपचैतन्यं हि स्वतोऽविकारि स्फटिकमणेरिव जपाकुसुमसन्निधानेन लौहित्यं बुद्धिसन्निधानेन कर्तृत्वा-

द्विकारं भजते 'ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमनुक्रामति' ( बृ. ४।३।७ ) इत्यादि श्रुतेः। तथा च नारोपितविरुद्धधर्मो वास्तवैक्यं विरुणद्धीत्यर्थः। परमपदस्या जगद्विक्रियावतः कथं तद्विरुद्धप्रतीचैक्यमिति वाशङ्क्याह अविक्रियमिति। जगदाकारपरिणामशून्यामित्यर्थः। निष्कलं निष्क्रियमित्यादिश्रुतितो ब्रह्म न वस्तुतो जगत्कारण मित्यर्थः। जगत्कारणेन मायाशबलब्रह्मणा न प्रत्यगैक्यं वर्णयामः येन विरुद्धतया तदैक्यं प्रतीचो न स्यात् किन्तु शुद्धचैतन्येनैवेत्यर्थः।

नन्वेवमपि परमपदस्य परोक्षस्य कथमपरोक्षप्रत्यगैक्यं तत्राह-आतिनिकटामिति। प्रतिपत्तुः प्रत्यगात्मनः अतिनिकटमव्यवहितं स्वरूपमिति यावत्। तत्त्वमादिश्रुतेरित्यर्थः। अथ वा प्रतिपत्तुः प्रतीचो देहादिविशिष्टस्य कथं तद्विपरीतब्रह्मभावइत्याशङ्क्याह—आतिनिकटमिति। अत्यान्तसन्निहितं सर्वान्तरमित्यर्थः। न वस्तुतो देहादिविशिष्टः प्रत्यगात्मा किन्तुतत्साक्षी 'चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षी' इत्यादिश्रुतेरित्यर्थः ( नृ. उ. ता. २ ख )।

ननु कथं परमपदस्यापरिणामित्वलक्षणमविक्रियत्वमित्याशङ्क्य श्रुतितो निर्धारिते तदुपपत्तिमाह—अनृतजडविरोधिरूपमिति। सद्विलक्षणं वियदादि जगदनृतं चैतन्यविलक्षणत्वाज्जडं च आत्मा च सत्यचैतन्यस्वरूपः घटादिसत्यतायास्तदविषयान्तःकरणवृत्तिगतचैतन्यस्य चात्मस्वरूपत्वात् आत्मातिरिक्तानन्तसत्यकल्पने प्रकाशकल्पने च मानाभावात् कल्पनागौरवाच्च। तथा च परमपदं सत्यप्रकाशस्वरूपमनृत जडप्रपञ्चविरोधीत्यर्थः।

अयम्भावः लोके हि परिणामिवस्तु स्वसमानजातीयाकारेणैव परिणमते। न हि जातु तन्तवः स्वर्णाकारेण परिणमन्ते आत्मा च सत्यबोधस्वरूपः कथमनृतजडप्रपञ्चाकारेण परिणमेतेति प्रतीचो देहादिव्यतिरिक्तत्वं वोक्तमुपपादयति—अनृतजडविरोधीति। देहादिवस्तु विनाशित्वेन

प्रकाश्यत्वेन चानृतं जडं चेत्यविवादं जडं च पराधीनप्रकाशमित्यप्यविवादं तत्र यदि देहाद्यतिरिक्तः सत्यप्रकाशस्वरूपः प्रत्यगात्मा न स्यात् कथं देहादिकमहमिति वा ममेदमिति वा प्रकाशेत ततो देहाद्यतिरिक्तः सत्यप्रकाशात्मा प्रत्यङ्ङभ्युपगन्तव्यः तदिदमुक्तं विरोधीति। विलक्षणमिति यावत् । यदुक्तं ब्रह्मणः प्रतिपत्तृस्वरूपत्वं प्रतिपत्तुश्च कर्तृत्वादिराहित्यं तत्रोभयत्रापि युक्तिमाह-अन्तत्रयमलवन्धनदुःखताविरुद्धमिति। अन्तत्रयविरुद्धं मलबधनदुःखिताविरुद्धं चेत्यर्थः। अन्तत्रयविरुद्धमिति ब्रह्मणः प्रतिपत्तृस्वरूपत्वे हेतुः । अन्तत्रयं देशतः कालतो वस्तुतश्च परिच्छेदः तद्विरुद्धं तद्रहितं ब्रह्म यदि ब्रह्मातिरिक्तं किञ्चित्स्यात् तदानवच्छिन्नमहत्त्वाभावात् ब्रह्म ब्रह्म स्यादयतो वस्तुतोऽपि परिच्छेदाभावाद्ब्रह्मणः प्रतिपत्तृस्वरूपत्वमित्यर्थः मलवन्धनदुःखताविरुद्धमिति प्रतिपत्तुः कर्तृत्वादिराहित्ये युक्तिः मलं रागद्वेषादिस्वरूपसाध्यविरोधित्वात्। वन्धनं धर्माधर्मौ कर्तृत्वस्य तन्मूलत्वात्। दुःखता दुःखित्वं भोक्तृत्वमितियावत् । एतत्त्रयविरोधिनिर्गुणचैतन्यैकरसासङ्गानन्दस्वरूपमित्यर्थः॥

अयम्भावः रागद्वेषधर्माधर्मभोक्तृत्वाध्यासाः परस्परनिमित्ता अनुवर्त्तन्ते तत्र यदि प्रत्यगात्मा तेषामन्यतमेनापि विकलः तदा कर्त्तापि न भवेत् त्यक्स्वरूपं च परमप्रेमास्पदतयानन्दस्वरूपं न भोक्ता भवतीति न तत्प्रयोज्यकर्तृत्वादिविकारवदिति। तदेवं परमपदमभिष्टवीमीत्यनेन तत्त्वमसि वाक्यार्थो ब्रह्मात्मैक्यलक्षणविषयो दर्शितः। अतिनिकटमविक्रियमिति पदाभ्यां वाक्यार्थप्रतिपत्त्युपयोगितया शोधितौ तत्त्वंपदार्थौ दर्शितौ। अनृतेत्यनेन शोधितपदार्थद्वयोपपादनपरेण प्रपञ्चस्यानित्यत्वादिनानर्थत्वं सूचयतानर्थनिवृत्तिः प्रयोजनमित्युक्तम् । अन्तत्रयेत्यानेन ब्रह्मणो दुःखविरोधितयानन्दस्वरूपत्वं सूचयतानन्दावाप्तिलक्षणं प्रयोजनं च दर्शितम्। अर्थाच्च सत्यज्ञानानन्दात्मकं ब्रह्मेति तत्स्वरूपलक्षणं सत्यादिवाक्यं च तस्मिन् प्रमाणमित्युक्तमिति ॥ १ ॥

ननु ब्रह्मात्मनोरैक्यं न संभवति ब्रह्मणः श्रुत्यवगतकार्यभाव-वास्तवव्योमादिजगत्परिणामित्वात् जीवस्य च वस्तुतो धर्माधर्मकर्तृत्वेन तद्विरुद्धधर्मत्वात् न ब्रह्मव्यतिरिक्तं व्योमादिपरिणामि संभवति । तथाहि न तावत् परमाणवो व्योमादिपरिणामिनः तेषां सत्त्वे मानाभावात् । नापि धर्माधर्मौ तत्परिणामिनौ तयोर्गुणत्वेन द्रव्यपरिणामायोगात् । नापि जीवस्तत्परिणामी तस्यासर्वज्ञस्यासर्वशक्तेः विचित्रसकलकार्यपरिणामानुपपत्तेः । नापि प्रधानं तत्परिणामि तस्यापि जडतया सर्वज्ञत्वाभावेन विचित्रकार्यपरिणामित्वासंभवात् । नापि शून्यं तत्परिणामि तस्य निस्तत्त्वेन कारणत्वस्यैवासंभवात् । नापि स्वभाववादः अन्वयव्यतिरेकाभ्यां कार्यकारणभावस्यानुभूयमानत्वात् । ततः परिशेषाद्ब्रह्मैव तत्परिणामीति वक्तव्यम् । सूत्रकारोऽपि 'आत्मकृतेः परिणामात्' इति परमात्मा व्योमादिपरिणामीत्यसूसुचत् । श्रुतिरपि 'सच्च त्यच्चाभवत्' इति तथैवाह । न च सत्यप्रकाशस्य ब्रह्मणोऽनृतजडजगदाकारेण परिणामो न संभवतीति यतो न 'परिणामि वस्तु सजातीयाकारेणैव परिणमत' इति नियमोऽस्ति द्रव्यस्यापि गुणाकारेण परिणामदर्शनात् । किञ्च यदीश्वरो जगत्कारणं न स्यात् तदा तस्येश्वरत्वमेव न स्यात् । ऐश्वर्याभावे तत्त्वानुपपत्तेः । एवं जीवोऽपि यदि वस्तुतो धर्माधर्मकर्ता न भवेत् तदा सुखित्वदुःखित्वादिलक्षणवास्तवजगद्वैचित्र्यं न स्यात् । तथा च कथं वास्तवविरुद्धधर्मयोर्ब्रह्मात्मनोरैक्यं संभवतीतीमामाशङ्कां परिहर्तुमाह—

**स्वाज्ञानकल्पितजगत्परमेश्वरत्व-**

**जीवत्वभेदकलुषीकृतभूमभावा ।**

**स्वाभाविकस्वमहिमस्थितिरस्तमोहा**

**प्रत्यक्चितिर्विजयते भुवनैकयोनिः ॥२॥**

स्वाज्ञानकल्पितेति। प्रत्यक्चितिर्विजयत इति सम्बन्धः। यदुक्तं ब्रह्मैव जगदाकारेण परिणमत इति तन्निराकर्त्तुं तां विशिनष्टि स्वाज्ञानेति। स्वस्याः प्रत्यक्चितेर्यदज्ञानमनादिभावत्वे सति ज्ञाननिवर्त्यत्वलक्षणं तेन कल्पितानि यानि जगत्परमेश्वरत्वजीवत्वानि जगद्रूप परमेश्वरादिधर्मिणोऽप्यध्यास इति ज्ञापनाय भावोक्तिः। तान्येव भिद्यन्ते इति भेदाः तेषां भेदाश्चेति वा तैः कलुषीकृतः स्वरूपतोऽगृह्यमाणो विपरीततया च गृह्यमाणो भूमभावोऽन्तत्रयाभावोपलक्षितं स्वरूपं यस्या इत्यर्थः। अयम्भावः-ब्रह्म न वस्तुतो जगदाकारेण परिणमते पूर्वरूपे स्थिते नष्टे वाऽन्यस्य सतो वस्तुतोऽन्यात्मतानुपपत्तेः। न च निरवयवस्य स्वतः परतो वा सावयवाकारेण परिणामः संभवति। नापि निर्गुणस्य ब्रह्मणो जगत्परिणामित्वे किञ्चित्प्रमाणमस्ति। न तावत्परिशेषस्तत्र प्रमाणम् अविद्याशबलितस्य ब्रह्मणस्तत्संभवेन परिशेषाभावात्। न च वियदादिप्रपञ्चो वास्तव इति वक्ष्यति। नाप्युदाहृतसूत्रं श्रुतिर्वा तत्प्रमाणम्। तयोरन्यथाभावमात्रपरत्वेन ब्रह्मणो वास्तवजगदाकारपरिणामित्वपरत्वाभावात्, अन्यथाभावस्य च विवर्त्तेऽप्युपपत्तेः। सूत्रकारश्च सावयवत्वादिप्रसङ्गेन ब्रह्मणः परिणामं निराकृत्य 'आत्मनि चैवं विचित्राश्च हि'इति विवर्त्तवादमेवाङ्गीचकार। यच्चोक्तं ब्रह्मणो जगत्कारणत्वाभावे तस्यैश्वर्याभावेनेश्वरत्वमेव न स्यादिति तदपि न तस्य वस्तुतो जगत्कारणत्वाभावेऽप्यज्ञानोपाधिना तत्कारणत्वाङ्गीकारेणैश्वर्यस्य विद्यमानत्वान्न हीश्वरत्वं वास्तवं येन वास्तवमैश्वर्यमपेक्ष्येत एतदभिप्रायेण परमेश्वरत्वस्य कल्पितत्वमभिहितम्। यदपि जीवस्य कर्तृत्वाभावे धर्माद्यभावेन सुखादिवैचित्र्यानुपपत्तिरिति तदप्यत एव निरस्तम्। तस्य वास्तवकर्तृत्वाभावेपि देहाद्युपाधिप्रयुक्ततत्कर्तृत्वाङ्गीकारादत एव जीवत्वस्यापि कल्पितत्वमुक्तम्। तथा च ब्रह्मात्मनोर्वास्तवविरुद्धधर्माभावान्नैक्यानुपपत्तिरिति। ननु विवर्त्तवादाङ्गीकारेपि ब्रह्मणो नाविक्रियत्वमन्यथाभावस्य तत्रापि सत्त्वादित्याशङ्क्याह-स्वाभाविकेति।

स्वाभाविके अनन्यनिमित्ते स्वमहिमनि अनवच्छिन्नकूटस्थानुभवात्मके विपरीतग्रहणकालेऽपि स्थितिरवस्थानं यस्याः सा तथोक्ता। तथा च न वस्तुतोऽन्यथाभावो विवर्त्तः किन्त्वतत्त्वतोऽन्यथाभाव एव। स च न ब्रह्मणः कौटस्थ्यं विहन्ति आरोपितस्य तत्त्वाव्याहतत्वात्तथा च व्यवहारकालेऽपि स्वाभाविकस्वमहिमस्थितमेव ब्रह्माविद्यासचिवं रज्जुरिव सर्पाकारं जगदाकारं भजत इत्यर्थः। नन्वेवमपि ब्रह्मणोऽन्यस्याज्ञानस्य सत्त्वात्कथं तस्यान्तत्रयशून्यत्वं तत्राह-अस्तमोहेति। अस्तो निरस्तो मोहोऽविद्या यस्याः सा तथोक्ता। अज्ञानमपि न तत्त्वतो-ब्रह्मव्यतिरेकेणास्तीत्यर्थः। ब्रह्मणोऽज्ञानाश्रयत्वलक्षणाज्ञानसचिवत्वे भ्रान्तिरपि स्यादित्यत्र वाह-अस्तमोहेति। प्रतीतितोपि निराकृतो मोहो भ्रान्तिर्यस्याः सा तथोक्ता। अज्ञानाश्रयत्वेपि स्वाभाविकसर्वज्ञतया विशेषदर्शनसत्त्वान्न भ्रान्तिरित्यर्थः। नन्वविद्याया वस्तुतो ब्रह्मव्यतिरेकेणासत्त्वे आरोपितत्वेन वियदादिवत्कार्यत्वं वक्तव्यं तत्र यदि ब्रह्म निर्विशेषमेव तत्कारणं भवेत्तदा तस्य कौटस्थ्यं भज्येत, यद्यविद्यान्तरसचिवं तदा तत्राप्येवमित्यनवस्थापद्येत, ब्रह्मव्यतिरेकेण तत्सत्त्वे पूर्वोक्तान्तत्रयशून्यत्वभङ्ग इत्यत आह-भुवनैकयोनिरिति। भुवनस्य कार्यजातस्य एकस्यैव योनिः न त्वविद्यायाः तस्यानादित्वेन कार्यत्वाभावादित्यर्थः। न चारोपितत्वेन तस्या अपि कार्यत्वानुमानम् अनवस्थालक्षणप्रतिकूलतर्कपराहतत्वात्। यद्वा ब्रह्मणो ज्ञानाश्रयत्वे जगद्विवर्त्ताधिष्ठानत्वलक्षणं तत्कारणत्वं न स्यात्। अज्ञानानाश्रयस्यैव शुक्तिकाशकलादेरजताद्यधिष्ठानत्वदर्शनात्तत्सचिवस्य कारणत्वे जगत्कारणविषयमेकमेवेत्यवधारणं च विरुद्ध्येतेत्याशङ्क्याह-भुवनैकयोनिरिति। भुवनस्य ब्रह्म योनिरुपादानकारणं भवत्येव। तत्रापि तदेव कारणं नान्यदित्यर्थः। अयम्भावः—यदुक्तमज्ञानानाश्रयस्यैव लोके विभ्रमाधिष्ठानत्वमिति तन्न-तत्रापि शुक्त्यवच्छिन्नचैतन्यस्यैवाज्ञानाश्रयत्वादज्ञानाश्रयत्वे विद्यमानेप्यज्ञानविषयत्वेन तस्य रजताद्यधिष्ठानत्वाङ्गीकारे वा न तत्प्रकृते

दण्डवारितम् यदप्युक्तमविद्यासचिवस्य कारणत्वे कारणविपर्ययैकत्वावधारणं विरुध्येतेति तदपि न अविद्याया ब्रह्मण्यारोपितत्त्वेन तदनतिरेकादिति । एतादृशस्यापि ब्रह्मणः परोक्षत्वे अतिनिकटत्वमुक्तमसंभवीत्याशङ्क्योक्तं प्रत्यगिति । सर्वान्तरमित्यर्थः । अथवा-जीवपरभेदस्य लोकसिद्धत्वान्न तयोरभेद इति शङ्कां पराकर्त्तुमाह-स्वाज्ञानेत्यादि । स्वाज्ञानं तत्कल्पितं च यज्जगत्तदधीने ये ईश्वरत्वजीवत्वे तयोर्भेदः स्वाज्ञानकल्पितं प्रत्यगज्ञानोपाधिकमीश्वरत्वं गच्छति नश्यतीति जगत्कार्यकरणसंघातः । तदुपाधिकं जीवत्वमित्यर्थः । तथा च जीवेश्वरभेदप्रतीतेः । कल्पितभेदविषयत्वान्नैक्यानुपपत्तिरित्यर्थः । अत्र भुवनैकयोनिरिति ब्रह्मणस्तटस्थलक्षणमुक्तं प्रथमार्द्धेन तत्त्वंपदवाच्यौ दर्शितौ ॥ २ ॥

ननु ब्रह्मव्यतिरिक्तं सर्वमज्ञानकल्पितमित्यनुपपन्नं तथात्वे प्रमातृप्रमाणादेरपि कल्पिततया असत्यत्वेन ब्रह्मसिद्ध्यभावप्रसङ्गात् । न ह्यसत्येन प्रमाणेन किञ्चिद्वस्तु सेद्धुमर्हति । न हि विनैव वा मानं किञ्चिद्वस्तु सिध्यति मानाधीना मेयसिद्धिरिति परीक्षकैरङ्गीकारात्प्रमात्रादिसत्यत्वे च तस्य ज्ञाननिवर्त्यत्वानुपपत्तिः । वस्तुसतस्तदनुपपत्तेः । तथा च कथमनर्थनिवृत्तिलक्षणं प्रयोजनं सिध्यतीत्याशङ्क्य पराकरोति—

प्रत्यक्प्रमाणकमसत्यपराक्प्रभेदं
प्रक्षीणकारणविकारविभागमेकम् ।
चैतन्यमात्रपरमार्थनिजस्वभावं
प्रत्यञ्चमच्युतमहं प्रणतोऽस्मि नित्यम् ॥३॥

प्रत्यक्प्रमाणकमिति । अहमच्युतं नित्यं प्रणतोस्मीति योजना। अच्युतं सदा स्वमहिमप्रतिष्ठितं नित्यमिति भक्त्यतिशयद्योतनार्थमुक्तं पुनःपुनरित्यर्थः । उक्ताशङ्कानिवृत्तये तं विशिनष्टि प्रत्यगिति । प्रातिकूल्येन

परप्रकाश्यदेहादिविलक्षणत्वेन प्रकाशत इति प्रत्यक् स्वप्रकाशस्वरूप-चैतन्यमिति यावत् तदेव प्रमाणं यस्मिन्नच्युते तं तथा च जडस्य देहा-देर्मानं विना सिद्ध्यभावेऽपि ब्रह्म स्वयंप्रकाशत्वाद्विनापि मानं सिद्ध्यति, अन्यथा—दृश्यत्वेन रजतादिवन्मिथ्यात्वं स्यादिति भावः। ननु प्रमाणं विना ब्रह्मस्वरूपसिद्धावपि न तदध्यस्ताविद्यानिवृत्तिफल-काखण्डाकारवृत्तिलक्षणसिद्धिर्विना प्रमाणम्, अन्यथा वेदान्ततदु-पकारिसूत्रादिवैयर्थ्यप्रसङ्ग इति चेत्तत्र वक्तव्यं किं तादृशसिध्यर्थं प्रमाणादिमात्रमपेक्ष्यते उत वस्तुसत् प्रमाणादि। आद्योऽङ्गीक्रि-यत इत्याह—असत्यपराक्प्रभेदमिति। असत्यो मिथ्याभूतोऽत एव पराङ् स्वरू-पाद्बहिर्भूतः प्रभेदः प्रमात्रादिपदार्थो यस्मिन्स तथोक्तः। तथा च मिथ्याभूतप्रमातृप्रमाणादेः सत्त्वादविद्यानिवृत्तिफलकवृत्तिरूपा सिद्धिः सिध्यतीत्यर्थः। न चासत्यत्वे कार्यजनकत्वानुपपत्तिः। असत्यस्यापि रज्जुसर्पादेर्भयकम्पादिहेतुत्वदर्शनादिति भावः। न द्वितीय इत्याह—प्रक्षीणेति। प्रकर्षेण नितरां कालत्रयेऽपि वस्तुतः क्षीणोऽविद्यमानः कार-णविकारविभागः प्रमातृप्रमाणप्रमितिविभागो यस्मिन्। अत्र हेतुःएकमिति यतो ब्रह्मैकमेव तत्त्वमिति वेदान्तैः सिद्धमुपपन्नं च ततः प्रमाणादिवि-भागो अवास्तव इत्यर्थः। अथवा 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्प-श्येत्' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'इत्यादिना प्रमात्रा-दिविभागस्याविद्यकत्वप्रतिपादनाद्वास्तवत्वनिषेधाच्च न प्रमात्रादिवि-भागो वास्तव इत्यभिप्रेत्य फलितमद्वयत्वं दर्शयति—एकमिति। सजाती-यविजातीयभेदशून्यमित्यर्थः। नन्वेवमपि ज्ञानानन्दादीनां ब्रह्मणश्च गुण-गुणिभावेन भेदस्य विद्यमानतया न भवदभिमतं मुख्यमानन्त्यं सिद्ध्य-तीत्याशङ्क्याह—चैतन्यमात्रेति। चैतन्यमेव परमार्थोऽबाधितो निजः स्वाभा-विकः स्वभावः स्वरूपं यस्य, चैतन्यमस्य स्वरूपमेव न तु नैयायिकाद्य-भिमतेश्वरस्येवाचेतनीभूतस्य चैतन्यं गुण इति एकधैवेत्यादिश्रुतेरिति मात्रचोऽर्थः सत्यानन्दादेरपि ज्ञानमात्रत्वान्न चैतन्यमात्रस्वरूपत्वं ब्रह्म-

णोऽस्मन्मतविरुद्धं तथा च मुख्यमानन्त्यं सिद्धमित्यर्थः। अविद्यादशायां ब्रह्मणः सविशेषरूपत्वेन मात्रचो बाधमाशङ्क्योक्तं परमार्थेति। चैतन्यमेव परमार्थस्वरूपमितरत्त्वाविद्यकमित्यर्थः । आविद्यकसर्वज्ञत्वादिवच्चैतन्यस्याप्यागन्तुकत्वमाशङ्क्योक्तं निजेति। आविद्यकत्वे चैतन्यस्य कल्पितत्वेन न परमार्थत्वं स्यादिति भावः। एतादृशस्यापि तादृस्थ्येनैकत्वमनुपपन्नमित्याशङ्क्योक्तं प्रत्यञ्चामिति। प्रातिकूल्येन पराग्देहादिवैलक्षण्येन विषयव्यावृत्ताक्षस्यान्तरञ्चति गच्छति वेति प्रत्यङ् सर्वान्तर इत्यर्थः। एवं प्रथमश्लोकोपदर्शितं ब्रह्मात्मैक्यलक्षणविषयमनर्थनिवृत्तिलक्षणं प्रयोजनं चाक्षिप्य श्लोकद्वयेन समर्थितमिति ॥ ३ ॥

एवं प्रकरणप्रतिपाद्यां परदेवतां नमस्कृत्य तल्लब्धविद्यः सन्वाचो वाग्देवतामूलत्वात्स्वस्य वाक्सिध्यर्थं वेदात्मिकां वाग्देवतां प्रणमति—

औत्पत्तिकी शक्तिरशेषवस्तु-
प्रकाशने कार्यवशेन यस्याः।
विज्ञायते विश्वविवर्तहेतो-
र्नमामि तां वाचमचिन्त्यशक्तिम् ॥४॥

औत्पत्तिकीति। विश्वविवर्तहेतोर्यस्या अशेषवस्तुप्रकाशने औत्पत्तिकी शक्तिरस्तीति कार्यवशेन विज्ञायते अचिन्त्यशक्तिं तां नमामीति सम्बन्धः। वेदो हि सर्वार्थावद्योतकत्वात् भवति सर्ववस्तुप्रकाशनसमर्थः। तच्च सर्वार्थप्रकाशनं क्वचिल्लक्षणया क्वचित्साक्षाद्भवति। सा च शक्तिः सामर्थ्यं स्वभाविकी न सांकेतिकी अपौरुषेये वेदे पुरुषेच्छादेरभावादित्यौत्पत्तिकसूत्रे स्थितं तमिममर्थमाह—औत्पत्तिकीति। स्वाभाविकीत्यर्थः। शक्तेर्विषयमाह—अशेषेति। अशेषवस्तुप्रकाशनसामर्थ्यं कार्यलिङ्गकमनुमानमाह—कार्यवशेनेति। शक्तिर्हि कार्यैको

ज्ञेयधर्मः कार्यवशेन विज्ञातव्या अस्ति चाशेषवस्तुप्रकाशनसमर्थकार्यं सर्ववस्तुप्रकाशः न हि सोऽर्थोऽस्ति यो वेदेन साक्षाल्लक्षणया वा न बोधितः । तत्र हेतुः–विश्वविवर्त्तहेतोरिति । वेदो हि वेदपूर्विकां विश्वसृष्टिमाचष्टे 'एत (१) इति वै प्रजापतिर्देवानसृजत असृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः' इत्यादिना तत्र न हि तस्य साक्षाद्विश्वसृष्टिहेतुत्वं संभवति प्रमाणात्मकत्वात् किन्तु स्वार्थबोधनद्वारा लोके सृज्यमानं वस्तु स्ववाचकशब्देन ज्ञायमानं क्रियत इति प्रसिद्धं तथा च ब्रह्माभिन्नविश्वविवर्त्तहेतुविश्वविषयज्ञानजनकत्वेन वेदस्याशेषवस्तुप्रकाशनसामर्थ्यं सिद्धमित्यर्थः । नन्वेतादृशी शक्तिरन्यत्र शब्दस्यादृष्टचरीत्याशङ्क्याह–अचिन्त्यशक्तिमिति । अदृष्टान्तसिद्धस्वभावशक्तिमित्यर्थः । न हि अन्यत्रादृष्टत्वमात्रेण प्रमाणसिद्धा शक्तिर्नेति शक्यं वक्तुमिति भावः । अत्र चार्थाद्वेदान्तानां ब्रह्मणि प्रामाण्यं संभावितम् ॥४॥

एवं नमस्कारव्याजेन प्रमाणे प्रमेये चाद्वितीयवस्तुनि सम्भाविते पुनरपि विघ्नो मे माभूदिति विघ्ननिराससमर्थं विघ्नेश्वरं स्तौति—

**प्रारम्भाः फलिनः प्रसन्नहृदयो यश्चेत्तिरश्चामपि**
**नो चेद्विश्वसृजोऽप्यलं विफलतामायान्त्युपायोद्यमाः ।**
**विश्वैश्वर्यमतो निरङ्कुशमभूद्यस्यैव विश्वप्रभोः**
**सोऽयं विश्वहिते रतो विजयते विघ्नेश्वरो विश्वकृत् ॥५॥**

---

(१) एते इतिपदं सर्वनामत्वाद् देवानां स्मारकम्, असृग्रुधिरं तत्प्रधाने देहे रमन्ते इति असृग्रा मनुष्याः, चन्द्रस्थानां पितॄणामिन्दुशब्दः स्मारकः पवित्रं सोमं स्वान्तस्तिरस्कुर्वतां ग्रहाणां तिरः पवित्रशब्दः स्मारकः, ऋचोऽनुवर्तां स्तोत्राणां गीतिरूपाणामाशुशब्दः स्मारकः, स्तोत्रानन्तरं प्रयोगं विशतां शस्त्राणां विश्वशब्दः स्मारकः, व्यापिवस्तुवाच्यभिशब्दसंयुक्तः सौभगेतिशब्दः अन्यासां प्रजानां स्मारकः, तथा च तेन तेन पदेन देवादीन् स्मृत्वा प्रजापतिः सृष्टवानित्यर्थः ।

प्रारम्भा इति । यः प्रसन्नहृदयश्चेत्तिरश्चामर्वाचीनानामपि प्राणिनां प्रारम्भाः प्रवृत्तयः फलिनः प्रयोजनवन्तो भवन्ति नो चेत्प्रसन्नहृदयो न चेत् विश्वसृजो ब्रह्मणोऽप्युपायोद्यमाः साधनविषयप्रवृत्तयः अलमत्यर्थं विफलतामायान्ति प्राप्नुवन्ति । अतो यस्यैव विश्वप्रभोर्विश्वैश्वर्यं विश्वविषयनिग्रहादिकं निरङ्कुशमप्रतिहतमभूद्विश्वकर्त्ता विश्वहिते रतो विश्वपालकः तत्संहर्त्ता च ब्रह्मविष्णुरुद्रात्मक इत्यर्थः । सोऽयं श्रुतिलोकप्रसिद्धो विघ्नेश्वरो विघ्ननिग्रहसमर्थः विजयते सर्वोत्कर्षेण वर्तत इत्यर्थः। अनेन स्वकृतनमस्कारस्य फलवत्त्वं सूचितम्॥५॥

एवं देवतावर्गं नमस्कृत्य गुरुप्रसादात्परमात्मलाभ इत्यादिना गुरुप्रसादस्य सकलपुरुषार्थहेतुत्वसिद्धेः 'शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन' इति देवताभ्यो गुर्वाधिक्यप्रतिपादनाच्च गुरुवर्गं महीकुर्वन्नादौ प्रथमं गुरुं व्यासं पूजयति—

**वाग्विस्तरा यस्य बृहत्तरङ्गा**
**वेलातटं वस्तुनि तत्त्वबोधः ।**
**रत्नानि तर्कप्रसरप्रकाराः**
**पुनात्वसौ व्यासपयोनिधिर्नः ॥ ६ ॥**

वाग्विस्तरा इति । असौ व्यासपयोनिधिर्नः पुनातु शुद्धीकरोत्विति सम्बन्धः । व्यासस्य पयोनिधिसाम्यमाह-यस्य वाग्विस्तरा वागुपन्यासा एव बृहत्तरङ्गाः समुद्रतरङ्गवदनायासेनानवरतं प्रवर्त्तमानत्वाद्विविधभङ्गित्वाच्च तरङ्गाः बृहदर्थविषयत्वाच्च बृहन्तः। वेलातटं समुद्रतीरप्रान्तदेशः। वस्तुनि तत्त्वबोधो ब्रह्मविषयमपरोक्षज्ञानं तरङ्गभूतवाग्विस्तराणां तत्त्वबोधावसानत्वात्प्रसिद्धतरङ्गाणां च वेलातटपर्यवसायित्वात्तद्बोधस्य वेलातटसाधर्म्यम् । तर्कप्रसरप्रकाराः समन्वयादिनिरूपणाय तर्कोपन्यासविधाः उपन्यस्यमानतर्का इति यावत् रत्न-

च्छिष्याणामभिमतार्थप्रकाशकत्वाद्धितकरत्वाच्च तर्काणां रत्नसाम्यं, समुद्रवद्गभीरगुणत्वाद् व्यास एव पयोनिधिः । पुनात्वित्यनेन शुद्धिकरत्वं च पयोनिधिसाम्यं ध्वनितम् ॥ ६ ॥

इदानीं यदीयभाष्यार्थावगतये स्वयं ग्रन्थं करोति तं भाष्यकर्तारं प्रणमति—

वक्तारमासाद्य यमेव नित्या
सरस्वती स्वार्थसमन्विताऽऽसीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का
नमामि तं शंकरमर्चिताङ्घ्रिम् ॥७॥

वक्तारमिति । नित्या वेदलक्षणा सरस्वती यमेव वक्तारं प्राप्य निरस्तदुस्तर्ककलङ्कपङ्का सती निरस्तो दुस्तर्काख्यः कलङ्कः मालिन्यं तद्धेतुः पङ्कः कुत्सितपङ्को वा यस्याः, स्वार्थसमन्विता अद्वितीयब्रह्मलक्षणस्वार्थसहिताऽऽसीत्तमर्चिताङ्घ्रिं शंकरं नमामीत्यर्थः । अन्यैर्हि व्युत्पाद्यमाना सरस्वती दुस्तर्ककलङ्कपङ्कानुलिप्ताक्षणी (क्षी) सती जात्यन्ध इव पुरस्थितमपि रत्नजातं स्वार्थं न गृह्णाति । यद्यपि वैयासिकी गौरद्वैतब्रह्मविषया सती स्वार्थसमन्विता भवति तथापि गूढार्थतया भेदवादिव्याधैर्दुस्तर्कनिशितमार्गणैर्हन्यमाना भाष्यकारं रक्षितारं विना शर्म न लभते । यद्यपि भट्टाचार्यप्रभृतिरपि वेदो व्याख्यात एव तथापि न तत्प्रदर्शितार्थो वेदस्य विवक्षितार्थो भवति न वा तैः सर्वो वेदो व्याख्यातः वेदान्तानामव्याकृतत्वात्प्रत्युत तैरुपचरितार्थत्ववर्णनेन बाधिता एव वेदान्ताः । नन्वाचार्यैरपि कर्मकाण्डो न व्याकृत इति चेन्न विविदिषावाक्यव्याख्यानेनैव तस्यापि व्याख्यातत्वात् । अत एव भाष्यकाराणां वैदिकशिरोमणिप्रसिद्धिः सर्वज्ञतया भगवत्पादत्वप्रसिद्धिश्च तदेतत्सर्वमभिप्रेत्योक्तं - यमेवेति । आचार्यमेवाश्रित्य स्वार्थसमन्विता नान्यमाश्रित्येत्यर्थः ॥ ७ ॥

इदानीं गुरुचरणारविन्दरजो महीकुर्वन् स्वगुरुमतिमहीकरोति-

यदीयसम्पर्कमवाप्य केवलं
वयं कृतार्था निरवद्यकीर्त्तयः ।
जगत्सु ते तारितशिष्यपङ्क्तयो
जयन्ति देवेश्वरपादरेणवः ॥८॥

यदीयेति । येषां देवेश्वराख्यश्रीगुरुचरणारविन्दरजसां संपर्कं केवलं शुश्रूषादिमकृत्वापि प्राप्य वयं कृतार्थाः साक्षात्कृतात्मानः निरवद्यकीर्त्तयोऽनुपमव्याख्यानादिना निर्दुष्टयशसश्चाभूम तारितशिष्यपङ्क्तयः संसारसागरादुत्तारितशिष्यराशयस्ते देवेश्वरपादरेणवो जयन्तीत्यर्थः ॥ ८ ॥

तदेवं श्रीगुरुचरणारविन्दरजोमहिमकीर्त्तनद्वारा किमु वक्तव्यन्यायेन गुरुप्रभावस्यातिशयो दर्शितः, गुरुचरणप्रभावप्रख्यापनशेषतयाप्यात्मनः कृतार्थत्वादिकीर्त्तनादात्मनोऽहंकाराविर्भावमतिर्जातेति तामुपशमयति—

गुरुचरणसरोजसंनिधाना-
दपि वयमस्य गुणैकलेशभाजः ।
अपि महति जलार्णवे निमग्नाः
सलिलमुपाददते मितं हि मीनाः ॥९॥

गुरुचरणेति । अस्य गुरुचरणस्य गुणस्य एकलेशो लेशादपि लेशः अत्यल्प इति यावत् तं भजन्त इति तथोक्ताः । अपि शब्देनास्य गुरुचरणस्य शिष्येभ्यः सकलगुणाधानसामर्थ्येऽप्यस्माकं तद्भजने सामर्थ्यं नास्तीति द्योतितं नित्यं महत्सन्निधानेपि स्वसामर्थ्यानुरोधेन गुणैकदेशभजने लोकप्रसिद्धं दृष्टान्तमाह—अपि महतीत्यादिना । निमग्ना

अपीति सम्बन्धः उपाददते गृह्णन्ति मितमल्पं हि: प्रसिद्धयर्थः ॥ ९ ॥

गुरोरेकदेशभाक्त्वे सकलशास्त्रार्थदर्शित्वाभावादुच्चतरगिरिशिखरस्थतरुशाखाग्रावलम्बिफलप्रेप्सया पङ्गुप्रवृत्तिरिव ग्रन्थकरणप्रवृत्तिर्न शोभत इत्याशङ्क्य स्वतः सामर्थ्याभावेपि सर्वज्ञश्रीगुरुचरणनिकटनिवासमहिम्नैव ग्रहग्रस्तवत्कथं चित् ग्रन्थं कर्त्तुं शक्नोमीत्याह—

**शक्तो गुरोश्चरणयोर्निकटे निवासा-**

**न्नारायणस्मरणतश्च निरन्तरायः ।**

**शारीरकार्थविषयावगतिप्रधानं**

**संक्षेपतः प्रकरणं करवाणि हृष्यन् ॥१०॥**

शक्तो गुरोरिति । ननु गुरुचरणसन्निधानाच्छक्तस्यापि विघ्नबाहुल्यसंभवान्न ग्रन्थकरणं संभवतीत्याशङ्क्यानुष्ठिततत्त्वानुस्मरणसंजातविघ्नध्वंसवत्त्वमात्मनो दर्शयति—नारायणेति । निर्गतस्तिरस्कृतोऽन्तरायो विघ्नो यस्य स निरन्तरायः । एवं स्वेष्टदेवतागुरुनमस्कारसम्पन्ननिष्प्रत्यूहग्रन्थकरणसामर्थ्य आचार्यश्चिकीर्षितं प्रतिजानीते— प्रकरणं करवाणीति । शास्त्रप्रतिपाद्यसगुणविद्यादेः प्रायशो निरूपणात्कार्यान्तरस्य चाध्यासादिसपरिकरनिरूपणस्य सत्त्वादिदं प्रकरणं प्रकरणस्यावान्तरप्रयोजनं दर्शयति—शारीरकेति । शरीरे स्थूलसूक्ष्मकारणरूपे भवः प्रतिबिम्बितश्चिद्धातुः शारीरः शारीर एव शारीरकस्तत्प्रतिपादको ग्रन्थोपि शारीरक इत्युच्यते, श्रीमद्भाष्यमित्यर्थः । तस्यार्थः—प्रत्यग्ब्रह्मैक्यं, स एव विषयो यस्या अवगतेरनुभवस्य सा प्रधानं मुख्यतः कार्यं यस्य तत्तथोक्तं शारीकार्थावगतिः शारीरकेणैव भविष्यति किमनेनेत्याशङ्क्योक्तम्—अवगतिप्रधानमिति । शारीरके हि परपक्षनिराकरणप्राधान्येन विचारान्तरपूर्वकं च ब्रह्म प्रतिपाद्यते । अत्र तु परपक्षनिराकरणमल्पीकृत्य विचारान्तरं चाकृत्वा प्राधान्येन त्वमहमादि-

शब्दैर्ब्रह्मपदसमभिव्याहारेण च शारीरकस्य विवक्षितार्थो ब्रह्मैव प्रतिपाद्यत इति स्पष्टावगतिरतो भवतीति ग्रन्थोऽयमर्थवानित्यर्थः। प्रयोजनान्तरमप्याह—संक्षेपतः। शब्दस्यैव संक्षेपो न तु मीमांसाया विवक्षितः। तथा च शारीरकस्य ग्रन्थतो विस्तृतत्वान्मुमुक्षूणामलसानां तत्त्वसाक्षात्कारसंपादने त्वरावतां च प्रवृत्तिर्न स्यात् अत्र तु तेषामपि प्रवृत्तिरित्यस्त्येव प्रयोजनमित्यर्थः। संक्षेपतः शारीरकेत्यादिना—अर्थादस्य ग्रन्थस्य संक्षेपशारीरक इति संज्ञा दर्शिता। ग्रन्थकरणं च न राजादिनिर्बन्धेनेत्याह—हृष्यन्निति। देवतागुरुप्रसादादिसंपादितसामर्थ्यादिमत्त्वात्संतुष्ट एवाहं करोमीत्यर्थः। शक्तो गुरोरित्यादिनास्य ग्रन्थस्य सम्प्रदायमूलत्वं सूचितम्। शारीरकार्थेत्यादिना समूलत्वं सूचितम्। अवगतीत्यादिना मूलशास्त्रादुत्कर्षश्च दर्शितः। तथा च नेयं कृतिः स्वकपोलकल्पिता, न च निर्मूला, न वा निष्प्रयोजनेति भावः॥ १०॥

इदानीं स्वकृतग्रन्थस्य सकलविद्वत्परीक्षणप्रार्थनद्वारा शब्दतोऽर्थतश्च निर्दुष्टत्वं दर्शयति—

पदवाक्यमाननिपुणा निपुणं
विमृशन्त्विदं प्रकरणं मनसा।
गुणदोषनिर्णयनिमित्ततया
प्रथिता हि पण्डितजना जगति ॥११॥

पदवाक्येति। पदवाक्यमानेषु तद्विषयव्याकरणमीमांसान्यायशास्त्रेषु निपुणाः प्रवीणाः वैयाकरणमीमांसकनैयायिकाः मनसा बुद्धिपूर्वकं सावधानेन इदं प्रकरणं निपुणं सम्यग्विमृशन्तु-विचारयन्तु। ननु भवत्कृते किमस्मत्कृत्यमिति चेन्नेत्याह-गुणदोषेति। हि यतः गुणदोषयोर्निश्चयहेतुत्वेन भूमौ विद्वांसः प्रसिद्धा इत्यर्थः॥ ११॥

ननु विद्वद्भिर्विमर्शितेऽपि ग्रन्थे तव दुःखं भविष्यतीति दोषो नोद्धा-

ध्येत, अतः कथं ग्रन्थस्य शुद्धिरित्याशङ्क्याह—

**विद्वांसो यदि मम दोषमुद्गिरेयुः**

**यद्वा ते गुणगणमेव कीर्तयेयुः**

**तुल्यं तद्बहु मनुते मनो मदीयं**

**कष्टं तद्बत मनुते यदाह मन्दः ॥१२॥**

विद्वांस इति । मम दोषं मद्ग्रन्थे दोषं ग्रन्थदोषस्य कर्तृदोषपूर्वकत्वान्ममेत्युक्तम् उद्गिरेयुः विद्वांसो मद्ग्रन्थे गुणगणं दोषं वा यदि वर्णयेयुः तदा विद्वत्कृतदोषवर्णनस्यापि ग्रन्थशोधनाङ्गत्वात्तद्गुणगणवर्णनेन सह तुल्यं यथा भवति तथा मम मनो बहु मनुते समीचीनं मनुत इत्यर्थः । तर्हि मत्सरग्रस्तविद्वदुद्भावितदोषस्य शुद्ध्यनङ्गत्वेन त्वद्ग्रन्थो दुष्टः स्यात्तत्राह-कष्टमित्यादिना । मन्दशब्देन मत्सरग्रस्तविद्वदाभास उच्यते । बतेत्यनादरे मन्दो गुणं दोषं वा वदतु नाम न तेनास्मद्ग्रन्थस्य भूषणं दूषणं वा भवति । अतोऽस्माकं तत्र नास्थेत्यर्थः । अयम्भावः विद्वांसो हि यथार्थवादिनस्ततस्तेऽत्र न वदिष्यन्त्येव दोषं विद्वन्मन्यैस्त्वसत्यवादिभिर्गुणदोषाभिधानेपि नादरः, तस्याकिञ्चित्करत्वादिति ॥ १२ ॥

महत्कृते ग्रन्थे मन्देन दोष उद्भाविते न केवलमनादरः किन्तु सूर्यमण्डलं हस्तेनाच्छादयितुं प्रवृत्तमूढवत् स शोच्योपीत्यभिप्रेत्याह—

**महामहिम्नामपि यश्चिकीर्षति**

**स्वभावसंशुद्धतरं तिरो यशः ।**

**स नूनमाच्छादयितुं प्रवर्तते**

**विवस्वतो हस्ततलेन मण्डलम ॥१३॥**

महामाहिम्नामिति। संशुद्धतरं अत्यन्तं शुद्धं यशस्तिरश्चिकीर्षति तिरोधानं कर्त्तुमिच्छतीत्यर्थः नूनमवश्यम्। एवं मुख्यावान्तरविषयप्रयोजनसद्भावात्प्रकरणमारब्धव्यमिति सिद्धम्॥ १३॥

ननु नेदं प्रकरणमारभ्यं तद्व्युत्पाद्यविचारस्य निष्प्रयोजनत्वात्-तथा हि—अविद्यानिवृत्तिरानन्दावाप्तिर्वा प्रयोजनं वक्तव्यं तदुभयमपि विचारस्य साक्षाद्वा प्रयोजनं तत्त्वज्ञानोत्पादनद्वारा वा, नाद्यः-अविद्यानिवृत्तेरात्मज्ञानैकसाध्यत्वादानन्दावाप्तेश्चात्मा ऽविद्यामात्रव्यवहितायास्तत्त्वज्ञानैकसाध्यत्वात्, ननु विचारस्यापि ज्ञानात्मकत्वाद्द्वितीयात्मविषयत्वाच्च तस्मात्साक्षादेवाविद्यानिवृत्तिः स्यादितिचेन्न—तस्य तर्करूपतया अप्रमाणत्वात्, ननु तर्करूपत्वेपि तस्य परमार्थब्रह्मविषयतया यथार्थत्वात्प्रामाण्यं स्यादिति चेन्न—एवमपि तर्कस्य प्रमाणोपकारकतया प्रमाणाङ्गस्य पृथक् फलवत्त्वानुपपत्तेः, प्रमाणाजन्यत्वेनाप्रमाणत्वात् केवलस्य तस्या ब्रह्मविषयत्वाच्च। द्वितीयेऽपि विचारस्य प्रमाणभूतवेदान्तसहकारित्वेन परोक्षज्ञानोत्पादनद्वारा अपरोक्षज्ञानोत्पादनद्वारा वा, नाद्यः-परोक्षज्ञानस्याविद्यानिवर्त्तकत्वाभावात्, बुभुत्सोच्छेदकं हि ज्ञानमविद्यां निवर्त्तयति, न च परोक्षज्ञानं बुभुत्सां निवर्त्तयति शब्दतः प्रतिपन्नेऽपि पदार्थे कीदृशः स इति प्रतिपन्नविषयमात्र एव बुभुत्सादर्शनात्, ननु धर्मादौ ज्ञाने बुभुत्साया अदर्शनात्तद्विषयं परोक्षज्ञानमज्ञानं निवर्त्तयेदिति चेन्न-तत्र ह्यपरोक्षबुभुत्साया अनुदयो न परोक्षज्ञानमहिम्ना किन्तु तस्यापरोक्षविषयत्वायोग्यत्वनिश्चयादन्यथा स्वर्गादावप्यपरोक्षबुभुत्साया अनुदयप्रङ्गात्, न हि स्वर्गापूर्वविषयपरोक्षज्ञाने कश्चिद्विशेषोऽस्ति, अपरोक्षज्ञाने सति तु न कस्यचिदपि बुभुत्सा अनाहार्या दृश्यते तत्कस्य हेतोः, बुभुत्साकारणाज्ञानाभावादिति ब्रूमः, अनुभवन्ति च परोक्षज्ञाने सत्यपि तद्विषयमज्ञानं एवमयमाहाहं तु न वेद्मीति, नचैवमपरोक्षज्ञानेप्यज्ञानानुभवोऽस्ति, तस्मान्न परोक्षज्ञानमविद्यानिवर्तकमिति। वेदान्ता-

नामपरोक्षज्ञानजनकत्वस्वीकाराच्च न द्वितीयः, विचारात्प्रागपि वेदान्त वाक्यादेव केवलात्तदुत्पत्तेर्विचारस्य तत्फलवत्त्वानुपपत्तेः। ननु विचारानन्तरं तत्सहकृतादेव वेदान्तादपरोक्षज्ञानं जायते न प्रागिति-चेत्तर्हि प्राग्वेदान्तानां परोक्षज्ञानजनकत्वेऽप्रामाण्यप्रसङ्गः, अपरोक्षे ब्रह्मणि परोक्षज्ञानस्य विषयविरुद्धाकारत्वात्। अथविचारात्पूर्वं परोक्ष-ज्ञानजनकत्वेऽपि न वेदान्ताप्रामाण्यप्रसङ्गः, शब्दप्रमाणस्वभावादपरो-क्षे ब्रह्मणि अपरोक्षमिति जायमानस्य परोक्षत्वेऽप्यतस्मिँस्तद्बुद्धित्वा-भावात्, न च वेदान्तस्य परोक्षज्ञानजननस्वभावत्वे विचारानन्तरमप्य-परोक्षज्ञानजनकत्वं न स्यादिति वाच्यम्—स्मृत्येकजनकसंस्कारस्य संनिहितमात्रविषयज्ञानजनकचक्षुषश्च परस्परसहकारिबलात्प्रत्यभि-ज्ञानजनकत्ववदुपपत्तेरितिचेन्न—विचारसहकृतस्यैवापरोक्षबोधजनकत्वे वेदान्तानां सापेक्षत्वप्रसङ्गात्तस्माद्विचारस्य निष्प्रयोजनत्वात् तद्व्यु-त्पादकमिदं प्रकरणमनारभ्यमिति चेद् उच्यते—विचारात्प्रागेव वेदा-न्तादद्वितीयब्रह्मसाक्षात्कारोदयेऽपि प्रमाणप्रमेयासंभवनादिलक्षणपुरु-षापराधप्रतिबद्धतया स्वविषयप्रतिष्ठितत्वाभावादविद्यानिवर्तकत्वं न स्याद्विचारेण निवृत्ते तु प्रतिबन्धे स्वविषयप्रतिष्ठितोऽविद्यानिव-र्त्तको भवति, यथा तीव्रवायुनिवृत्त्या पूर्वकालीन एव दीपः स्वविष-यप्रकाशकः ततश्च विचारोऽसंभावनादिप्रतिबन्धनिवृत्तिद्वारा साक्षा-त्कारं स्वविषये प्रतिष्ठापयन्विषयप्रतिष्ठितसाक्षात्कारफलाविद्यानि-वृत्त्या फलवान् भवतीति तद्व्युत्पादकग्रन्थोऽपि फलवान्। नन्वसंभा-वना नामाभावसंभावनेति ब्रह्मभावाभावनिश्चयः विपरीतभावना च विरुद्धा भावनेति विपरीतरूपान्तरज्ञानं तदुभयमप्यपरोक्षतो ज्ञाते व-स्तुनि न संभवति विपर्ययादेर्ज्ञाननिवर्त्यत्वात्—ननु सामान्यतो ज्ञातेऽपि विशेषतो ज्ञातत्वाभावादसंभावनादि स्यादितिचेन्न—ब्रह्मणि सामा-न्यविशेषभावाभावात् नह्येकरसं वस्तु विचारात्पूर्वं वेदान्तैश्चैतन्याका-रेण ज्ञायते न त्वनवच्छिन्नानन्दाकारेणेति साधुवचनं विचारात्पूर्वं

वेदान्तजन्यमपि ज्ञानं नाविद्यां निवर्त्तयति, तस्यापातबोधरूपत्वा-दितिचेत् किमिदमापातबोधत्वं न तावत्सामान्यबोधरूपत्वमित्युक्तं नापि संशयविपर्ययान्यतरत्वमपौरुषेयवेदस्य तज्जनकत्वानुपपत्तेः। न च विचारात्पूर्वं वेदान्तादात्मज्ञानमेव नाभूदिति वाच्यम्, पूर्वोक्त-विरोधात्साङ्गमधीतस्य वेदस्य श्रोतरि स्वार्थप्रत्ययाधायकत्वनिय-माच्च अन्यथा—अबोधकतालक्षणाप्रमाण्यप्रसङ्गः। नन्वखण्डाकार-वृत्तिरेवाज्ञानसंशयनिवर्तिका सा च न विचारात्प्राक् श्रुतवाक्याद्भवति पदार्थज्ञानाभावात् न चावान्तरवाक्यार्थमालोचयतस्तादृग्बोधो भव-तीति वाच्यम् अवान्तरवाक्यार्थज्ञानस्य विचारफलत्वादितिचेन्न-सर्वे-षामपि गुरूपसदनस्यावश्यकत्वेन पिण्डीकृत्य गुरुणोपदिष्टपदार्थद्वय-ज्ञानमादाय श्रुतवाक्यात्तादृगाकारबोधोत्पत्तिनियमात् तथा च विचा-रात्पूर्वं यदि साङ्गमधीतो वेदान्तो न ब्रह्म बोधयेत्प्रमाणमेव न भवेद्यदि बोधयेद्विपर्ययात्मको संभावनादिर्न भवेदिति वेदान्तिनामुभयतः पाशाः रज्जुस्तस्मादसंभावनाद्यभावान्न तन्निवृत्त्यापि विचारोऽर्थवा-निति चेत्तत्रेदं भवान्पृष्टो व्याचष्टां किमसंभावनादिरेव नास्तीति ब्रवीति किं वा ज्ञाते वस्तुनि तत्कारणाभावेन सोऽनुपपन्न इति। न प्रथमः— साङ्गमधीतवेदान्तानामपि बहूनां ब्रह्माहमस्मि न वा नैवाहं ब्रह्मास्मि किन्तु कर्त्तैवेति संशयविपर्ययोरविचलमनुवर्त्तमानत्वात्। न द्वितीयः- अज्ञानादिसामग्र्याः सत्त्वात्। नन्वज्ञानमेवोदिते तत्त्वज्ञाने न संप्रति-पद्यते कुतस्ततोऽसंभवानादिरिति चेन्न अज्ञानस्यापि सर्वानुभवसिद्ध-त्वात्। नन्वनुभवसिद्धमपि तदनुपपन्नं ज्ञानाज्ञानयोर्विरोधादिति चेन्न—नह्यनुभवसिद्धेपि काचिदनुपपत्तिः, न वा कश्चिद्विरोधः। नन्वनुभवो भ्रान्तिरिति आयुष्मान् भव यतस्त्वमेवाज्ञानानुभव-भ्रान्तिमूलत्वेनावगतेपि तत्त्वे अज्ञानमङ्गीकुरुषे। ननु नाहं विप्रतिपन्नः किन्तु सुहृद्भावेन पृच्छामि कथमपौरुषेयवेदप्रमाणतो निश्चतेप्य-ज्ञानम्, एवं सति कथं वा पश्चात् ज्ञानेन तन्निवृत्तिरिति चेच्छृणु

तर्हि दर्शनरहस्यं विचारात्प्राङ्निर्दुष्टापौरुषेयवेदप्रमाणाज्जायमानमपि ब्रह्मापरोक्षज्ञानं जायमानावस्थायामेव विना विचारं प्रवर्त्तमानप्रबलतरस्वाभाविकानादिसिद्धकर्तृत्वादिभेदभ्रमवासनाभिरयथार्थत्वेनाभिमताभिरभिभूयमानं सत् स्वविषयप्रतिष्ठां न लभते । ततोऽर्थात्संशयरूपतां प्राप्नुवदविद्यानिवृत्तिक्षमं न भवति । भगवान्वशिष्ठोपि प्रबलवासनानामेव संसारहेतुत्वं दर्शयन्यावद्वासनादार्ढ्यं संसारं दर्शयति 'संसारवासनादार्ढ्यं बन्ध इत्यभिधीयत' इति निवृत्ते तु विचारेणासंभावनादौ तेनैव प्रमाणेन जायमानं ज्ञानमविद्यानिवृत्तिक्षमं भवति तथा चासंभावनादिनिवृत्तिद्वारा विचारस्यार्थवत्त्वात्तद्व्युत्पादकग्रन्थस्याप्यर्थवत्त्वात्प्रकरणमिदमारम्भणीयमिप्रेत्य तत्रादौ निर्दुष्टप्रमाणजन्यमपि ज्ञानमसंभावनादिप्रतिबन्धं सदकिञ्चित्करमित्येतत्सदृष्टान्तमाह—

पुरुषापराधमलिना धिषणा
निरवद्यचक्षुरुदयापि यथा ।
न फलाय भर्च्छुविषया भवति
श्रुतिसंभवापि तु तथात्मनि धीः ॥१४॥

पुरुषापराधेति । असम्भावनाविपरीतभावनयोः प्रमाणप्रमेयाधीनत्वाभावात्पूर्वपूर्वभेदभ्रमवासनालक्षणपुरुषदोषजन्यत्वाच्च पुरुषापराधत्वं धिषणायाः बुद्धेः पुरुषापराधकृतमालिन्यं च तदभिभवनिमित्तार्थिकसंशयात्मकत्वं फलमविद्यानिवृत्तिः । भर्च्छुर्नाम कश्चिद्राजपुरोहितो राज्ञोत्यन्तदयितो राजस्नेहवलादत्यन्तं दृप्त इतरान् राजकीयान् नित्यं द्वेष्टि तस्मिँश्च केनचिन्निमित्तेन पुरादपसृते अन्ये राजकीयालब्धावसरा भर्च्छुर्मृतो ब्रह्मराक्षसश्च बभूवेति राज्ञे निवेदयामासुः तन्मार्गं च निरोधयांचक्रुः राजा च चिरकालं भर्च्छुर्मृत इति भाव-

यांबभूव ततः कदाचिन्मरणभावनादृढभावितचित्तो राजा स्वकार्यार्थं निर्गतो मार्गेऽतिदीर्घकूर्चं राजविश्लेषेणातिकृशाङ्गं वृक्षादवरोहन्तं 'हे राजन् मामतिस्पर्द्धयैवेते तिरस्कृतवन्त' इति क्रोशन्तं भर्त्तुं निकटे विशेषतो दृष्ट्वापि तं ब्रह्मराक्षस इत्येव मेन इत्याभाणकप्रसिद्धिः। तथा च यथा प्रमाणजन्यापि भर्त्तुविषयाबुद्धिर्विपरीतभावनाभिभूता सती तद्विषयाविद्यानिवृत्तये न भवति न समर्था, तथा श्रुतिजन्यापि ब्रह्मविषया बुद्धिरसंभावनाद्यभिभूता अविद्यानिवृत्तये न पर्याप्तेत्यर्थः। भर्त्तुविषयज्ञानं कदापि फलाय न भवत्येव, आत्मविषयश्रौतज्ञानं तु कदाचित्फलवद् भवतीत्यात्मज्ञानस्य विशेषं तु शब्देनाह ॥ १४ ॥

कदा तर्हि फलवदात्मज्ञानमित्याकाङ्क्षायामाह—

पुरुषापराधविगमे तु पुनः
प्रतिबन्धकव्युदसनात्सफला।
मणिमन्त्रयोरपगमे तु यथा
सति पावकाद्भवति धूमलता ॥१५॥

पुरुषापराधविगमे तु पुनरिति। पुनः पश्चाद्विचारेण पुरुषापराधनिवृत्त्यनन्तरमात्मबुद्धिः सफला तत्र हेतुः-प्रतिबन्धकव्युदसनादिति। प्रतिबन्धकस्य निवृत्तत्वादित्यर्थः। समर्थादेव कारणात्प्रतिबन्धकवशेनापूर्वकार्यमनुपजनयतस्तद्विगमानन्तरं तस्मादेव कार्योत्पत्तौ दृष्टान्तमाह-मणीत्यादिना। दाहकशक्तिप्रतिबन्धकमणिमन्त्रयोरित्यर्थः। समानलिङ्गपदेन दृष्टान्तं वक्तुं धूमस्य लतात्ववर्णनम्। तु शब्दावधारणार्थौ। यथा प्रतिबन्धकनाशानन्तरं वह्नेर्धूमो भवत्येव तथा पुरुषापराधविगमे ब्रह्मसाक्षात्कारादविद्यानिवृत्तिर्भवत्येवेत्यर्थः ॥ १५ ॥

नन्वथातो धर्मजिज्ञासेति जैमिनिना धर्मज्ञानाय विचार इति सूचयता ज्ञानमेव विचारस्य प्रयोजनं विवक्षितमथातो ब्रह्मजिज्ञासेति

बादरायणेनापि भगवता ब्रह्मज्ञानमेव विचारप्रयोजनं सूचितं तद्भाष्यकारैरपि 'तस्माद् ब्रह्मजिज्ञासितव्यम्' इत्यादिना भाष्येण ब्रह्मज्ञानप्रयोजनस्तद्विचार इत्युक्तं तत्कथं प्रतिबन्धनिवृत्तिरेव तत्प्रयोजनमिति वर्ण्यते तत्राह—

पुरुषापराधविनिवृत्तिफलः
सकलो विचार इति वेदविदः ।
अनपेक्षतामनुपरुध्य गिरः
फलवद्भवेत्प्रकरणं नदतः ॥१६॥

पुरुषापराधेति । पुरुषापराधस्य विशेषेण निवृत्तिः फलं यस्य विचारस्य स तथोक्तः सकलोपि धर्मविचारो ब्रह्मविचारोपीत्यर्थः वेदविदः आहुरिति शेषः । उभयविधविचारोपि प्रतिबन्धकनिवृत्तिफलक इत्यत्र हेतुमाह—अनपेक्षतामिति । गिरो वेदस्यौत्पत्तिकसूत्रसिद्धानपेक्षत्वमनुपरुध्याबाधित्वा प्रतिबन्धनिवृत्तिरेव फलमित्याहुः । एवं हि सत्यनपेक्षता अबाधिता भवतीति भावः । ननु ब्रह्मायास्साध्यविचारस्य कथं प्रतिबन्धकनिवृत्तिमात्रं फलं वर्णयितुं युक्तम्, तस्याः स्वतोऽफलत्वान्मोक्षसाधनत्वाभावाच्च, न च विचारात्प्रतिबन्धनिवृत्तिः-ततस्तत्त्वज्ञानं ततो मोक्ष इति परम्परया फलवत्त्वमिति वाच्यम्, वेदस्य स्वार्थबोधने प्रतिबन्धनिवृत्त्यपेक्षायां सापेक्षत्वप्रसङ्गात्, भवन्मते प्रतिबन्धकाभावस्याकारणत्वाच्चेति चेत्तत्राह फलवदित्यादिना । यस्माद्वेदविदो वेदस्यानपेक्षतयैव विचारः प्रतिबन्धकनिवृत्तिफल इत्याहुः तत्तस्मादतो एतस्मादेव प्रतिबन्धकनिवृत्तिलक्षणात्फलादिदं प्रकरणं फलवद्भवेदित्यर्थः । अयम्भावः— न प्रतिबन्धनिवृत्तिस्तत्त्वज्ञानद्वाराविद्यानिवृत्तिफलिकेत्युच्यते येन वेदस्य सापेक्षता स्यात् किन्तूत्पन्ने तत्त्वज्ञाने तत्कार्याविद्यानिवृत्तिविरोधिपुरुषापराधविरोधितया

ऽविद्यानिवृत्तिप्रयोजिका । तथा च तस्याः स्वतोऽफलत्वेपि फलभूतमोक्षसाधनत्वाभावेप्यप्रतिबन्धसाक्षात्कारस्यैवाविद्यानिवर्तकतया प्रतिबन्धकनिवृत्तेरपि साक्षात्कारप्रयोजकत्वेन फलवत्त्वमिति ॥ १६ ॥

ननु पुरुषापराधनिवृत्तिरपि विचारेण न संभवति तस्यासंभावनादिलक्षणाविपर्ययज्ञानात्मनस्तत्त्वज्ञानं विना निवृत्त्यनुपपत्तेः, किञ्च पुरुषापराधानामनन्तत्वात्कथमल्पप्रकरणप्रतिपाद्यविचारेण निवृत्तिस्ततो निष्प्रयोजनत्वदोषस्तदवस्थ इत्याशङ्क्याह—

पुरुषापराधशतसंकुलता
विनिवर्तते प्रकरणेन गिरः ।
स्वयमेव वेदशिरसो वचना-
दथ बुद्धिरुद्भवति मुक्तिफला ॥१७॥

पुरुषापराधशतसंकुलतेति । संकुलता दार्ढ्यं यद्यपि पुरुषापराधस्य वासनातदुत्थभ्रान्तिज्ञानात्मकस्यात्यन्तिकी निवृत्तिस्तत्त्वज्ञानसाध्या तथापि तद्दार्ढ्यं विचाराख्यविरोधिप्रत्ययतदुत्थसंस्कारेण निवर्त्यते । अन्यथा तर्कमात्रस्याफलत्वप्रसङ्गात् । प्रमाणप्रमेयविषयाणां तत्त्वे संभवासंभवात्मकप्रत्ययस्तर्क इति लक्षणार्थश्च तदुक्तं टीकाकृद्भिः "प्रमाणशक्तिविषयतत्संभवासंभवात्मा प्रत्यय इति वासनातानवं च नाविद्यानिवृत्तिप्रतिबन्धकम् तथा च स्मृतिः 'वासनातानवं राम मोक्ष इत्यभिधीयत' इति" प्रकरणस्याल्पत्वेपि सारतरयुक्तिबाहुल्यसद्भावादनन्तापराधानामपि निवृत्तिरस्माद्भवतीत्याह—प्रकरणेनेति । प्रकरणमिति न संज्ञामात्रं किन्तु प्रकृष्टमुत्कृष्टं करणं ज्ञानं प्रति हेतुः प्रमाणयुक्तिसंदर्भो यस्मिन् तत्तथोक्तमित्यर्थतोपि प्रकरणमित्यर्थः । तथा च सफलत्वात्प्रकरणमारब्धव्यमित्यर्थः । कार्ये कारणोपचारात् ज्ञाननिष्ठसंकुलत्वं वेदे उपचर्याह—गिर इति । विचारस्य प्रतिबन्धनिवृत्तिमात्र-

फलत्वसाधनफलमाह—स्वयमेवेति । अथ विचारेण प्रतिबन्धनिवृत्त्यनन्तरं स्वयं केवलादेव वेदान्तवाक्यादात्मसाक्षात्कारो भवतीत्यर्थः ॥१७॥

ननु किमर्थं विचारस्य प्रतिबन्धनिवृत्तिसाधनत्वं कल्प्यते वेद-सहकारितया ज्ञानहेतुरेव किं न स्यान्नचैतावता सापेक्षत्वं वेदस्य, व्युत्पत्तेस्तत्सहकारित्वेऽपि वेदस्य तददर्शनात् । ननु व्युत्पत्तेरन्वय-तिरेकाभ्यां तत्सहकारित्वमवगम्यते न तथा विचारस्य विनापि तेन व्युत्पन्नस्य वाक्यादात्मज्ञानोत्पत्तिदर्शनादिति चेन्न—ज्ञानमात्रस्य विचारव्यभिचारेऽपि मुक्तिफलकज्ञानस्य तदव्यभिचारादित्याशङ्क्य किं विचारस्य वेदान्तादात्मज्ञाने जनयितव्ये चाक्षुषज्ञान इव परनयं आलोकस्य करणत्वेन सहकारित्वं किं वा शाब्दज्ञाने व्युत्पत्तिवदङ्गत्वेन उभयथापि न सम्भवतीत्याह—

**स्वाध्यायवन्न करणं घटते विचारो**
**नाप्यङ्गमस्य परमात्मधियः प्रसूतौ ।**
**सापेक्षता ऽऽपतति वेदगिरस्तथात्वे**
**ब्रह्मात्मनः प्रमितिजन्मनि तन्न युक्तम् ॥१८॥**

स्वाध्यायवदिति । 'नावेदविन्मनुते तं बृहन्तम्' 'तं त्वौपनिषदम्'इत्यादि श्रुत्या वेदस्यात्मज्ञाने करणत्वसिद्धेः स्वाध्यायवदिति सिद्धवदुपादानं यथा स्वाध्यायो वेद आत्मज्ञानस्य करणं तथा विचारः करणं न घटते न भवति व्युत्पत्तिवत्परमात्मज्ञानोत्पत्तावस्य स्वाध्यायस्याङ्गमपि न भवति । उभयत्रापि हेतुमाह—सापेक्षतेति । यत्तदावध्याहार्यौ अस्येति चानुषञ्जनीयं यस्मादस्य विचारस्य ब्रह्मात्मविषयप्रमित्युत्पत्तौ तथात्वे करणत्वे अङ्गत्वे वा सापेक्षता आपतति आयाति तस्मान्नाङ्गं न वा करणमिति पूर्वेण सम्बन्धः । अस्तु सापेक्षत्वं ततः किमित्याशङ्क्यौ-त्पत्तिकसूत्रसिद्धस्वतस्त्वं भज्येतेत्याह—तन्न युक्तमिति । तत्सापेक्षत्वाप-तनम् ॥ १८ ॥

इदानीं व्युत्पत्तिवद्विचारापेक्षायामपि न सापेक्षतेति पूर्वपक्ष्याशयं दूषयति—

**व्युत्पन्नस्य हि बुद्धिजन्म सहसा वाक्यश्रुतौ दृश्यते**
**वाक्यार्थे न ततोऽस्ति बुद्धिजनने मीमांसनव्यापृतिः ।**
**तेनार्थात्करणादिभावजनने मीमांसनस्याश्रिते**
**वेदार्थप्रमितौ तु वेदवचसः सापेक्षताऽऽयास्यति ॥१६॥**

व्युत्पन्नस्य हीति। शब्दशक्तिपरिज्ञानिन इत्यर्थः। हिरवधारणे व्युत्पन्नस्यैव पुरुषस्य वाक्यश्रुतौ सहसा झटिति वाक्यार्थविषये बुद्धिजन्म दृश्यते नाव्युत्पन्नस्येत्यन्वयव्यतिरेकाभ्यां वाक्यार्थज्ञानमात्रे व्युत्पत्तेः कारणत्वेन वेदान्तस्य ब्रह्मात्मलक्षणवाक्यार्थज्ञानेपि तदपेक्षायां न सापेक्षतेत्यर्थः। ननूक्तविचारस्यापि फलवत् ज्ञानं प्रत्यन्वयव्यतिरेकवत्त्वं नेत्याह—न तत इत्यादिना। 'वाक्यार्थे' इत्येतत् काकाक्षिन्यायेनात्रापि सम्बन्धनीयं ततो वेदाद्वाक्यार्थे विषये बुद्धिजनने मीमांसनस्य विचारस्य न व्यापृतिरिति सम्बन्धः। अयम्भावः-यद्विचारात्प्रागुत्पन्नं ब्रह्मात्मैक्यापरोक्षज्ञानं तज्जातीयमेव विचारानन्तरमपि जायते न विजातीयम् उभयोरप्येकरसब्रह्मात्मैक्यविषयत्वात् एतावांस्तु विशेषः पूर्वोत्पन्नज्ञानं पुरुषापराधप्रतिबद्धं सन्नाविद्यां निवर्तयति उत्तरकालीनं त्वप्रतिबद्धं सत् तां निवर्तयतीति। न च सजातीययोर्व्यक्तिभेदमात्रेण विचित्रकारणजन्यत्वं संभवति विशेषदर्शनस्य संशयतत्सामग्रीनिवर्तकत्वेनैवोपयुक्तत्वात्। न तज्जन्यं संशयाद्युत्तरं प्रत्यक्षमिति न तदपि सजातीययोर्विचित्रकारणजन्यत्वं उदाहरणस्यात्मज्ञानं प्रति न साक्षात्साधनत्वं बोध्यते अपि तु विचारेण ज्ञानमप्रतिबद्धं भवतीत्येतावतैव ज्ञानं प्रति विचारः साधनमित्युच्यते। अन्यथा ज्ञानस्येव विचारस्य दृष्टफलत्वे तत्समवायिनियमापूर्वस्यानुपयोगप्रसङ्गात्

ज्ञानस्य सिद्धत्वादन्यस्य तत्साध्यस्याभावाच्छ्रवणस्यापूर्वविधित्वेऽप्य-प्रतिबद्धालौकिकात्मज्ञानस्यैवोद्देश्यत्वेन नागृहीतविशेषणन्यायेन विशेषणीभूतप्रतिबन्धाभावमात्रस्यैव तत्फलत्वोपपत्तेः । न्यायतः सिद्धस्य ज्ञानस्यापि तत्फलत्वकल्पनमिति । अकारणीभूतविचारापेक्षायां वेदस्यापादितं सापेक्षत्वमुपसंहरति-तेनेति । येन विचारस्य व्यभिचारितया करणत्वेनाङ्गत्वेन वा न वाक्यार्थबुद्धौ व्यापारः । येन च न फलवदफलज्ञानयोर्वैजात्यं येन च न व्यक्तिभेदमात्रेण ज्ञानस्य विलक्षणकारणजन्यत्वं तेनार्थात्प्रतिबन्धनिवृत्तिलक्षणामुख्यफलत्वानुपपत्त्या विचारस्य वेदार्थप्रमितौ करणादिभावभजने करणत्वादिप्राप्तौ करणत्वेऽङ्गत्वे वा ऽऽश्रिते सति सापेक्षतायास्यति । तच्चायुक्तमित्यर्थः । अथवा हि शब्दो यस्मादर्थे यतो व्युत्पन्नस्य पुरुषस्य सहसा झटितिविचारं विना वाक्याद्वाक्यार्थबुद्धिर्जायते । ततो॰वाक्यार्थज्ञानेन विचारस्य व्यापार इत्यर्थः । तेनेत्यादेरयमर्थः येन विचारस्य न साक्षात्कारं प्रति मुख्यं कारणत्वं तेन विषयप्रतिष्ठाहेतुत्वेन श्रुतिसिद्धतया च कथञ्चित्कारणत्वव्यपदेशेपि न सापेक्षतेति तदेतत्सर्वमभिप्रेत्याशङ्कापूर्वकं टीकाकारैर्विचारमधिकृत्योक्तम् । नन्वेवं तर्कसापेक्षं स्वमर्थं साधयतो वेदान्तस्यानपेक्षत्वहानेरप्रामाण्यं स्यात्, न स्याद्वेदान्तानां स्वमहिम्नैव विषयव्यवसायहेतुत्वात्क्व तर्हि तर्कस्योपयोगः विषयासंभवशङ्कायां तत्संभवप्रदर्शनमुखेन फलप्रतिबन्धविगम इति ॥ १६ ॥

एवं विचारशास्त्रस्यासंभावनादिनिवृत्त्या प्रयोजनवत्त्वं साधितमपि तत्प्रयोजनं यावद्विचारशास्त्राव्यवहितविषयवेदान्तानां विषयः प्रयोजनं च नोपपाद्यते तावन्नखाग्रेण तिष्ठति वेति मत्वा तदुपपादनायोत्तरग्रन्थसन्दर्भ आरभ्यते तत्रेयमाशङ्का । ननु विचारशास्त्रमनारम्भणीयं तद्विषयवेदान्तानां विषयप्रयोजनशून्यत्वात्तथा हि-ब्रह्मात्मैक्यं विषयः अनर्थनिवृत्तिः प्रयोजनं अनर्थश्च प्रमातृत्वादिः 'अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वम्' इति वृद्धवचननादिति हि वेदान्तिनामभिमानः

स चानुपपन्नः। जीवब्रह्मभेदस्य प्रमातृत्वादिप्रपञ्चस्य च परमार्थत्वात् ननूक्तं स्वाज्ञानकल्पितेत्यत्र सर्वमज्ञानकल्पितमिति चेत्सत्यं तदेव नोपपद्यते अज्ञानादेरनिरूपणात्। तथाहि अज्ञानं तावन्नोपादानमभावस्य तदनुपपत्तेः। नन्वज्ञानं भावरूपमिति चेन्न-तत्र प्रमाणाभावात्। नन्वहमज्ञ इति प्रत्यक्षमेव प्रमाणमिति चेन्न—तस्य ज्ञानाभावविषयत्वात्। अस्तु वा तस्य भावत्वं तथापि तत्कार्यविभ्रमाधिष्ठानं-किमनात्मा, उतात्मा। नाद्यः—भवन्मते सर्वस्यानात्मनोऽध्यस्तत्वात् द्वितीयेपि किमयमात्माऽप्रकाशः, उत स्वप्रकाशः नाद्यः तत्र कल्पितस्य विश्वस्याध्यासात्कल्पितस्याधिष्ठानप्रकाशव्यतिरेकेण प्रकशासंभवादधिष्ठानस्य चागन्तुकबोधविषयत्वे दृश्यत्वान्मिथ्यात्वापातात्, न द्वितीयः प्रकाशमाने तस्मिन्नध्यासानुपपत्तेः न हि रज्जौ तत्त्वतः प्रतीयमानायां भुजगारोपोस्ति। नन्वज्ञानमधिष्ठानप्रकाशमावृणोतीतिचेन्न तस्य तत्सामर्थ्ये मानाभावात् भावे वा अज्ञानं न विक्षेपहेतुर्भवति तमस्त्वादावारकत्वाच्च बाह्यतमोवन्न हि लौकिकं तमो घटावारकं क्वचिद्विक्षेपहेतुर्दृष्टम्। अपि च न तावदज्ञानं ब्रह्माश्रयमहमज्ञ इति प्रतीतेः, न चेयं प्रतीतिर्ज्ञानाभावविषया तथा सति तद्व्यतिरिक्तप्रमाणाभावेन भावरूपाज्ञानासिद्धिप्रसंगान्नापि जीवाश्रयं जीवस्याज्ञानाधीनविभागस्य तदाश्रयत्वानुपपत्तेः। न चातिरेकाधीनो जीवपरविभागस्तस्मिन् प्रमाणत्वादन्यथातिरेकोऽतिरिक्त इति प्रत्ययादतिरेकस्याप्यतिरेकवत्वप्रसङ्गात्। नन्वन्तःकरणोपाधिको जीवो ऽज्ञानाश्रय इति चेन्न-तस्याप्यविद्याकार्यत्वादन्यथा 'भिद्यते हृदयग्रन्थिरि'ति तस्य ज्ञाननिवर्त्यत्वश्रुतिविरोधापातात्। न च स्वाभाविकभेदो जीवोऽविद्याश्रय इति वाच्यम्—अविद्याया एवाकल्पनाप्रसङ्गात् कल्पितायामप्यविद्यायां विषयाद्यसंभवतादवस्थ्यात्। किञ्च न तावदज्ञानं सद्वस्तु जनयति सतः कार्यत्वायोगात्सत्कारणस्य तस्यासत्त्वानुपपत्तेश्च नाप्यसज्जनयति निस्तत्त्वस्य तस्य कार्यत्वायोगान्नाप्युभयात्मकं किञ्चिद्वस्त्वस्ति विरोधादविरोधकल्पनायामपि प्रत्येक-

पक्षद्वयोक्तदोषस्यानिस्तारान्नाप्युभयविलक्षणं तादृशस्य कुत्राप्यप्रसिद्धेः तस्मात्प्रपञ्चस्याज्ञानकार्यत्वानुपपत्तिरितिविषयप्रयोजनाभावान्न विचारशास्त्रमारम्भणीयमिति तत्राह—

**आच्छाद्य विक्षिपति संस्फुरदात्मरूपं**
**जीवेश्वरत्वजगदाकृतिभिर्मृषैव ।**
**अज्ञानमावरणविभ्रमशक्तियोगा—**
**दात्मत्वमात्रविषयाश्रयतावलेन ॥ २० ॥**

आच्छाद्येति। अज्ञानमनादिभावः ज्ञाननिवर्त्यं संस्फुरदात्मरूपमाच्छाद्यावृत्य विक्षिपति विविधं क्षिपति सत्यप्रकाशात्मकमात्मानमसत्यजडात्मकनानाकारं करोतीत्यर्थः । अयम्भावः अज्ञानं न ज्ञानाभावः प्रत्यक्षत्वात् त्वदुक्तमर्थं न जानामीति तस्य ज्ञानसमानकालीनत्वनियमाच्च, न ह्यभावप्रतियोगिनोः समानाश्रये समानकालीनत्वं संभवति अज्ञानस्य भावरूपत्वपक्षे तु नायं दोषः तस्य साक्षिसिद्धतया विरोधाभावात् 'तरति शोकमात्मवित्'इत्यादिश्रुत्यात्मविषयप्रमाणज्ञानस्यैवाज्ञानविरोधितया सिद्धत्वात् । ननु भवन्मतेपि ज्ञानाभावस्यावश्यकत्वात्तस्य चाप्रतियोगिना साक्षिणा विरोधाभावात्स एव न जानामीति प्रत्ययविषयो भवत्विति चेन्न अभावस्य साक्षिणा विरोधाभावेपि सम्बन्धाभावेन तद्विषयत्वानुपपत्तेः, न चाभावसाक्षिणोराध्यासिकसम्बन्धव्यतिरेकेण सम्बन्धो निरूपयितुं शक्यते, न चाध्यासिकः सम्बन्धोऽविद्यां विना सिध्यति न च भावरूपाऽविद्यायामेतद्व्यतिरेकेण किञ्चित्प्रमाणमस्ति, न चास्मत्पक्षे ज्ञानाभावोस्ति 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत' इत्यादि श्रुत्या तस्य नित्यतया सिद्धत्वात् न च वृत्त्यभावविषयोऽयमवभासः मुख्याज्ञानविषयत्वसंभवे ऽमुख्यज्ञानाभावविषयत्वकल्पनानुपपत्तेः अज्ञानस्य च भावरूपत्वमुपरिष्टात्प्रपञ्चयिष्यति एतच्चाज्ञानं स्फुरतोपि जगदधिष्ठानस्यात्मनोरूपमारोपविरुद्धांशमा-

वृणोति अतो न तत्राध्यासविरोधः। यदुक्तमज्ञानस्यावरणसामर्थ्यं नास्ति तत्त्वे वा न तद्विक्षेपसामर्थ्यमिति तत्राह-आवरणाविभ्रमशक्तियोगादिति-आवरणशक्तियोगाद्विभ्रमशक्तियोगाच्चेत्यर्थः। न चावरणशक्तौ प्रमाणाभावः ब्रह्मस्वरूपानवभासानुपपत्तेरेव मानत्वात् न चान्यथोपपत्तिः, तत्र न तावदिदानीं प्रतीचो ब्रह्मभावाभावादनवभासः। 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुत्या पूर्वमपि ब्रह्मभावस्य सत्त्वान्नापि तद्विषयप्रमाणाभावादनवभासः स्वयं प्रकाशस्य तस्यागन्तुकप्रमाणानपेक्षत्वान्नापि विद्यमानस्यापि तस्य केनचिन्मूर्त्तद्रव्येणावृतत्वादनवभासः अत्यन्तमव्यवहितस्य तस्य तदनुपपत्तेः, नचान्यदावरणमस्तीत्युपरिष्टाद्वक्ष्यति। तस्मादज्ञानमेवावारकमिति तदेतदभिप्रेत्योक्तं—संस्फुरदात्मरूपमिति। ननु कोयमनवभासो नाम यस्याज्ञाननिमित्तता वर्ण्यते प्रकाशविनाश इति चेत्, न तावत्स्वरूपप्रकाशविनाशस्तस्य नित्यत्वान्नाप्यागन्तुकप्रकाशविपरिलोपः आगन्तुकप्रकाशविनाशेपि स्वरूपप्रकाशेन नित्यवदभासोपपत्तेरिति चेन्न—नास्ति न प्रकाशत इति स्वरूपविपरीतव्यवहारविषयत्वयोग्यत्वस्यैवानवभासशब्दार्थत्वादेवं विक्षेपसमर्थमप्यज्ञानं शुक्तिकाद्यज्ञाने सति हि रजतादिविभ्रमोऽसति तु नेति सर्वसंमतमनन्यथासिद्धान्वयव्यतिरेकौ च कारणविषयावितिवादिभिरङ्गीक्रियत इत्यज्ञानस्य कारणत्वे सिद्धे किं तन्निमित्तमुतोपादानमिति विशये उपादानस्य प्रथमापेक्षितत्वात् उपादानान्तरानिरूपणान्निमित्तस्य च काचादेः सिद्धत्वादज्ञानमेवोपादानमिति निश्चीयते, एवं ज्ञाननिवर्त्यासत्यप्रपञ्चोपादानमपि मूलाज्ञानमेव सिध्यति, कारणञ्च कार्यानुकूलशक्तिमदिति प्रमाणसिद्धमज्ञानस्य विभ्रमसामर्थ्यमित्यप्रयोजको हेतुः। नन्वज्ञानस्य स्वतो निरस्तसमस्तसामर्थ्यस्य कथमेतादृशं सामर्थ्यं तत्राह-आत्मत्वमात्रेति। आत्मत्वं प्रत्यक्स्वरूपं तदेव विषय आश्रयश्च यस्य तस्य भावस्तत्ता तद्बलेनेति। मात्रचानात्मतदुपहिताश्रयत्वं निराकरोति अस्ति तावदज्ञानस्य मामहं न जानामीति प्रतीतेरेकाश्रयविषयत्वम्।

न चात्र जीवोऽज्ञानविषयः अहमिति तस्यातिस्फुटं प्रतीयमानत्वान्न हि जीवस्य प्रकाशमानं किञ्चिद्रूपान्तरमस्ति येन तेनाकारेण विषयो भवेदस्ति चैतन्यमात्रस्य प्रतीचो प्रतीयमानं ब्रह्माख्यं रूपान्तरं न हि सर्वो-लोकोहमितिवत् ब्रह्माहमिति च प्रत्येति। न च ब्रह्म प्रतीचो रूपमेव न भवतीति वाच्यम् 'अयमात्मा ब्रह्म' 'तत्त्वमसि' इत्यादिश्रुतिसिद्धत्वात् अतः प्रत्यङ्मात्रमेवाज्ञानस्य विषयः। तथा च मामहं न जानामीति विषयाश्रययोरेकत्वावगमात्प्रत्यङ्मात्रमेवाश्रयोपि वक्तव्यः। ननु स्वयं प्रकाशस्य ब्रह्मणोऽज्ञानाश्रयत्वं विरुद्धमिति चेन्न—स्वयंप्रकाशस्यापि तस्याज्ञानविषयत्ववत्तदाश्रयत्वस्याप्यविरुद्धत्वात्कथं तर्ह्यहमज्ञ इत्यज्ञानस्याहंतासामानाधिकरण्यानुभव इति चेन्न तयोरेकचैतन्याश्रयत्वात्। नन्वज्ञानस्य चैतन्यविषयत्वे चैतन्याश्रयत्वं न स्यादाश्रयविषयभेदस्यावश्यकत्वादिति चेन्न—अपवरकविषयान्धकारस्यापवरकाश्रयत्वदर्शनात्। नन्वज्ञानेऽयं नियमः शुक्त्यज्ञाने तथा दर्शनान्न तत्राप्यवच्छिन्नचैतन्यविषयाज्ञानस्य तदाश्रयत्वादज्ञानस्य च स्वातन्त्र्यं वारयति बलेनेति। विविधाकारमेव दर्शयति—जीवेश्वरत्वजगदाकृतिभिरिति। इत्थंभावे तृतीया जीवत्वेश्वरत्वजगदाकारेणेत्यर्थः। पुनरविद्याकार्यं सदसदादिविकल्पेनादूदुषत् तत्राह मृषैवेति-सदसद्विलक्षणमनिर्वचनीयमित्यर्थः। अयम्भावः। अस्ति तावच्छुक्त्यादाविदंत्वसामानाधिकरण्येन रजतादिव्यवहारः। न तावदयं प्रभाकराभिमतग्रहणस्मरणात्मकज्ञानजन्यः ज्ञानद्वयस्य मेलनायोगात्तस्य प्रत्येकं प्रवर्त्तकत्वे लोष्टादौ देशान्तरे च प्रवृत्तिप्रसङ्गात्, न च गृह्यमाणस्मर्यमाणयोरविवेकात्प्रवृत्तिः सर्वत्र संसर्गप्रवृतेः संसर्गज्ञानजन्यत्वनियमात् नापि नैयायिकाद्यभिमतान्यथाख्यातिजन्यः अन्यथाख्यातेरेवासंभवात् सा हि पुरोवर्त्तिशुक्त्यादेर्देशान्तरीयरजताद्यात्मनाऽपरोक्षप्रतीतिः तत्र कथं देशान्तरीयरजतादेः संप्रयोगं विना प्रत्यक्षप्रतीतिविषयत्वं भवेत्। ननु देशान्तरीय रजतादिसंप्रयोगोप्यस्तीति चेन्न—कुड्यादिव्यवहितस्य चक्षुषो देशा-

न्तरीयरजतादिसंप्रयोगानुपपत्तेः। नन्वननुभूतरजतस्य रजतविभ्रमो नेति पूर्वानुभवजन्यसंस्कारस्तज्जन्या स्मृतिर्वा प्रत्यभिज्ञायामिवेन्द्रियप्रत्यासत्तिर्भविष्यतीति चेन्न यत्र हि विशेष्ये यदनुभूतं तत्रैव तद्विशिष्टज्ञाने संस्कारः स्मृतिर्वा प्रत्यासत्तिर्भवति यथा प्रत्यभिज्ञायां तत्तांशे न त्वन्यत्राप्यन्यथापूर्वदृष्टदेवदत्तस्यानुभूयमानयज्ञदत्ते देवदत्तविशेषणतयानुभूतदेशकालवैशिष्ट्यानुसंधानप्रसङ्गात्। न च संप्रयोगं विनापि दोषात्तत्प्रतीतिः स्यादिति वाच्यम्, विशिष्टज्ञानमात्रे विशेषणसन्निकर्षस्यापि कारणत्वात् न च सत्यविशिष्टप्रत्यक्षे तत्कारणं लाघवाद्विशिष्टप्रत्यक्षं प्रत्येव तत्कारणत्वकल्पनादन्यथा सन्निकृष्टपर्वतादौ वह्न्यादिपरोक्षविभ्रमस्यापरोक्षत्वप्रसङ्गादपरोक्षभ्रान्तिसामग्र्यास्तत्रापि सत्त्वाच्छुक्तिकारजतसंसर्गस्यात्यन्तासतोऽपरोक्षप्रतीत्यनुपपत्तेश्च। ननु सदुपरक्तस्यासतोपि प्रतीतिरिष्यत इति चेन्न—भवदिच्छामात्रेण वस्तुसिद्धौ विनापि तत्त्वज्ञानं निश्रेयसप्राप्तिरिति शास्त्राभ्यासादिवैयर्थ्यापत्तेर्नरशृङ्गादेरपि गवादिसंसृष्टत्वेनावभासप्रसङ्गाच्च, उपरागश्च सम्बन्धः स वा कथमसतो भवेत्। ननु माभूत् व्यवहिततया देशान्तरीयरजतानुभवः विज्ञानाकारस्तु रजतं सन्निहिततया अपरोक्षप्रतीतियोग्यं विभ्रमविषयो भविष्यति, न च रजतस्य विज्ञानाकारत्वे प्रमाणाभावः विमतं बुद्ध्यभिन्नं संप्रयोगमन्तरेणापरोक्षत्वात्संवेदनवदित्यात्मख्यातिवादोस्त्विति चेन्न—बाह्याभ्यन्तररूपेण प्रकाशाप्रकाशरूपेण च प्रतीयमानयोर्विज्ञानरजतयोरैक्यानुपपत्तेः अहं रजतमितिप्रतीतिप्रसङ्गाच्च, वहिष्ट्वम् तत्रारोप्यत इति चेन्न—रजतबहिष्ट्वस्यात्यन्तासतोऽपरोक्षत्वानुपपत्तेः संसर्गमन्तरेण परोक्षत्वादिति हेतो रजतबहिष्ट्व एव व्यभिचारः। नन्वस्तु तर्हि रजतं यथार्थमेव नहीदं रजतमित्यङ्गुलिनिर्देशेनापरोक्षतया प्रतीयमानं नेति सचेतनेन केन चिद्वक्तुं शक्यम्। न च तस्य यथार्थत्वेनेदं रजतमिति प्रतीत्यनुपपत्तिः, एकस्यैव कालभेदेनोभया-

कारत्वादथवा सर्वदैवोभयाकारमस्तु, न च विरोधः—प्रमाणसिद्धत्वात् न चैवं कालान्तरेपि रजतप्रतीतिप्रसङ्गः सामग्रीभेदेन प्रत्ययव्यवस्थोपपत्तेरिति सत्ख्यातिवादिनोऽनेकान्तवादिनो वा मतमस्त्विति चेत्तत्र न तावत्कालभेदेनोभयाकारत्वमेकत्र संभवति तत्र किमेकतराकारकालेऽन्यतराकारो नश्यति उत विद्यते। नाद्यः—विभ्रमानन्तरमपि सेयं शुक्तिरिति प्रत्यभिज्ञानात् न द्वितीयः शुक्तिज्ञानकाले पूर्वप्रतीतरजतस्यापि प्रत्ययापातात्। ननु दुष्टसामग्री रजतज्ञानहेतुरितरा त्वितरत्रेति चेत् भवेदेवं यदि रजतज्ञानं मिथ्या स्यान्न हि यथार्थज्ञाने दोषः सामग्रीमनुप्रविशति तदा दोषं विना सत्यरजतेपि ज्ञानाभावप्रसङ्गाद् रजतसत्त्वे बाधानुपपत्तेश्च एतेनानैकान्तवादो निरस्तः। ननु सर्वं ज्ञानं यथार्थमेव शुक्तिकादौ रजतग्रहणमपि यथार्थं पञ्चीकरणन्यायेन रजतस्य तत्रापि सत्त्वाद् व्यवहारस्त्वयथार्थः। शुक्तिगतरजतस्य प्रवृत्तिविषयत्वायोग्यस्य तद्योग्यदेशान्तरीयरजतविवेकाग्रहात्तस्य जातत्वादिति कस्यचिन्मतमस्त्वितिचेन्न—भूतानामेव पञ्चीकृतत्वाद्भौतिकानां तदभावादन्यथा स्तम्भादावपि रजतप्रतीतिप्रसङ्गान्न हि विद्यमानरजतोपलम्भनेपि सादृश्याद्यपेक्ष्यते रजतेपि रजतज्ञानाभावप्रसङ्गादपरोक्षप्रमितिविषयस्य स्वोचितकार्ययोग्यत्वेनार्थक्रियायोग्यासंसर्गाग्रहजन्यत्वेन व्यवहारोऽयथार्थ इतिचासत्प्रलापमात्रम्। नन्वस्त्वसदेव रजतं सत्त्वस्य त्वयैव निषिद्धत्वादिति चेन्न—इदं रजतमित्यपरोक्षप्रतीत्यनुपपत्तेः। तस्मादिदं रजतमित्यङ्गुलीनिर्देशेन प्रतीतरजतस्यैतावन्तं कालं मिथ्या रजतमभादिति प्रतीत्यनुरोधेन सदसत्त्वादिप्रकारेण दुर्निरूपणेन च सदसद्विलक्षणरूपानिर्वचनीयत्वं वक्तव्यम्। अत्रैयं श्रोतृणां बुद्धिसौकर्याय संप्रदायविच्छिक्षितानिर्वचनीयरजतोत्पत्तिप्रक्रिया लिख्यते। तत्र काम्लादिदोषदूषितलोचनस्य यदा शुक्तिसंप्रयोगो भवति तदेदमाकारान्तःकरणवृत्तिर्भवति। सा च दोषप्रतिबन्धाद्विशेषाकारा न भवति। तया च

वृत्त्या इदमंशाभेदेनोत्पन्नया इदमंशोपहितं विशेषांशोपहितं च चैतन्य मुपधीयते । सामान्यविशेषयोरभेदेन तदुपहितचैतन्यस्याप्यभेदान्न चैवं सामान्याकारवृत्त्या विशेषांशस्यापि प्रतीतिप्रसङ्गः वेद्यांशस्य स्वाकारवृत्तिवेद्यत्वनियमादत एव न तन्निष्ठाज्ञाननिवृत्तिरपि तेन च वृत्त्युपहितचैतन्येनेदमंशावच्छिन्नचैतन्यनिष्ठाविद्या निवर्त्यते । विशेषांशावच्छिन्नचैतन्यनिष्ठा च सा क्षुभ्यते क्षोभश्च तस्याः सहकारिबलात्कार्योन्मुख्यं ततश्च रजतादिवासनासचिवा शुक्तित्वाद्यंशावच्छिन्नचैतन्यनिष्ठा सा इदमंशावच्छिन्नचैतन्ये रजताद्याकारेण विवर्तते तदैव वृत्तिप्रतिबिम्बितचैतन्यनिष्ठा च सा रजतादिज्ञानसंस्कारसध्रीचीना रजतादिज्ञानाभासाकारेण । नन्विदं रजतमितीदन्त्वसामानाधिकरण्येन रजतप्रतीतेस्तदवच्छिन्न एव चैतन्ये रजताध्यासः स्वीकर्त्तव्यः स्वीक्रियते च तथैव भवद्भिः इदमंशावच्छिन्नचैतन्यनिष्ठा चाविद्यातदाकारान्तः करणावृत्त्युपहितचैतन्येन ध्वस्ता । अन्यथा इदमिति प्रतीत्यनुपपत्तेस्तदाकारवृत्तेस्तदवच्छिन्नाज्ञानविरोधित्वाच्च ततः किमर्थं स्फुरति साक्षिचैतन्येऽध्यस्तरजतस्फुरणायाविद्यावृत्तिरर्थ्यते । न हि प्रदीपसमवेतरूपप्रकाशाय प्रदीपान्तरमर्थ्यत इति चेदत्रायं दर्शनविभागो वर्ण्यते । अन्तः करणावच्छिन्नं प्रमाता तदुपहितं साक्षीवृत्त्यवच्छिन्नं ज्ञानं वृत्त्यन्तः करणयोः कार्यकारयोरेकत्वात्तदुभयोपहितसाक्ष्येकं भवति । विषयोपहितं च प्रमेयं तदेव च विषयतादात्म्यापन्नवृत्तिमदन्तः करणोपहितं सत्तेनाकारेण साक्षित्वमपि भजते रजतं च विषयोपहित एव चैतन्येऽध्यस्यते इदं रजतमिति इदन्त्वसामानाधिकरण्येन प्रतीतेः विषयोपहितं च प्रमेयचैतन्यं विषयाभिन्नवृत्तिमदन्तःकरणोपहितात्साक्षिणोऽभिन्नमन्तः करणोपहितत्वाकारवतः साक्षिणो विषयोपहितत्त्वाकारवतः साक्ष्यस्य चैकत्वानुपपत्तेः । ततश्च विषयचैतन्याध्यस्तरजतस्य साक्षिणा साक्षात्संबधाभावात्संबन्धं विना च स्फुरणानुपपत्तेः सम्बन्धघटनार्थं वृत्तिप्रतिबिम्बितचैतन्य-

निष्ठाविद्यावृत्तिलक्षणज्ञानाभासो रजतसमकालमेव जायते । तथा च रजतं तदाकाराविद्यावृत्तिश्च साक्षिणैव भासते । नन्वेवं वृत्तिद्वयाङ्गीकारे ज्ञानद्वयापातादख्यातिवादप्रसङ्ग इति चेन्न अविद्यावृत्तेर्ज्ञानाभासत्वेन ज्ञानत्वानभ्युपगमात्तस्मात्प्रतीत्यनुरोधेन यथाऽनिर्वचनीयमेव रजतमुत्पद्यत इति स्वीक्रियते । एवमेव प्रत्यङ्मात्रविषयाऽश्रयाज्ञानेनानिर्वचनीय एव प्रपञ्च उत्पद्यत इति न सदादिविकल्पप्रयुक्तदोषापात इति । अत एव मृषैवेत्युक्तं मिथ्यैव विक्षिपति न तु सदादिप्रकारेणेत्यर्थः ॥ २० ॥

नन्वज्ञानस्य प्रत्यङ्मात्राश्रयत्वेपि तद्विषयत्वमनुपपन्नं स्वस्यैवानवभासप्रसङ्गात् स्वावभासात्मप्रकाशस्यावृतत्वात्स्वप्रकाशस्य ब्रह्मणोऽज्ञानविषयत्वानुपपत्तेश्च न हि प्रकाशमानमज्ञायमानं भवति नापि तस्यात्ममात्राश्रयत्ववत्तन्मात्रविषयत्वमपि सङ्गच्छते घटं न जानामीति घटादेरपि विषयत्वानुभवादित्याशङ्क्याह—

**प्रत्यक्त्वमात्रविषयाश्रयताबलेन**
**प्रत्यक्स्वरूपमपिधाय पराग्विवर्त्तैः ।**
**प्रत्यञ्चमद्वयमशेषविशेषहीनं**
**विक्षिप्य तिष्ठति तदग्रहणं मृषैव ॥२१॥**

प्रत्यक्त्वमात्रेति । तदग्रहणं प्रत्यक्स्वरूपमपिधायाशेषविशेषहीनं प्रत्यञ्चम् विक्षिप्यैव तिष्ठतीति सम्बन्धः । प्रतीचः स्वरूपं सर्वेषां प्रकाशमानं चैतन्यं यद्यप्यानन्दादिकमपि स्वरूपमेव तथापि चैतन्यवत्सर्वेषां स्पष्टानुभवाभावाच्चैतन्यस्य तत्स्वरूपत्वमुच्यते न पिधाय अपिधाय अनावृत्येत्यर्थः । अपेर्वष्टीत्यादिना (१) अकारलोपे कृते नञ्

(१) वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ।

समासः। एतदुक्तं भवति यदविद्यासाधकं साक्षिस्वरूपं तदविद्या नावृणोति यच्च तद्विरोध्यनवच्छिन्नानन्दरूपं तदेवावृणोति तथा च चैतन्यांशस्यानावृतत्वादविद्याप्रतीतिः सम्भवतीति अज्ञानस्य विक्षेपोपपादनाय पूर्वोक्तं बलं दर्शयन् अज्ञानस्यात्मविषयत्वं दर्शयति— प्रत्यक्त्वमात्रेति। न तावद्ब्रह्मणः प्रकाशमानस्याज्ञानविषयत्वानुपपत्तिः। विषयव्यावृत्तस्याज्ञानस्यानुभवे विशेषणीभूतविषयस्यापि दण्डादिवद्विशिष्टप्रतीतौ प्रकाशमानस्यैवाज्ञानव्यावर्त्तकत्वनियमात्किञ्चाग्रहणाज्ञनवादिमतेऽनुमानेन प्रकाशमाने विषयेऽपरोक्षतयाऽप्रकाशमानत्वमनुभूयते, तत्कुतो हेतोरनुमानज्ञानापरोक्षज्ञानाभावयोरविरोधादितिचेदिहापि तुल्यं स्वरूपप्रकाशस्याप्रकाशसम्बन्धाविरोधात्तस्याप्रकाशसम्बन्धेपि प्रकाशसम्बन्धोपि स्यादिति चेत्कस्तर्हि सन्देहः न हि स्वरूपप्रकाशस्याभावं कश्चिद्वक्तुमुद्युङ्क्ते तर्हि सर्वेषां ब्रह्मानुभवः स्यादिति चेन्न प्रकाशमानेपि तस्मिन्नविवेकिभिरारोपिताज्ञानस्य सत्त्वात्तस्मान्न प्रकाशमानस्याप्रकाशमानत्वविरोधः। नापि तन्मात्रविषयत्वविरोधः। घटादेरज्ञानकार्यस्य स्वत आवृतस्वरूपत्वेनाज्ञानस्य तद्विषयत्वकल्पने प्रयोजनाभावात्। नन्वज्ञानस्यकार्यस्यापि नित्यचैतन्यसम्बन्धान्नित्यं प्रकाशप्रसक्तिरस्तीति चेत्तर्हि तस्य चैतन्यस्यैवावरणं कल्पयितुमुचितं तत्प्रकाशस्य तत्प्रयुक्तत्वाद् घटस्वरूपावरणकल्पनेपि तत्प्रयुक्तप्रकाशाप्रतिबन्धात्। नन्वनुभूयते घटादेरज्ञानविषयत्वमिति चेन्न—तस्य समानाश्रयत्वेनाप्युपपत्तेः। तस्मात्साक्ष्यंशमनावृत्यचैतन्यस्य पूर्णानन्दांशमेवावृणोतीति सिद्धम् ननु निरंशस्य चैतन्यस्य कथमावृतानावृतांशद्वयमिति चेन्न—कथंचित्तर्हि साक्षिचैतन्यमप्यज्ञानमावृणोतीति चेद्भवत्येव तर्ह्यानन्दांशवत्साक्षिस्वरूपाप्रकाशोपि स्यादिति चेत्किं स्वरूपप्रकाशाभाव आपाद्यते किं वा ज्ञानलक्षणाप्रकाशः। नाद्यः आनन्दांशस्यापि स्वरूपप्रकाशानपायात् एतावांस्तु विशेषः— चैतन्येऽनित्यत्वादिवदनानन्दत्वा-

द्विकमानन्देऽऽरोप्यानुभवन्तीति, न द्वितीयः तस्यैवानन्दाभिन्नस्याज्ञानविषयत्वात्। तर्हि ब्रह्म न जानामीति व्यपदेशवच्चैतन्येप्यज्ञानव्यपदेशः स्यादिति चेन्न-एतस्यैव व्यपदेशस्य चैतन्यविषयत्वात् तर्हि चैतन्यं न जानामीतिव्यपदेशोपि स्यादिति चेन्न—चैतन्यानन्दशब्दयोः स्वरूपमात्रविषययोरर्थभेदाभावात् एवं स्थिते प्राचीनसिद्धान्तमनुसृत्य ज्ञानानन्दांशयोः कल्पितभेदमादाय प्रकाशमानत्वाप्रकाशमानत्वे व्यवस्थापयितुं तत्र वास्तवभेदाभावमभिप्रेत्याह—अशेषविशेषहीनामिति। परोक्षत्वापरोक्षत्वकिञ्चिज्ज्ञत्वसर्वज्ञत्वादिविशेषहीनमित्यर्थः। तत्र हेतुः—अद्वयं प्रत्यञ्चमिति। सजातीयादिभेदरहितं सर्वान्तरमित्यर्थः। कथं तर्हि विरुद्धधर्मद्वयसमावेशः कल्पितभेदादित्याह—पराग्रूपेण विक्षिप्य तिष्ठतीति। परस्मिन् तत्त्वसाक्षात्कारानन्तरकाले अञ्चति गच्छति नश्यतीति पराक् ज्ञानानन्दभेदादि तद्रूपेण प्रत्यञ्चं विक्षिप्य तिष्ठतीत्यर्थः। ननु भेदोप्यध्यासः स चावरणाधीनः कथमावरणप्रयोजको भवेदन्योऽन्याश्रयादित्यत आह-एवेति। भेदरूपेण विक्षिप्यैव तिष्ठतीत्यर्थः। तथा च—भेदस्यानादित्वान्नान्योऽन्याश्रयतेति भावः। कथं तर्हि भेदस्याविद्याविक्षेपत्वं, तदधीनत्वमात्रेणेति वदामः। ननु ज्ञानानन्दभेदस्याविद्याजन्यत्वाभावे सत्यत्वं स्यादविद्याजन्यस्यैवासत्यत्वादिति चेत्तत्राह—मृषेति। अनिर्वचनीयमित्यर्थः। न ह्यविद्याजन्यस्यैव मिथ्यात्वमिति नियमः अविद्यायां व्यभिचारात्। किंत्वविद्याधीनसत्त्वस्यैव मिथ्यात्वमविद्याया अपि स्वरूपनिर्वाहकत्वेनाविद्याधीनसत्त्वात् ज्ञानानन्दभेदश्चाविद्याकालीनतयाऽविद्याधीनस्थितिक इति भवति मृषेति भावः॥ २१॥

एवं भेदप्रपञ्चस्यानाद्यविद्याकल्पितत्वोपवर्णने न वेदान्तानां ब्रह्मात्मैक्यलक्षणविषयोऽनर्थनिवृत्तिलक्षणं च प्रयोजनं स्यादित्याशङ्क्यानर्थनिवृत्तेरानन्दात्ममात्रत्वात्प्रयोजनत्वमिति दर्शयितुं प्रत्यगात्मनः प्रत्यक्षादिनाऽऽनन्दरूपत्वं सिद्ध्यतीत्याह—

प्रत्यक्षलिङ्गवचनानि हि दर्शयन्ति
निर्दुःखनित्यसुखविग्रहतां प्रतीचः ॥
निर्दुःखनित्यसुखविग्रहभूम्नि नास्मिन्
संभाव्यते दृशि पुरोदितमल्परूपम् ॥ २२ ॥

प्रत्यक्षलिङ्गेति । हि यस्मात्प्रत्यगात्मनः प्रत्यक्षं स्वापकालीनानुभवः परमप्रेमास्पदत्वादि लिङ्गं 'यो वै भूमा तत्सुखमि'त्यादिवचनं च निर्दुःखनित्यसुखविग्रहतां प्रतीचः दुःखविरोधि नित्यानन्दात्मत्वमवगमयन्ति तस्मादात्मानन्दरूप इत्यर्थः । ननु प्रत्यगात्मा विविधदुःखाकुलः प्रतीयते तत्कथमानन्दरूपस्तत्राह—निर्दुःखेति । निर्दुःखनित्यसुखात्मके भूम्नि त्रिविधपरिच्छेदशून्ये दृशि प्रत्यगात्मन्यल्परूपं दुःखात्मकं प्रमातृत्वादि न संभाव्यते उपपत्तितो न सिध्यतीत्यर्थः उपपत्त्यभावज्ञापनार्थं भूम्न्यल्पमिति च विशेषणम् ॥ २२ ॥

आत्मनः सुखरूपत्वे प्रत्यक्षं ज्येष्ठं प्रथममुदाहरति-

प्राज्ञे सुखं समनुभूय समुत्थितः सन्
सर्वप्रकारविषयप्रतिपत्तिशून्ये ॥
सुप्तोऽहमत्र सुखमित्यनुसंदधानः
सर्वोऽपि जन्तुरवगच्छति तस्य सौख्यम् ॥ २३ ॥

प्राज्ञे सुखं समनुभूयेति । प्राज्ञः स्वापकालीनात्मा तत्र हि प्रत्यगात्मोपाधिविगमेन स्वरूपप्रज्ञया युक्तो भवति प्राज्ञे सुखं समनुभूय समुत्थितः सन्नहमत्र प्राज्ञे सुखं यथा भवति तथा सुप्त इत्यनुसंदधानः सर्वः पामरजन्तुरपि तस्य प्रत्यगात्मनः सौख्यं सुखरूपतामवगच्छति अतः प्रत्यगात्मा सुखरूप इत्यर्थः । ननु सुखानुभवस्य वैषयिकसुख-

विषयत्वेनान्यथासिद्धिः किं न स्यादित्याशङ्क्य प्राज्ञं विशिनष्टि—सर्वप्रकारविषयप्रतिपत्तिशून्ये इति। सर्वप्रकारा चक्षुरादिजन्या वासनाजन्या च या विषयप्रतिपत्तिः शब्दादिविषयपरिज्ञानं तद्रहितेऽनेन वैषयिकसुखोचितकारणाभावात्तत्र वैषयिकं सुखं नास्तीत्युक्तं भवति । एतदिह विवक्षितं सुप्तोत्थितः खलु पुरुषः सुखमहमस्वाप्सं न किञ्चिद्वेदिषमिति स्वापकालीनं सुखं सर्वविषयाज्ञानं च परामृशति । न चायं पूर्वदिनानुभूतसुखविषयः 'अस्वाप्सम्'इति स्वापकालीनतया परामर्शात् नापि स्वाप्निकसुखविषयः, न किञ्चिद्वेदिषमिति परामर्शानुपपत्तेः। अतः परिशेषात् सौषुप्तिकसुखविषय एव तत्रापि न वैषयिकसुखविषयः स्वापस्य सकलविषयप्रतिपत्तिशून्यत्वात् न हि विषयज्ञानं विना वैषयिकं सुखं भवति सर्वदा प्रसङ्गात्। न चायं परामर्श एव नास्तीति वाच्यं सर्वानुभवसिद्धत्वात् नापि दुःखाभावविषयः दुःखाभावस्य प्रतियोगिस्मरणाद्यभावेन तदानुभवितुमशक्यत्वात् न ह्यननुभूतविषये स्मरणं दृष्टचरम्। न चेयं दुःखाभावविषयेदानींतनानुमितिरेवेति वाच्यं लिङ्गानुसंधानं विनाप्यनुभवान्नवा लिङ्गं किञ्चिदस्ति । ननु तदनींतनं दुःखवत्तया स्मरणमेव हेतुरिति चेन्न अनुभूते स्मरणनियमाभावात्, तदानींतनदुःखस्याप्रसिद्धत्वेन तद्विषयकस्मरणाभावस्यापि अप्रसिद्धत्वात्। ननु तदा दुःखवत्तया अननुभूयमानत्वं हेतुरिति चेन्न तत्कालीनानुभवाभावस्यापि ज्ञातुमशक्यत्वात्। ननु सामग्र्यभावेन सोप्यनुमीयत इति चेन्न—सामग्र्यभावस्य कार्याभावकल्प्यत्वाद्यदाकदाचित्सामग्र्यभावस्य तदानींतनदुःखाद्यभावालिङ्गत्वात्तदानींतनसामग्र्यभावस्यासिद्धेः। न चसुषुप्तिकालीनत्वलिङ्गेन दुःखाभावानुमितिरिति वाच्यम्, सुषुप्तिकालीनत्वस्यापि ज्ञातुमशक्यत्वात् । तस्मादयं परामर्शः सुखविषय एव वाच्य इत्यात्मनः सुखरूपत्वसिद्धिः ॥ २३ ॥

इदानीमात्मनः सुखरूपत्वे लिङ्गं दर्शयन्नादौ वैषयिकसुखस्या-

त्मातिरिक्तत्वमभ्युपेत्य तद्दर्शयति-

**सर्वं यदर्थमिह वस्तु यदास्ति किंचित्**

**पारार्थ्यमुज्झति च यन्निजसत्तयैव ॥**

**तद्वर्णयन्ति हि सुखं सुखलक्षणज्ञा-**

**स्तत्प्रत्यगात्मनि समं सुखतास्य तस्मात् ॥२४॥**

सर्वं यदर्थमिति । इह जगति यत्किञ्चिद्वस्त्वस्ति तत्सर्वं यदर्थं यच्छेषः यच्च निजसत्तयैवानन्योपहितत्वेन स्वत एव पारार्थ्यमन्यशेषत्वमुज्झति त्यजति तदनन्यशेषत्वे सति सर्वशेषि सुखमिति यत्सुखलक्षणं सुखलक्षणज्ञा वृद्धा वर्णयन्ति तत्सुखलक्षणं प्रत्यगात्मनि समं वैषयिकसुखवद्विद्यते हि यस्मादस्य प्रत्यगात्मनः सुखतेत्यर्थः । नन्वेतत्सुखलक्षणमनुपपन्नं सर्वस्यापि सुखशेषत्वाभावान्न हि दुःखं तत्साधनं वा सुखशेषो भवति–ननु यागाद्यनुष्ठानजन्यं दुःखं तत्साधनं च यागादिसुखशेषो भवतीति चेन्न यागादेः सुखसाधनतया तच्छेषत्वेपि तज्जन्यदुःखस्यातच्छेषत्वात् न हि सुखसाधनत्वेन दुःखमनुभवति कश्चित् किन्तु नान्तरीयकत्वेन ब्रह्महत्यायास्तज्जन्यस्य दुःखस्य च सुखशेषत्वशङ्कैव नास्ति किञ्च सुखमपि सर्वपदार्थान्तर्गतं भवति न हि सुखं सुखशेषः सुखभिन्नत्वेन सर्वपदार्थविवक्षायामात्माश्रयः स्यात्सुखस्यैव लक्ष्यमाणत्वादात्मापि न सुखशेषः मम सुखं भूयादिति सुखस्यैवात्मशेषत्वेनार्थ्यमानत्वादात्मनः सुखशेषत्वे वा कथमात्मनि सुखलक्षणं गच्छेदनन्यशेषत्वाभावात्प्रथमविशेषणञ्च व्यर्थमनन्यशेषत्वस्यान्यत्राभावात् न च दुःखेऽस्तीति वाच्यम् तर्हि सर्वशेषित्वस्यापि तत्र सत्वात्तस्यापि स्वसाधनसर्वशेषित्वात्तस्माद्यत्किञ्चिदेतल्लक्षणमिति चेन्न, आत्मातिरिक्तपरोपाधिप्रीतिविषयसर्वशेषित्वस्य सुखलक्षणत्वादितरत्स्वरूपकीर्त्तनमात्मो-

पाधिप्रीतिविषयवैषयिकसुखेऽव्याप्तिनिरासाय—परेति । न च परोपाधिप्रीतिविषययागजन्यतया तच्छेषीभूतदुःखेऽतिव्याप्तिः, दुःखजात्युपाधौ दुःखस्य परोपाधिप्रीतिविषयसकलशेषित्वाभावात् पुत्रादिशब्दश्रवणे दुःखाभावात् । नन्वेवमप्यात्मन्येतल्लक्षणं न संभवति आत्मनः शेषित्वाभावान्नह्यात्मार्थं किञ्चिद्भवति, साधनं हि साध्यार्थं भवति। आत्मनश्चानादित्वान्न साध्यत्वं सुखार्थं तु भवति, तस्य तज्जन्यत्वादिति चेन्न—न हि येन यत्साध्यते तस्यैव तच्छेषित्वमिति नियमः, तथा सत्याग्नेयादेः प्रयाजादिशेषित्वाभावप्रसङ्गात्, किन्तु येन यस्योपकारो भवति स एव तच्छेषी शेषी चात्रोपकार्य एव विवक्षितः, उपकारश्च सुखस्य साधनकृत आत्मलाभः, भोक्तुश्चात्मनो भोग्यकृतो भोग एव तथा चात्मा सुखरूपः सुखलक्षणलक्षितत्वाद्वैषयिकसुखवत् अथवा यत्सुखलक्षणं लौकिकपरीक्षकाणां संमतं तदस्मदभिमतौपनिषदात्मनि सममिति व्यतिरेक्यैवास्तु । आत्मातिरिक्तसुखाभावादत्र च परोपाधिप्रीतिविषयेत्यादिरेव लक्षणम् ॥ २४ ॥

व्यतिरेकिलिङ्गान्तरमाह–

**प्रेमानुपाधिरसुखात्मनि नोपलब्धः**

**स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः ॥**

**प्रेयः श्रुतेरपि ततः सुखतानुमानं**

**नैयायिकोपि न दृगात्मनि निह्नुवीत ॥२५॥**

प्रेमानुपाधिरिति । अनुपाधिरनन्यशेषः प्रेमा स्नेहलक्षणेच्छाविशेषः असुखात्मनि सुखव्यतिरिक्ते नोपलब्धः । यद्यपि सुखसाधनेपि प्रेमा तथापि स सुखप्रयुक्त एव नानौपाधिकः स तादृशश्च प्रेमा कृमेर्निकृष्टजन्तोरपि श्वादीनामप्यात्मरक्षणाय पलायनादिदर्शनादात्मनि नित्यसिद्धः । प्रथमपादेन यत्सुखव्यतिरिक्तं न तत्परमप्रेमविषय इति व्यति-

रेकव्याप्तिर्दर्शिता द्वितीयपादेन परमप्रेमास्पदत्वहेतोः पक्षधर्मत्वमनुभवप्रमाणं दर्शितं श्रुत्यापि परमप्रेमास्पदत्वमात्मनो दर्शयति—प्रेयः श्रुतेरिति। 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मे'ति श्रुतेरपि प्रत्यगात्मनि स नित्यसिद्ध इति सम्बन्धः। अपिशब्देन 'न वा अरे पत्युः कामाये'त्यादि श्रुतिः समुच्चीयते। हेतोः पक्षधर्मत्वप्रदर्शनफलमाह-तत इति। यतोयं प्रेमा श्रुत्यनुभवाभ्यामात्मनि नित्यसिद्धः ततोनुमानदूषणप्रवीणो नैयायिकोपि'आत्मा सुखरूपः परमप्रेमास्पदत्वाद्व्यतिरेकेण दुःखादिवत्'इत्यात्मनः सुखत्वानुमानं न निह्नुवीत न विहन्यान्न दूषयितुं शक्तः अतोऽनुमानसिद्धमात्मनः सुखत्वमित्यर्थः ॥ २५ ॥

एवं हैतुकं नैयायिकं प्रत्यनुमानेनात्मनः सुखरूपत्वं साधयित्वा वेदार्थविचारदक्षं मीमांसकं प्रत्यात्मन आनन्दरूपत्वं श्रुतितो निर्द्धारयति—

आनन्दविग्रहमपास्तसमस्तदुःखं
वस्तुस्वभावपरिकल्पितसर्वभेदम् ॥
आत्मानमध्ययनविध्यनुसारिणस्तं
प्रत्यक्षतः श्रुतिशिरःसु समामनन्ति ॥२६॥

आनन्दविग्रहमिति। अध्ययनविध्यनुसारिणोऽध्ययनविधिप्रयुक्तसाङ्गस्वाध्यायाध्ययनवन्तः श्रुतिशिरःसु वेदान्तेषु आनन्दविग्रहमपास्तसमस्तदुःखं निराकृताध्यात्मिकादिविविधदुःखं वस्तुस्वभावपरिवर्जितसर्वभेदमसङ्गोदासीनस्वरूपमहिम्ना परिहृतसजातीयादिभेदमात्मानं प्रत्यक्षतः स्पष्टमामनन्ति अवगच्छन्तीत्यर्थः। एतदुक्तं भवति साङ्गवेदाध्ययनशालिनः शुद्धान्तःकरणा 'विज्ञानमानन्दं ब्रह्म, यदेष आकाश आनन्दो न स्यात्,सैषानन्दस्य मीमांसा भवति, एषोऽस्य परमानन्दः

एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति, यो वै भूमा तत्सुखं, ऽयोशनायापिपासे शोकं मोहं जरा मृत्युमत्येति, एकमेवाद्वितीयं, स एष नेति नेतीत्यादि श्रुतिशिरोवाक्यशतेभ्यः परमानन्दरूपं निरस्तनिखिलानर्थजालं सजातीयादित्रिविधभेदरहितमात्मानमवगच्छति । न चैतानि वाक्यान्युपचरितार्थानि, उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतत्वात् तादृशानामप्युपचरितार्थत्वे कर्मवाक्यस्याप्यनर्गलं तथात्वापातात् न चेदानीमधीतवेदान्ता अपि पुरुषा नैतादृशमात्मानमवगच्छन्तीति युक्तं वक्तुं साङ्गाध्ययनवतां शुद्धाशयानामिदानीमपि तादृशात्मप्रतीतेः, तदिदमुक्तमध्ययनविध्यनुसारिणइति तथा च श्रुत्याप्यानन्दत्वमात्मनः सिद्धम् ॥ २६ ॥

नन्वेतानि प्रमाणानि स्पष्टप्रत्यक्षबाधितान्यनुभूयते ह्यात्माह दुःखी सुखीति । न चाहम एव दुःखित्वादिधर्मो नात्मन इतिवाच्यम् । तस्यैवात्मत्वात् । नन्वहंकारोऽध्यस्तात्मेति चेन्न—तदध्यासे प्रमाणाभावात् अनुपपन्नश्च तस्याध्यासः प्रसिद्धाध्यासविपरीतरूपत्वात् प्रसिद्धो ह्यध्यास इदं रजतमिति द्विरूपेणावभासते, अहमिति चैकरूपेणावभासतेऽहंकारः । अहंकारस्याध्यस्तत्वे च तत्प्रतीतिरप्यनुपपन्ना सा न तावत्प्रमाणतः अध्यस्तस्य तद्विषयत्वानुपपत्तेः नापि स्वतोध्यस्तस्य जडत्वान्नाप्यधिष्ठानचैतन्येनाध्यासे तस्य प्रकाशानुपपत्तेः । अध्यस्तस्यैवाध्यासे प्रकाशनियमात्तदध्यासकारणाभावाच्चाध्यासे हि विषयदोषः सादृश्यादिरधिष्ठानप्रमाणदोषः।काचादिः,प्रमातृदोषो रागादिश्च कारणं तत्र न तावत्सादृश्यं संभवति प्रत्यक्पराग्भावेन जडाजडरूपेण चात्यन्तविलक्षणत्वात् नापि करणदोषः स्वप्रकाशस्यात्मनः प्रमितौ करणाभावात् नापि प्रमातृदोषः स हि रागादिरूपोऽहंकारधर्म एवेति भवतो मतं तत्कथमहंकारे स कारणं तस्मात्प्रमाणाभावादध्यासविपरीतरूपत्वात्प्रकाशानुपपत्तेस्तत्कारणाभावाच्च नाहंकारोध्यस्त इत्याशङ्क्याह—

अध्यस्तमल्पवपुरस्य न वास्तवं त-
त्प्रत्यक्पराग्द्वयमिदं हि परस्परस्मिन् ।
अध्यस्ततां प्रति समर्थमबोधमात्र-
मन्योन्यरूपमिथुनीकरणे निमित्तम् ॥ २७ ॥

अध्यस्तमिति । हिर्हेतौ यस्मादस्यानवच्छिन्नानन्दस्य इदमहंकरणमल्पवपुः दुःखात्मकं परिच्छिन्नं च तस्माद्ध्यस्तमिति सम्बन्धः विमतोहंकार आत्मन्यध्यस्तः अधिष्ठानविपरीतरूपत्वे सति तदभिन्नत्वेन प्रतीयमानत्वात् यद्यदविपरीतरूपत्वे सति यदभिन्नत्वेन प्रतीयते तत्तत्राध्यस्तं यथेदं रजतमिति । न च हेतोरसिद्धिः अहमः परिच्छेदानुभावात् दुःखितत्वानुभवादहमिति चैतन्यसंभेदानुभवाच्चेत्यर्थः ततः प्रमाणसत्त्वान्न प्रमाणाभावः । द्विरूपावभासमहंकारप्रतीतिं चोपपादयति–प्रत्यक्पराग्द्वयामिति । तदहंकरणं प्रत्यक्पराचोर्द्वयं प्रत्यक्पराग्द्वयम् । प्रत्यक्परागुभयाकारमित्यर्थः । इदञ्च परस्परस्मिन्नध्यस्ततां प्रति समर्थमन्योन्याध्यासात्मकमित्यर्थः । अहंकारो हि यद्यपि स्पष्टं द्विरूपोनावभासते तथापि प्रत्यक्पराग्लक्षणरूपद्वयवानेवाहंकारस्याध्यस्तत्वे सिद्धेऽध्यस्तस्य चाधिष्ठानसंभेदनियमादस्ति च विवेकिनामनुभवोपि द्विरूपविषयोहमिति चैतन्यजडाभेदस्यानुभवात् नापि तत्प्रतीत्यनुपपत्तिः—अधिष्ठानप्रकाशस्यैव तत्स्फुरणत्वात् । न चाधिष्ठानस्यानध्यस्तस्याध्यासे प्रकाशानुपपत्तिः परस्पराध्यासस्वीकारादत्र चानुपपत्तिं परिहरिष्यति । नापि कारणानुपपत्तिः अज्ञानमात्रस्यैव कारणत्वादित्याह अबोधमात्रमिति । अन्योन्यरूपमिथुनीकरणे चाबोधमात्रं निमित्तं कारणं न तु विषयदोषादिरपेक्ष्यत इति भावः ॥ २७ ॥

ननु रजताध्यासे दोषत्रयमपि दृष्टं तत्कथं न कारणमित्याशङ्क्य न हि क्वचिद्दर्शनमात्रेण कारणत्वमपि तु सर्वत्र दर्शनेन तच्च दोषत्रयेऽपि नास्तीत्यभिप्रेत्याह—

**साद्दश्यधीप्रभृति न त्रितयं निमित्त-**

**मध्यासभूमिषु जगत्यनुगच्छतीदम् ।**

**ब्राह्मण्यजातपरिकल्पनमात्मनीष्टं**

**जात्या न साम्यमुपलब्धमिहास्ति किञ्चित् ॥२८॥**

सादृश्यधीप्रभृतीति । साद्दश्यधीः प्रभृतिः प्रमुखमादिर्यस्य तत्तथेति तद्गुणसंविज्ञानो बहुब्रीहिः । निमित्तं निमित्तत्वेनाभिमतं साद्दश्यधी-प्रभृति त्रितयं जगत्यध्यासभूमिषु नानुगच्छति न सर्वत्राध्यासेषु वर्तते अतो व्यभिचारान्न कारणमित्यर्थः । साद्दश्यधीप्रभृति त्रितयं निमित्तं यतोऽध्यासभूमिषु सर्वत्र नानुगच्छतीति वा सम्बन्धः । कुत्र तेषां व्यभिचार इत्याकाङ्क्षायां साद्दश्यस्यादौ व्यभिचारस्थलमाह ब्राह्मण्यजातीति—परिकल्पनमध्यासः सर्वेषामप्यात्मनि ब्राह्मणोहमित्य-नुभवानुरोधेन ब्राह्मण्यजातिकल्पनमिष्टमिह चाध्यासेऽऽत्मनि न कि-ञ्चिज्जात्या साम्यमवयवसाम्यं गुणसाम्यं क्रियासाम्यं वोपलब्धम् । तयोर्निरवयवत्वान्निर्गुणत्वान्निष्क्रियत्वाच्चेत्यर्थः ॥ २८ ॥

ननु तत्रापि यथाकथञ्चित्सारूप्यं वर्णयितुं शक्यत इत्याशङ्क्य ताद्दशं प्रकृतेपि वर्णयिष्यामीत्यभिप्रेत्य पराभिमतं साद्दश्यं तत्कथन-पूर्वकं नास्तीत्याह—

**भूयस्त्ववन्ननु गुणावयवक्रियाणां**

**सामान्यपूगवपुरुक्तमिहाभियुक्तैः ।**

**साद्दश्यवस्तु न चिदात्मनि किञ्चिदत्र**

**जात्यादिभिः सह निरीक्षितमस्ति ताद्दक् ॥२९॥**

भूयस्त्ववदिति । भूयसां भावो भूयस्त्वं तद्युक्तम्, नन्विति प्रसिद्धौ सामान्यपूगवपुरनेकसामान्यघटितमिह जगति [illegible]

स्त्ववत्सामान्यपूगवपुः ननु साहश्यवस्त्वित्यभियुक्तैर्वैशेषिकादिभिरुक्तं, ततः किं तत्राह चिदात्मनीति । ताहक्—गुणावयवक्रियाणां भूयस्त्ववत्सामान्यात्मकं, नास्त्युभयोरप्यवयवादेरभावादित्यर्थः । एवं दूरस्थत्वादिविषयदोषाणामपि तत्रैव व्यभिचारो द्रष्टव्यः ॥ २९ ॥

विषयदोषवत्करणदोषोऽपि व्यभिचारान्न कारणमित्यभिप्रेत्य तस्यापि व्यभिचारस्थलमाह—

**विषयकरणदोषान्न भ्रमः संविदि स्या-**
**दपि तु भवति मोहात्केवलादेवमेव ।**
**भगवति परमात्मन्नद्वितीये विचित्रा-**
**द्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुः ॥ ३० ॥**

विषयकरणदोषादिति । संविदि चैतन्येऽनित्यत्वादिविभ्रमः विषयदोषादिवत् करणदोषादपि न भवतीत्यर्थः । संविदि तावत्सर्वेषामनित्यत्वजन्यत्वप्रत्ययो दृश्यते स च न यथार्थः तन्नाशे प्रमाणाभावात् । न च घटज्ञानं नष्टं पटज्ञानमुत्पन्नमितिप्रत्यय एव प्रमाणं तस्य घटाकाशो नष्टः पटाकाश उत्पन्न इति प्रत्ययवत् घटचैतन्योपरागवृत्त्युत्पादविनाशविषयत्वात् । किञ्च सुषुप्तिकाले तावत्सुखादिज्ञानमस्तीति वक्तव्यमन्यथा तत्परामर्शायोगात्तच्च न जन्यं करणानामुपरतत्वादतो नित्यं तदनादिभावस्य नित्यत्वात् । न च ज्ञानभेदे प्रमाणमस्ति । आत्माभिन्नत्वाच्च ज्ञानं नित्यम् । न चासिद्धिः, स्वयंप्रकाशज्ञानस्य मानान्तराविषयत्वेन भेदावगाहिमानाविषयतया तद्भेदासिद्धेः प्रत्युत मया विदितो घट इति संवेदनस्यानादिनिधनात्मा भेदोऽनुभूयते । श्रुतिरपि न हि द्रष्टुर्दृष्टेरित्याद्या ज्ञाननित्यतां दर्शयति । अतोऽनित्यत्वादिप्रत्ययो विभ्रम एव तत्र विषयदोष इव करणदोषोऽपि न संभवति तस्य स्वप्रकाशत्वेन तद्विषयकप्रमाणाभावात् । रागादेरपि हिततत्साधनविषयत्वा-

देव तत्रासंभवः कस्मात्तर्हि ब्राह्मण्याद्यध्यासो भवतीत्याकाङ्क्षापूर्वक पूर्वपूर्वानुभवजन्यसंस्कारसचिवादज्ञानादेव भवतीत्याह—अपि त्वित्यादिना। अपि तु किन्त्वित्यर्थः केवलाद्दोषत्रयवर्जिताद्दोषत्रयस्य कारणत्वनिरसनफलमाह एवमेवेति। यथा ब्राह्मण्याद्यध्यासोऽज्ञानमात्रहेतुक एवमेव भगवत्यद्वितीये परमात्मनि विचित्रा नानाकारेयं द्वयमिति भ्रान्तिरज्ञानजन्येत्यर्थः ॥ ३० ॥

एवमबोधमात्रमन्योन्यरूपमिथुनीकरणे निमित्तमित्यत्रोक्तं भ्रान्तेरज्ञानमात्रहेतुकत्वं समर्थितमिदानीं पूर्वोक्तान्योन्याध्यासमाक्षिप्य समर्थयते तत्रायमाक्षेपः—नन्वहंकारस्यैवात्मन्यध्यासो भवितुमर्हति, तस्यैव तत्त्वसाक्षात्कारेण बाध्यमानत्वान्नात्मनोहंकारेऽध्यासो युक्तः तस्याबाध्यमानत्वात्तद्बाधे वा सर्वस्यापि निरवधिकबाधया जगच्छून्यत्वप्रसङ्गादिति तत्राह—

**संसिद्धा सविलासमोहविषये वस्तुन्यधिष्ठानगी-**
**र्नाऽऽधारेऽध्यसनस्य वस्तुनि ततोऽस्थाने महान्संभ्रमः।**
**केषां चिन्महतामनूनतमसां पाण्डित्यगर्वाश्रया-**
**दन्योन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यादिति॥३१॥**

संसिद्धा सविलासेति। विलासः कार्यं सविलासमोहविषये वस्तुन्याधत्ते तत्त्वेऽधिष्ठानमिति गीर्वाचकत्वेन संसिद्धा प्रसिद्धा. अध्यसनस्याध्यासस्याधारे वस्तुन्यारोप्य संवलिततया प्रतीयमानांशेन प्रसिद्धा यतस्ततोऽस्थानेऽविषये स्थानेऽयोग्य इति वा केषाञ्चिन्नामग्रहणायोग्यानां महान्संभ्रम इति सम्बन्धः।महतामित्युपहासः।संभ्रमे निमित्तगर्भं तद्विशेषणमाह अनूनतमसामिति। ऊनं न भवतीत्यनूनमधिकमिति यावत्तादृशं तमोऽज्ञानमेषामस्मन्मतसिद्धान्तविभागापरिज्ञानिनामतो ऽज्ञानादेव तेषां

निमित्तान्तरमाह पाण्डित्यगर्वाश्रयादिति । पाण्डित्यप्रयुक्तगर्वाश्रयान्मत्सदृशः को वा विद्यते मद्वचनमात्रेण सर्वे पराजिताः स्युरित्यभिमानादेव जल्पन्तीत्यर्थः । तत्संभ्रममेवाह अन्योन्येत्यादिना । अन्योन्याध्यसने ऽभ्युपगम्यमान इति शेषः । यत इदं जगन्निरास्पदं सदधिष्ठानशून्यमतः शून्य स्यादिति किमप्यबाधितं न स्यादित्यर्थः । अयम्भावः । अध्यस्तेऽहंकारेऽऽधार एवाविद्याविकल्पितं चैतन्यमारोप्यते तस्यैवाध्यासे प्रतीतिर्नाधिष्ठानमविद्यावृतमनवच्छिन्नानन्दरूपमत आधारबाधेप्यधिष्ठानबाधाभावादन्योऽन्याध्यासे जगच्छून्यं स्यादित्यस्मन्मतापरिज्ञानिनां गर्वगर्हिताशयानां चास्थाने अविषये महान्संभ्रम इति ॥ ३१ ॥

ननु यदधिष्ठानं तदेवाधारस्तत्कथमनयोर्भेदमादाय परिहारः क्रियत इत्याशङ्क्य न केवलमस्माभिरेव तद्भेदोऽङ्गीक्रियते किन्तु लोकसिद्धोपीत्याह—

अधिष्ठानमाधारमात्रं यदि स्या-
त्प्रसज्येत सत्यं तदा चोद्यमेतत् ।
न चैतत्सकार्यस्य मोहस्य वस्तु-
न्यधिष्ठानगीर्गोचरे लोकसिद्धा ॥ ३२ ॥

अधिष्ठानमिति । एतज्जगच्छून्यं स्यादित्येतदेतदधिष्ठानस्याधारमात्रत्वे यद्यधिष्ठानमाधारमात्रं भवेत्तदैतच्चोद्यं सत्यं भवेत् न त्वेतदस्ति किन्तु सविलासाज्ञानविषयेऽधिष्ठानगीर्लोके रजताध्यासे सिद्धेत्यर्थः। अयम्भावः । यन्निष्ठतया यत्स्फुरति तत्तस्याधारः यद्विषयाज्ञानाच्च यद्भवति तत्तस्याधिष्ठानमत एवाधिष्ठानज्ञानाद्भ्रमनिवृत्तिं वदन्तोऽज्ञानावृतशुक्त्यादिविशेषांशस्य रजताद्यधिष्ठानत्वमिति वर्णयन्ति । अहंकारश्चाविद्याविकल्पितचैतन्यांशनिष्ठ एव तस्य तन्निष्ठतया स्फुरणादज्ञानकार्यत्वाच्च पूर्णचेतनमधिष्ठानं तस्य तद्विषयाज्ञानकार्यत्वात्तथा

चाधिष्ठानाधारयोर्वस्तुतोऽभेदेऽप्यविद्याधीनविभागमादायायं परिहार उपपद्यत इति ॥ ३२ ॥

नन्वेवमप्याधारस्य चैतन्यस्याहंकारेऽध्यासे तद्बाधया तद्भिन्नब्रह्मापि बाधितं स्यान्न ह्येकरसमेव निरंशं वस्त्वंशेन बाध्यते अंशेन नेति साम्प्रतं ततः कथं शून्यतापरिहार इति तत्राह—

किञ्चानृतद्वयमिहाध्यसितव्यमिष्टं
स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम् ।
सत्यानृतात्मकमिदं मिथुनं मिथश्चे-
दध्यस्यते किमिति शून्यकथाप्रसङ्गः ॥ ३३ ॥

किञ्चेति । इहाहंकाराद्यध्यासेऽनृतद्वयं स्वरूपतोऽध्यस्यमानद्वयमध्यसितव्यमिष्टं चेत्तदा त्वदीयमिदं पूर्वोक्तं चोद्यं सावकाशं भवेदिति सम्बन्धः । कयोस्तर्ह्यध्यासस्तत्राह - सत्यानृतात्मकमिति । इदं मिथुनमुभयमन्योन्यं मिथश्चेदध्यस्यते चेच्छब्दोऽवधारणे शून्यकथाप्रसङ्गः किमिति कस्माद्धेतोर्भवेन्न भवेदेवेत्यर्थः । अयमर्थः । यद्याधारोऽहंकारादिवत्स्वरूपतोप्यध्यस्येत तदाधारस्य चैतन्यस्य स्वरूपतोपि बाधात्तदभिन्नब्रह्मापि बाधितं भवेन्न त्वेदस्ति किन्तु सत्यस्यैवाधारचैतन्यस्याहंकाराभिन्नत्वाकारेणाध्यासः । तथा च येनाकारेणाहंकारेऽऽधारस्यारोपः तेनैवाकारेण तस्य बाधो न स्वरूपत इति न जगच्छून्यतापत्तिरिति । नन्वेवं किमिति बकबन्धप्रयासेनाधिष्ठानस्यैवारोप्यसंसृष्टत्वाकारेणाध्यासो बाधश्चेत्यभ्युपेयतामिति चेन्न ह्येतावता लोकसिद्धाधिष्ठानाधारभेदवर्णनं शिष्यशिक्षायै कृतमनुचितं भवति । नन्वेवं सत्यधिष्ठान बाधाभावहेतुत्वेन तद्वर्णनमनुचितमिति चेन्न—तद्वर्णनस्य संसृष्टत्वाकारेणापि बाध आधारस्य नाधिष्ठानस्येति लौकिकाधिष्ठानवैषम्यपरिहारार्थत्वात् । अथवा सर्वं शून्यं स्यादिति साटोपं जल्पन्तं प्रत्यहृदयवा-

च एव प्रतिवाचो भवन्तीति न्यायेनैतावतायं निवृत्तशङ्को भवत्विति मनीषया तत्त्वं निगूह्याधाराधिष्ठानभेदकीर्त्तनेनाधिष्ठानं परिशेषितं कुशलमतिना शिष्येण तत्राप्यनुपपत्तावुद्भावितायां तात्विकोयं परिहारः कृत इति सर्वं समञ्जसम्। यद्वा नन्वस्तु यथाकथञ्चित् कार्याध्यासेधिष्ठानाधारभेदवर्णनमज्ञानाध्यासे तु तन्न सगच्छते तत्राधाराधिष्ठानभेदाभावात् । न चाज्ञानमहंकारादिवदज्ञानविकल्पिते चैतन्येऽध्यस्यते आत्माश्रयापातादज्ञानान्तराभावाच्च न च जीवाश्रयमज्ञानमित्युक्तं वक्ष्यति च। ननु चैतन्यानन्दयोरारोपितभेद आश्रीयत इति चेत्सत्यं न हि तदाधाराधिष्ठानविभागासिद्ध्यर्थमाश्रीयते किन्तु प्रतीत्यनुरोधेनावृतत्वानावृतत्वयोः सांकर्य्यपरिहाराय। नन्वन्यार्थं कृतमप्यन्यार्थमप्यविरुद्धं भविष्यतीति चेन्न अज्ञानस्यावारकस्य समानाश्रयविषयत्वनियमेनाधाराधिष्ठानभेदानुपपत्तेः वक्ष्यति च "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले"ति। नचाज्ञानाध्यासेऽन्योन्याध्यासो नास्तीति वाच्यम्, अध्यासवैरूप्यकल्पनायोगाद्भ्रान्तौ प्रतीयमानत्वादिति वक्ष्यमाणहेतोस्तत्रापि सत्त्वाच्च। तस्मादाधारादिभेदस्य कल्पितस्याज्ञानाध्यासेऽभावाच्छून्यतादोषस्तदवस्थ एवेत्याशङ्क्य तत्र तद्भेदाभावेप्यधिष्ठानस्याज्ञाने संसृष्टत्वाकारेणैवाध्यासान्न स्वरूपतो बाध इति न शून्यतापत्तिरिति परिहरति—किञ्चानृतद्वयमिति ॥ ३३ ॥

ननु माभूदितरेतराध्यासे शून्यतापत्तिस्तथापि न स स्वीकार्यः तत्र प्रमाणाभावादित्याशङ्क्य प्रसिद्धाध्यासवदहंकाराध्यासेपि स स्वीकर्त्तव्य इति वक्तुं प्रसिद्धाध्यासे तत्र प्रमाणमाह—

इदमर्थवस्त्वपि भवेद्रजते
परिकल्पितं रजतवस्त्विदमि ।
रजतभ्रमेऽस्य च परिस्फुरणा-
न्न यदि स्फुरेन्न खलु शुक्तिरिव ॥ ३४ ॥

इदमर्थवास्त्विति । इदंशब्दार्थवस्तुव्यवहारदशायां बाधाभावापेक्षया वस्तुग्रहणं रजते इदमंशस्तत्संसृष्टत्वाकारेण परिकल्पितो भवेत्तत्र हेतुः रजतभ्रमेऽस्येदमंशस्य परिस्फुरणादिति तत्र दृष्टान्तः । इदमीति रजतवदिति । विपक्षे बाधकमाह न यदीति । इदमंशो रजतसंसृष्टत्वाकारेण रजते कल्पितो यदि न भवेत्तर्ह्यकल्पितशुक्तित्वांशवदिदमंशोऽपि न स्फुरेन्न प्रकाशेत प्रकाशते चेदमिति तस्मात्कल्पितमिति । अत्रायं प्रयोगः भ्रान्तौ प्रतीयमान इदमंशः स्वस्मिन् कल्पिततया प्रतीयमाने कल्पितः भ्रान्तौ प्रतीयमानत्वादिदम्यारोपितरजतवदिति ॥ ३४ ॥

इत्थमन्योन्याध्यासेऽनुमानं प्रमाणमुपन्यस्य प्रत्यक्षमपि तत्राह-

**रजतप्रतीतिरिदमि प्रथते**
**ननु यद्वदेवमिदमित्यपि धीः ।**
**रजते तथा सति कथं न भवे-**
**दितरेतराध्यसननिर्णयधीः ॥ ३५ ॥**

रजतप्रतीतिरिति । इदमि विषये यद्वद्रजतप्रतीतिः प्रथते एवं रजते विषये इदमिति धीः प्रथते नन्विति सम्बन्धः । यथा रजतमिदमभिन्नं प्रथते तथेदमपि रजताभिन्नं प्रथत इत्यर्थः । एतादृशप्रत्ययासिद्धिशङ्कानिराकरणार्थं प्रतीतिः प्रथत इत्युक्तम् । यद्यप्यस्मन्मते उभयावभासकमेकं ज्ञानं नास्ति अविद्यावृत्तिलक्षणज्ञानाभासस्य रजतमात्रगोचरत्वादन्तःकरणवृत्तेश्चाधिष्ठानमात्रगोचरत्वात्तस्यां दशायां रजतस्यानुत्पन्नत्वात् ज्ञानस्य च विरम्य व्यापारायोगादन्तःकरणवृत्तिवेद्यत्वे मिथ्यात्वानुपपत्तेश्च तथापि उभयावभासिसाक्षिण एकत्वात्तत्र परस्परात्मतयैवोभयोरवभासान्नैकानुभवविषयत्वानुपपत्तिरिति फलितमाह तथा सतीति । उभयोरप्यन्योन्यात्मतया प्रतीयमानत्वे सतीतरेतराध्यासनिश्चयात्मिका धीः कथं न भवेदितरेतराध्यासो भवेदेवेत्यर्थः ॥ ३५ ॥

नन्वध्यासे विशेषस्फुरणस्यैवाध्यासोऽपेक्ष्यते न तु सामान्यस्फुरणस्यापि ततः पूर्वोक्तमनुमानमप्रयोजकमित्याशङ्क्य विनिगमनाभावाल्लाघवाच्च स्फुरणमात्रं स्वविषयाध्यासमपेक्षत इत्याह—

अध्यस्तमेव हि परिस्फुरति भ्रमेषु

नान्यत्कथञ्चन परिस्फुरति भ्रमेषु।

रज्जुत्वशुक्तिशकलत्वमरुद्वितित्व-

चन्द्रैकताप्रभृतिकानुपलम्भनेन ॥ ३६ ॥

अध्यस्तमेवेति। हि शब्दो हेतौ यस्मान्न विनिगमनं किञ्चिदस्ति तस्मादध्यस्तमेव परिस्फुरति स्फुरणमात्रमध्यासं स्वविषयस्यापेक्षत इत्यर्थः। न केवलं विनिगमकाभावः। अपि तु व्यतिरेकनियमाच्चेत्याह—नान्यदिति। कथञ्चनेति। सामान्यतो विशेषतो वेत्यर्थः। अनध्यस्तस्याध्यासेऽप्रतीतौ दृष्टान्तमाह-रज्जुत्वेत्यादिना। सर्परजततोयचन्द्रद्वित्वादिभ्रमेष्वनध्यस्तानां रज्जुत्वादीनामनुपलम्भादित्यर्थः ॥ ३६ ॥

एवं प्रत्यक्षानुमानाभ्यां प्रसिद्धाध्यासेष्वितरेतराध्यासत्वमुपपाद्य तत्फलमहंकाराध्यासेऽपीतरेतराध्यास एव भवतीत्युपसंहरति—

इतरेतराध्यसनमेव तत-

श्चितिचैत्ययोरपि भवेदुचितम्।

रजतभ्रमादिषु तथावगमा-

न्न हि कल्पना गुरुतरा घटते ॥ ३७ ॥

इतरेतराध्यसनमेव तत इति। तत—अध्यासत्वात्, अहंकाराध्यासः इतरेतराध्यासः अध्यासत्वाद्रजताद्यध्यासवत्। न चाप्रयोजकः अध्यासद्वैविध्यकल्पनागौरवस्यैवानुकूलतर्कत्वादित्याह—न हि कल्पनेति। हि यतो गुरुतरा कल्पना एकरूपत्वे संभवत्यध्यासद्वैविध्यकल्पना न

युज्यते ततश्चितिचेत्ययोरपीतरेतराध्यसनमेवोचितमिति पूर्वेण सम्बन्धः ॥ ३७ ॥

नन्वात्माद्यधिष्ठानस्याहंकारादावध्यासेऽहंकारादेरात्माद्यधिष्ठानस्यात्मादिपूर्वभावित्वं वक्तव्यमधिष्ठानस्य कादाचित्काध्यासपूर्वभावित्वनियमात् न च तत्संभवत्यात्मादेरहंकारादिभ्यः पूर्वमेव सिद्धत्वात् किंचाहंकारादिरप्यात्मादावध्यस्तात्माद्यनन्तरसिद्धिकः, तथाचात्मादौ सिद्धेऽहंकारादिसिद्धिः अध्यस्ते च तस्मिन्नात्मादिसिद्धिरित्यन्योऽन्याश्रयः, नचाधिष्ठानस्यारोप्यसंसृष्टत्वाकारेणैवाध्यासात्संसर्गस्य च संसर्ग्यनन्तरभावित्वात्संसर्ग्यहंकारादेरस्त्येव पूर्वभावित्वमहंकारश्च केवल एवाधिष्ठानेऽध्यस्तः न तु संसृष्टेऽधिष्ठाने स चाहंकाराद्यध्यासात्पूर्वमेव सिद्ध इत्यात्मादिमात्राध्यस्ताहंकारादौ तत्संसृष्टत्वाकारेणाधिष्ठानात्मादेरध्यास इति नान्योऽन्याश्रय इति वाच्यं, तत्र किमहंकारादिः स्वतन्त्र सन्पश्चादात्मना संबध्यते किं वा सदात्मपरतन्त्र एव, नाद्यः—आत्मादावध्यस्तस्य स्वातन्त्र्यानुपपत्तेः, न द्वितीयः—सदात्माद्यभिन्नस्य तस्य तत्संसर्गपूर्वभावित्वानुपपत्तेः, न ह्येतत्संभवति—अहंकारादिः सदा आत्माद्यधिष्ठानाभिन्न एवाधिष्ठानं तु तदसंस्पर्शीति, अरोप्यसंसृष्टत्वाकारेणाधिष्ठानमारोप्यत इत्यत्र किमारोप्यसंसर्गः विशेषणमुतोपलक्षणम् आद्ये स्वस्मिन् स्वारोपापातः द्वितीयेऽऽत्ममात्रमारोप्यत इति पूर्वदोषाः प्रादुःष्युः तस्मादनुपपन्नोऽयमितरेतराध्यास इति चेन्नेत्याह —

अनुभूतियुक्त्यनुमितित्रितया-
दितरेतराध्यसनसिद्धिरतः ।
चितिचेत्यवस्तुयुगलस्य न चेत्
त्रितयस्य बाधनमिहापतति ॥ ३८॥

अनुभूतियुक्तीति। आधारारोप्ययोरितरेतराभेदानुभवोनुभूतिः, युक्तिः-अध्यस्तस्यैवाधारे प्रतीतिरित्युक्ता, अनुमानं—भ्रान्तौ प्रतीयमानत्वादित्यभिहितम्, अतोनुभूतियुक्त्यनुमितित्रितयाञ्चितिचेत्यवस्तुयुगलस्येतरेतराध्यसनसिद्धिरिति सम्बन्धः। नन्वधिष्ठानमारोपितेऽध्यस्तं न भवति तद्विषयाज्ञानाजन्यत्वादित्याशङ्क्याह त्रितयस्येत्यादिना। इहास्मिन्ननुमाने आश्रितेऽनुभूत्यादित्रितयस्य बाधनं स्यादित्यर्थः। अयम्भावः—इतरेतराध्यासो हि प्रमाणसिद्धो वज्रिणाप्यशक्यापलापः। तत्र याश्चानुपपत्तय उद्भाव्यन्ते ता अनवकाशपराहताः। तत्र न तावदध्यस्तस्य पूर्वभावित्वानुपपत्तिः यत्र हि यस्य स्वरूपतोप्यध्यासः तस्यैव तदध्यसात्पूर्वभावित्वं वक्तव्यं रजताद्यध्यासे इदमंशादिवद्यस्य पुनः संसृष्टत्वाकारेणान्यत्राध्यासस्तस्य न तत्पूर्वभावित्वमभिधेयमधिष्ठानस्यारोप्यसंसृष्टत्वाकारेणाध्यासस्यारोप्यस्वरूपाध्यासनान्तरीयकत्वान्न हि संभवत्यहंकारादिरात्माभिन्नतया प्रथतेऽऽत्मादिस्त्वरोप्यात्तटस्थतयेति। एतेन स्वस्मिन्स्वस्यारोपप्रसङ्ग इत्यपि निरस्तम्। आत्मनस्तदभेदप्रतीतेरेवत्राध्यासरूपत्वादत एव तद्विषयाज्ञानाजन्यत्वादिति हेतुरप्यप्रयोजकः। तस्मात्स्वरूपाध्यासाधिष्ठानस्यैवाज्ञानविषयत्वपूर्वभावित्वं वक्तव्यमिति नात्रानुपपत्तिलेशोपीति ॥ ३८ ॥

ननु मा भूदितरेतराध्यासानुपपत्तिः, अध्यास एवात्मनि न संभवति, आत्मनोऽधिष्ठानत्वानुपपत्तेः, अधिष्ठानं ह्यध्यस्यमानसदृशमंशद्वयवत्परिच्छिन्नमध्यस्यमानेन सहैकज्ञानविषयत्वयोग्यं च दृष्टम्। न चात्मनि ब्राह्मण्यादिकल्पने सादृश्याद्यसंभवः। स्थूलदेहावच्छिन्नस्यात्मनो जातिकल्पनाधिष्ठानत्वेन तस्याभिधेयत्वाकारेण तत्सादृश्योपपत्तेः। अवच्छेदकांशेनैवांशवत्त्वस्यापि संभवादवच्छेदकपरिच्छेदेनैव परिच्छिन्नत्वस्यापि संभवात्तेनैवैकज्ञानविषयत्वसंभवाच्च। नापि संविद्यनित्यत्वादिकल्पने व्यभिचारः। तस्या अपि अन्तःकरणवृत्तिसम्बन्धित्वेन तदुपपत्तेः। अहंकाराधिष्ठानं तु चैतन्य-

मनभिधेयमनंशमपरिच्छिन्नमविषयमसङ्गं च प्रमाणदोषोपि भ्रान्तौ कारणं भवत्येव। न च ज्ञानेऽनित्यत्वाद्यध्यासे व्यभिचारः। स्वयंप्रकाशस्य तस्य स्वस्यैव स्वविषयप्रमाणत्वेनानित्यान्तःकरणवृत्तिसम्बन्धित्वलक्षणस्वनिष्ठदोषस्य तत्रापि सत्त्वात्। नन्वहंकारस्याविद्याविकल्पितचैतन्येऽध्यस्तत्वादभिधेयत्वादिकं संभवत्येवाविद्या च स्वप्रकाशप्रमाणदोषो विद्यत इति चेत् न तावदहंकारस्याविविद्याकल्पित चैतन्येऽध्यासः संभवति। अविद्याभ्रान्तिसम्यग्ज्ञानानामेकाश्रयत्वनियमात्। नाप्यविद्याया दोषत्वमपि संभवति तस्या अर्थकारणत्वेन दोषत्वानुपपत्तेरित्याशङ्क्याद्यावेतत्सर्वमङ्गीकृत्याह—

सदृशसांशपराग्विषयेषु चे-
द्भवति दोषवशाज्जगति भ्रमः।
भवतु तत्सकलं वदितुं वयं
तदुपचारवशाद् दृशि शक्नुमः॥ ३९॥

सदृशसांशेति। पराक्परिच्छिन्नं जगति सदृशादिवस्तुनिराकरणादिदोषवशाद्भ्रमो भवतीति चेद्ब्रूषे भवतु तत्सकलं दृशि प्रत्यगात्मन्यप्यज्ञानवशाद्वदितुमुपपादयितुं वयं मायावादिनः शक्नुमः इत्यर्थः। अयमर्थः अहंकारादि कार्यं ह्यज्ञानविकल्पित एवाध्यस्यते कार्यस्य कारणावच्छिन्न एवाध्यासौचित्यात्। न चैतावता समानाश्रयत्वभङ्गः। बिम्बप्रतिबिम्बयोरेकत्वेन समानाश्रयत्वयोगात्ततोऽहंकाराद्यधिष्ठानचैतन्यस्याभिधेयत्वादिसंभवात्प्रतीतितो घटादिव्यावृत्तत्वाकारेणाप्यहंकारादिभिरात्मनः सादृश्यसंभवादविद्यया सांशत्वविषयत्वपरिच्छिन्नत्वानामपि संभवादात्माधिष्ठानं भवत्येव। नापि प्रमाणदोषाभावः। अविद्याया एव दोषत्वात्। न चाभिहितयुक्तेस्तस्यादोषत्वमनुपपन्नमिति वाच्यम्। तस्योपरिष्टादुपपादयिष्यमाणत्वादिति॥ ३९॥

नन्वात्मनो विषयत्वादिसमाश्रयणेऽपसिद्धान्तः स्यादित्याशङ्क्या-मुख्यस्य तस्याश्रयणे नापसिद्धान्त इति भाष्यकारसंमतिमाह—

अपि च भाष्यकृदेव तदब्रवी—
द्विषयताद्युपचारसमाश्रयात् ।
स्ववचसैव न तावदिति ब्रुव—
न्सकलमात्मनि विभ्रमसिद्धये ॥ ४० ॥

अपि च भाष्यकृदेवेति । विषयतादीत्यादिपदेन सदृशत्वादि गृह्यते । "न तावदयमेकन्तेनाविषयः अस्मत्प्रत्ययविषयत्वादिति" अन्तः करण-प्रतिबिम्बिततया स्पष्टव्यवहारविषयत्वेनोपचाराद्विषयत्वमर्थान्तः-करणाभिन्नतया पराग्व्यावृत्तत्वादिकं च ब्रुवन् भाष्यकृदपि स्ववचसै-वात्मनि च विभ्रमसिद्धये उपचारवशात्सकलं विषयताद्यब्रवीदेवेति सम्बन्धः ॥ ४० ॥

एवमधिष्ठानस्याध्यस्यमानेन सहैकविज्ञानविषयतायोग्यत्वनियम-मङ्गीकृत्यावोचदिदानीं तत्परित्यज्याह—

अपरोक्षरूपविषयभ्रमधी—
रपरोक्षमास्पदमपेक्ष्य भवेत् ।
मनसः स्वतो नयनतो यदि वा—
स्वपनभ्रमादिषु तथा प्रथितेः ॥ ४१ ॥

अपरोक्षेति । अपरोक्षा या रूपविषयभ्रमधीः रूप्यते ज्ञायत इति रूपं गजादीत्यर्थः । अपरोक्षस्वरूपविषयविभ्रमधीरिति वा अपरोक्ष-मास्पदमव्यवधानेन प्रकाशमात्रमधिष्ठानमपेक्ष्य भवेन्न त्वधिष्ठानस्य विषयत्वमप्यपेक्ष्य गौरवादित्यर्थः । ननु विषयत्वं विनाधिष्ठानस्या-व्यवधानेन प्रकाशमानत्वमेव न दृष्टं तत्राह—मनस इति । यथाधिष्ठा-

नस्यापरोक्षत्वं परमते क्वचिन्मनसो भवति यदि वा-यद्वा क्वचिन्नयनतो भवति तथास्मन्मते स्वतोऽपि भवतीत्यर्थः। स्वतोऽपरोक्षे कुत्राध्यासो दृष्ट इत्याशङ्क्यात्मन्येव सर्वसम्प्रतिपन्नं तादृग्विधं भ्रमं दर्शयति स्वपनभ्रमादिष्विति। आदिपदेन ज्ञानाध्यासः शोकमोहादिभ्रमश्च संगृह्यते तथा चावगतेरधिष्ठानस्य स्वतोऽपरोक्षत्वावगतेरित्यर्थः। अस्ति हि स्वप्ने गजादिविभ्रमः सर्वसंप्रतिपन्नः तत्र च न बाह्यं किञ्चिद-धिष्ठानं भवति ज्ञायमानं ह्यधिष्ठानम्। न च तदा बाह्यविषयज्ञानं संभवति तद्विषयचक्षुरादेरुपरतत्वात्। न च मनसा तत्संभवः, तस्य बहिरस्वातन्त्र्यात्। न च स्मृतेऽधिष्ठाने गजाद्यारोपः, अधिष्ठाना-परोक्ष्यं विनाध्यस्तस्य तदनुपपत्तेः। न च स्मर्यमाणमपरोक्षं भवति। न च स्मर्यमाणगजादौ सन्निहितदेशत्वाद्यारोपाद् गजादेरपरोक्षत्वा-नुभव इति वाच्यं, तर्ह्यारोप्यप्रकारकत्वनियमेनारोप्यस्य संनिहितो गज इत्येवापरोक्षो गजोऽनुभूयते नत्वयं गज इति। नन्वयं गज इति तथैवानुभूयत इति चेन्न—अतिनिकटापेक्षया किञ्चिद्व्यवहितगजादौ स गज इति प्रत्ययस्याप्यपरोक्षत्वात्तस्मात्स्वतोऽपरोक्षात्मैव स्वप्न-विभ्रमस्याधिष्ठानमिति भावः॥ ४१॥

नन्वस्त्वात्मा स्वप्नादिविभ्रमस्याधिष्ठानं, न चैतावता स्वप्नभ्रमस्य स्वतोऽपरोक्षाधिष्ठानत्वमायाति आत्मनः स्वतोऽपरोक्षत्वाभावात्तत्राह–

स्वतोऽपरोक्षा चितिरत्र विभ्रम—
स्तथापि रूपाकृतिरेव जायते।
मनोनिमित्तं स्वपने मुहुर्मुहु—
र्विनापि चक्षुर्विषयं स्वमास्पदम्॥ ४२॥

स्वतोऽपरोक्षेति। अत्र स्वप्ने चितिश्चैतन्यरूप आत्मा स्वतोऽपरो-क्षेति सम्बन्धः। कुत इति चेत्किं स्वप्ने आत्मनोऽपरोक्षत्वमेव नेति ब्रूषे किं वापरोक्षोऽपि स्वतः स्वयंप्रकाशतया परोक्षो न भवतीति।

नाद्यः—अहमितिप्रत्यक्षविरोधादित्यभिप्रेत्य द्वितीयनिराकरणे हेतुमाह—तथाहीत्यादिना। हिशब्दो हेतौ यस्मात्स्वप्ने मुहुर्मुहुर्मनोनिमित्तमधिष्ठानज्ञाननिमित्तं मनोगोचरमधिष्ठानमिति यावत्तथा चक्षुर्विषयं स्वं स्वीयमास्पदमधिष्ठानं विनापि रूपाकृतिर्गजाद्याकारोऽपरोक्षविभ्रमो जायते तस्मात्स्वतोऽपरोक्षेति सम्बन्धः। अयमर्थः-स्वप्ने आत्मा तावदपरोक्ष इत्यविवादं तत्र न तावन्मनोजन्यज्ञानविषयतयाऽपरोक्षः आत्मा न मनःसंयोगजन्यप्रत्यक्षविषयः मनःसंयोगाधारत्वान्मनोवदित्यनुमानेन तदविषयत्वस्य सिद्धत्वात् न चानेनैव ज्ञानाद्यनाश्रयत्वमप्यनुमातुं शक्यत इत्याभाससमानयोगक्षेमोयं हेतुरिति वाच्यम्, ज्ञानसुखादेरात्मस्वरूपत्वेन मनः संयोगजन्यत्वाभावात् वृत्तिलक्षणज्ञानादेर्मनोधर्मत्वेन सिद्धसाधनत्वात्, दृष्टान्तस्य साध्यविकलत्वाच्च। न च वृत्तिलक्षणज्ञानादेर्मनोधर्मत्वे प्रमाणाभावः "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः। न च तत्राविभुत्वमुपाधिः गगनादौ साध्याव्यापकत्वात्। न च ज्ञानानाश्रयत्वमुपाधिः साधनव्यापकत्वात्। तज्ज्ञानविषयत्वस्य तज्ज्ञानानाश्रयत्वेन व्याप्तेर्घटादौ दर्शनाच्च। नापि ज्ञानाश्रयतयाऽपरोक्षः तदभावात् ज्ञानव्यतिरिक्तस्य तदधीनप्रकाशस्य ज्ञानकर्मत्वनियमाच्च, आत्मनो ज्ञानात्मत्वे तदधीनप्रकाशत्वानुपपत्तेश्च। तस्मात्स्वयंप्रकाश आत्मा कारणान्तरं विना प्रकाशमानत्वात्स्वसत्तायामप्रकाशशून्यत्वाद्वा संवेदनवद् व्यतिरेकेण घटवच्च। न चायं हेतुरसिद्धः। आत्मनोऽवस्थात्रयेपि प्रकाशाव्यतिरेकाद्व्यतिरेककाले जिज्ञासायां सत्यां संशयादिप्रसङ्गात्तस्मात्स्वयं प्रकाश एव आत्मेति चक्षुर्ग्रहणं त्वधिष्ठानान्तरनिराकरणार्थमिति द्रष्टव्यम्। अतो नाधिष्ठानस्य विषयत्वनियम इति भावः॥ ४२॥

एवमधिष्ठानाध्यस्यमानयोरेकज्ञानविषयत्वयोग्यत्वं स्वरीत्या निराकृत्य परीत्यापि तन्नियमं निराकरोति—

मनोऽवगम्येऽप्यपरोक्षताबलात्
तथाम्बरे रूपमुपोल्लिखन् भ्रमः ।
सितादिभेदैर्बहुधा समीक्ष्यते
यथाक्षिगम्ये रजतादिविभ्रमः ॥ ४३ ॥

मनोऽवगम्य इति । यथा अक्षगम्ये शुक्तिकादौ रजतादिविभ्रमः तथा मनोवगम्ये अम्बरवदम्बरे नीरूपेऽप्यात्मनि गगने वा अपरोक्षताबलात्सितनीलपीतादिवर्णभेदैर्बहुप्रकारं रूपमुपोल्लिखन्विषयीकुर्वन् भ्रमो दृश्यत इति सम्बन्धः । अस्ति हि परेषामप्यात्मनि मम गौरो वर्णः कृष्णो वर्ण इतिरूपविशेष्यकोऽपरोक्षविभ्रमः । अम्बरं नीलमिति गगनविशेष्यकः । स च चाक्षुष एव जात्यन्धस्यानुदयान्मनसो बहिरप्रवृत्तेश्च । आत्माकाशौ न चक्षुर्जन्यज्ञानविषयत्व योग्यौ अरूपिद्रव्यत्वादतोधिष्ठानाध्यस्यमानयोरेकज्ञानविषयत्वयोग्यत्वं न परमतेऽपि नियतमिति । आकाशस्य च मनोवगम्यत्वमचाक्षुषत्वाभिप्रायं कथं तर्ह्याकाशस्यापरोक्षत्वमिति परमते तु न कथञ्चिदस्मन्मते तु नित्यानुभवप्रसादादत एव तदध्यस्तरूपादेरपरोक्षत्वं तथा चाधिष्ठानस्य सांशत्वपरिच्छिन्नत्वादिनियमोपि न तत्रैव व्यभिचारादिति भावः ॥ ४३ ॥

ननु निरंशस्यात्मनः कथमधिष्ठानत्वं सामान्यविशेषाभ्यां ज्ञातत्वाज्ञातत्वे हि तत्प्रयोजके न चनिरंशस्य स्वयंप्रकाशस्य ते संभवत इति चेन्न-स्वयं ज्योतिष्यप्यात्मनि ज्ञातत्वाज्ञातत्वयोरुपपादितत्वात् । किंच ज्ञायमानाभिन्नस्यापि लोकेऽज्ञायमानत्वं दृष्टं तद्वत्स्वयंप्रकाशतया प्रकाशमानेपि तत्संभवतीति सदृष्टान्तमाह—

ज्ञातेऽपि तावति ततोऽनतिरिक्तरूपेऽ-
प्यज्ञानतः स्फुरणमस्फुरणं च दृष्टम् ।

दूरस्थयोर्ननु वनस्पतिवस्तुनोस्त-
द्भेदो न दृष्टिविषयोऽवगते च ते नः ॥ ४४ ॥

ज्ञातेऽपीति। तावति ज्ञातमात्रे तस्यैव व्याख्यानं ततोऽनतिरिक्त-रूप इति ज्ञाताद्रूपादनतिरिक्तेऽभिन्ने ज्ञानतः स्फुरणमज्ञानतोऽस्फुरणं च दृष्टमिति विभागः। स्फुरणमभिव्यक्तिः। अस्फुरणं विपरीतव्यवहारयोग्यत्वम् कुत्र दृष्टमित्याशङ्कायामाह दूरस्थयोरिति। दूरस्थयोर्वनस्पतिवस्तुनोर्वृक्षयोस्तद्भेदो वृक्षस्वरूपो न दृष्टिविषयः। ते चावगते इति नोऽस्माकं सर्वेषां प्रसिद्धमित्यर्थः। अयम्भावः। भेदो हि वस्तुनः स्वरूपं न धर्मः, अन्योऽन्याश्रयापातात्तथापि दूरस्थयोर्वृक्षयोर्वृक्षत्वेन प्रतीयमानयोरपि तावन्मात्रस्वरूपो भेदो न ज्ञायत इत्यङ्गीकर्त्तव्यमन्यथा भेदभ्रान्त्यनुदयापातादेवं ज्ञातेप्यात्मन्यज्ञातत्व संभवात्तस्याधिष्ठानत्वमुपपन्नमिति ॥ ४४ ॥

ननु शुक्तीदमंशयोर्ज्ञातत्वाज्ञातत्वे भेद एव प्रयोजको दृष्टः। अन्यथा इदमंशेप्यज्ञातत्वापत्तेः। न च वाक्यं "त्वदुक्तमर्थं न जानामि" इति ज्ञातस्यैवाज्ञातत्वमप्यनुभूयत इति साक्षिणो ज्ञानाविरुद्धत्वादित्याशङ्क्य यं प्रति यस्यानन्यथासिद्धसन्निधिकत्वं स एव तत्प्रयोजकः। न च ज्ञातत्वाज्ञातत्वे प्रति भेदस्तादृशः। तस्यान्यथा सिद्धत्वादपुनरुक्तशब्दवाच्यत्वं तु तादृशं तत्र प्रयोजकं भवति। अत एव नेदंतांशेऽप्यज्ञातत्वापादनमित्यभिप्रेत्याह—

यत्रापि दैवगतितोऽस्त्यतिरिक्तभावो
रूपात्प्रतीतिविषयादितरत्र रूपे।
तत्राप्यबोधघटनां प्रति नाङ्गभाव-
स्तस्यातिरिक्तवपुषोऽपुनरुक्तरूपात् ॥ ४५ ॥

यत्रापीति । यत्रापि दैवगतितः काकतालीयन्यायात् प्रतीतिविषया-द्रूपात्प्रतीयमानेदमंशादेरितत्र रूपेऽज्ञायमानशुक्तित्वादौ अतिरिक्त-भावो भिन्नत्वमस्ति तत्राप्यपुनरुक्तरूपादपर्यायशब्दवाच्यत्वाकारा-दतिरिक्तवपुषोऽन्यस्याज्ञातांशाद्भेदस्याबोधघटनां प्रत्यज्ञातत्वसंपादनं प्रति नाङ्गत्वमित्यर्थः । शुक्तित्वेदमंशादावियं शुक्तिरिति सामान्यविशे-षत्राचकापर्यायशब्दवाच्यत्वसत्त्वादेव ज्ञातत्वाज्ञातत्वे इत्यर्थः ॥४५॥

ननु भेद एव प्रयोजकोऽपर्यायशब्दवाच्यत्वं त्वन्यथासिद्धं किं न स्यादित्याशङ्क्याव्यभिचारिमात्रमित्याह श्लोकद्वयेन—

शुक्तीदमंशात्पृथगप्रतीता
त्रिकोणता स्यान्न तु वस्तुवृत्त्या ।
तथापि तत्स्थं न पृथक्त्वमिष्टं
तदप्रबुद्धत्वनिमित्तभूतम् ॥ ४६ ॥

शुक्तीदमंशादिति । यद्यपि शुक्तिकाया इदंत्वसामान्याकारादप्रतीता त्रिकोणता विशेषांशो वस्तुवृत्त्या दैवगत्या पृथक् स्यात् न तु भिन्ना-स्यादेव तथापि तत्स्थं त्रिशेषांशनिष्ठं भिन्नत्वं तस्य विशेषांशस्या-प्रबुद्धत्वमज्ञातत्वं प्रति निमित्तभूतं सन्नेष्टम् ॥ ४६ ॥

कुतः—

यतः प्रपश्यन्नपि भेदिनः स्वं
वनस्पते रूपमभिन्नमस्मात् ।
न भेदमस्य प्रतिपद्यतेऽद्धा
वनस्पतेः पार्श्वगतात्परस्तात् ॥ ४७ ॥

यत इति । यतोऽभेदिनोऽभिन्नस्य वनस्पतेः स्वं स्वीयमसाधारण-रूपं प्रपश्यन् चक्षुषा जानन्नपि अस्माद्भेदिनोऽभिन्नमेतत्स्वरूपं पार्श्व-

गतात्समीपस्थात्परस्माद्भनस्पतेः भेदमक्ष्णा न प्रतिपद्यते न जानाति ततः शुक्तिदमंशादिति पूर्वेण सम्बन्धः ॥ ४७ ॥

अभेददृष्टान्तेनाप्येकस्य ज्ञातत्वाज्ञातत्वे उपपादयति—

सप्रत्यभिज्ञनयनोत्थधियो घटादेः
स्वाभाविकात्स्ववपुषोऽनतिरिक्तरूपः।
स्थेमा प्रबोधविषयो विषयत्वमेती—
त्यङ्गीकृतं ननु मितेऽपि घटादिकेऽर्थे ॥४८॥

सप्रत्याभिज्ञेति । प्रत्यभिज्ञायतेऽनयेति प्रत्यभिज्ञा संस्कारः संस्कारसहकृतेन्द्रियजन्यायाः धियः प्रत्यभिज्ञाया इति यावत्प्रत्यभिज्ञया घटादिके मितेपि घटादेः स्थेमा स्थैर्यं प्रबोधविषयः सप्रत्यभिज्ञनयनोत्थधियो विषयत्वमेतीत्यङ्गीकृतं न त्वित्यन्वयः । न चाभेदस्य घटादिज्ञानेऽप्यज्ञातत्वमसिद्धमिति वाच्यम्, सोऽयं नवेत्यभेदसंशयादिति भावः । नन्वभेदस्य घटादिस्वरूपाभिन्नत्वात्तज्ज्ञानेपि न ज्ञायते तत्राह— स्वाभाविकादिति । घटादेः स्वाभाविकाद्रूपादभिन्न एवाभेदः न तु तद्भिन्नः । अतिरिक्तभेदपक्षोक्तदोषापातात्ततस्तत्रापर्यायशब्दवाच्यत्वमेव प्रयोजकं वक्तव्यमिति भावः ॥ ४८ ॥

एवमात्मनोऽपि त्वं ब्रह्माद्यपर्यायशब्दवाच्यत्वाद्ब्रह्मत्वाकारेणाज्ञातत्वसंभवात्तत्राध्यास उपपन्न इत्युपसंहरति—

एवं स्फुरत्यपि दृगात्मनि तत्स्वरूपे-
णास्फूर्तिभाजि परिकल्पिततोपपन्ना ।
स्वाज्ञानतो जगदिदं परमेश्वरोऽसौ
जीवोऽहमित्यपि विभागवतोऽल्पकस्य ॥४९ ॥

एवं स्फुरत्यपीति । यथा वृक्षादौ स्वरूपेण प्रतीयमानेऽपि भिन्नत्वाकारेणाप्रतीयमाने एकत्वाद्यारोपः एवं चैतन्यात्मना स्फुरत्यपि प्रत्यगा-

त्मनि प्रतीतस्य प्रतीचः स्वरूपभूतब्रह्मात्मनाऽस्फूर्तिभाज्यप्रकाशमाने इदं जगन्मम भोग्यमसौ परमेश्वरः कर्मसन्तुष्टः फलदाताऽहं जीवः कर्मसन्तुष्टपरमेश्वरप्रसादात्तत्फलभोक्तेत्यनेन प्रकारेणापि भिन्नस्याल्पकस्य परिच्छिन्नदुःखात्मकजगतः अज्ञानात्परिकल्पिततोपपन्नेति सम्बन्धः । नचेश्वरत्वस्य कल्पितत्वे मानाभावः । एषा माया स्वाव्यतिरिक्तानि पूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोतीति श्रुतेरिति भावः ॥ ४६ ॥

नन्वनर्थनिवृत्तिर्ज्ञानस्य प्रयोजनमित्युक्तमनर्थश्च दुःखमेव तत्कुतोऽहंकारादेर्मिथ्यात्वं वर्ण्यते तत्राह —

**अल्पं रूपं बन्धनं प्रत्यगात्मा**
**बद्धोऽनेन स्वच्छचैतन्यमूर्तिः ।**
**स्वात्माज्ञानं कारणं बन्धनेऽस्य**
**स्वात्मज्ञानात्तन्निवृत्तिश्च मुक्तिः ॥ ५० ॥**

अल्पं रूपमिति । अल्पं परिच्छिन्नमहंकारादिरूपमेव बन्धनं दुःखहेतुः संसारः अहंकारादितादात्म्याध्यासप्रयुक्तत्वाद् दुःखस्य तदुच्छेदादेव तस्यात्यन्तिकोच्छेद इति तस्य ज्ञाननिवर्त्यत्वप्रदर्शनाय तदध्यस्तत्ववर्णनमुचितमिति भावः । नन्वात्मनोऽसङ्गत्वात्तस्य कथमहंकारादिप्रयुक्तबन्धोपि तथात्वेऽसङ्गत्वव्याहतेस्तत्राह—बद्ध इति । स्वच्छचैतन्यमूर्तिरप्यनेन कर्तृत्वादिबन्धेन बद्ध इव भवति तत्र कारणमाह—स्वात्माज्ञानमिति । अस्यासङ्गप्रत्यगात्मनः स्वात्माज्ञानं स्वस्वरूपब्रह्मविषयाज्ञानं बन्धने कारणं ततो बन्धस्याविद्याक्लृप्तत्वान्न स्वाभाविकासङ्गत्वविरोधः। अत एवाविद्यानिवृत्तिर्मोक्ष इत्याह—स्वात्मज्ञानादिति । अविद्याया बन्धहेतुत्वेन तन्निवृत्तेरेव पुरुषार्थत्वात्स्वात्मज्ञानाज्जायमाना मुक्तिरविद्यानिवृत्तिरेवेत्यर्थः। बन्धस्याविद्याजन्यत्वनिरूपणफलं चाह—

स्वात्मज्ञानादिति । तस्य बन्धनस्य निवृत्तिर्मुक्तिः स्वात्मज्ञानाद् भवतीति सम्बन्धः ॥ ५० ॥

ननु बन्धस्याविद्याजन्यत्वेपि मिथ्यात्वमनुपपन्नमविद्यायाः मिथ्यात्वे मानाभावात्तस्याश्च सत्यत्वे तज्जन्यस्य मिथ्यात्वानुपपत्तेः; अतः सत्यस्यैव ज्ञानान्यत्वेनाज्ञानत्वमिति न तत्कार्यबन्धस्य ज्ञाननिवर्त्यत्वं संभवतीत्याशङ्क्याह—

अज्ञानमप्यविदुषोऽस्य न तु स्वतोऽस्ति
चैतन्यनिर्विकृतिताद्वयताविरोधात् ।
अज्ञाततप्यनवबोधनिबन्धनैव
नात्माश्रयत्वमपि चोदयितव्यमत्र ॥ ५१ ॥

अज्ञानमिति—अस्यात्मनोऽज्ञानमात्मविषयाज्ञानमप्यविदुषोहं ब्रह्मास्मीति साक्षात्कारशून्यस्यैव न विदुष इत्यर्थः । अयम्भावः । अज्ञानं हि ब्रह्मसक्षात्कारविरहदशायामेव न तु तद्दशायामिति सर्वाविवादं वक्तव्यं च तथैव तद्विषयापरोक्षप्रमाणज्ञानस्य तद्विषयाज्ञानविरोधित्वस्य लोके दर्शनात्तत्र ब्रह्मज्ञानदशायां तत्किमिति नानुभूयत इति वक्तव्यं ज्ञानेन तदनुभवस्य प्रतिबद्धत्वादिति चेत्कोयमनुभवप्रतिबन्धो नाम तदनुत्पत्तिरिति चेन्न—तद्विषयसाक्षिणो नित्यत्वात् अत एव न तन्नाशेपि प्रतिबन्धकल्पनायां मानाभावाच्च भूयः कदाचित्तदनुभवे हि स कल्प्येत । ननु ब्रह्मसाक्षात्कारेण निवृत्तत्वान्नानुभूयत इति चेत्प्राप्तं तर्हि तन्मिथ्यात्वमपरोक्षप्रमाणज्ञानत्वेन ज्ञानस्य मिथ्यावस्त्वेकनिवर्त्तकत्वात् । ननु ज्ञानत्वेन जन्यज्ञानत्वेन वा आत्मज्ञानस्याविद्यानिवर्त्तकत्वं न तु प्रमाणसाक्षात्कारत्वेनैव तत्र प्रमाणाभावात् ज्ञानत्वादिरूपेण तन्निवर्त्यस्य च न मिथ्यात्वव्यवहारः प्रागभावादौ तथादर्शनादिति चेन्न—ज्ञानमात्रस्याविद्यानिवर्त्तकत्वे स्वरूपज्ञानादपि तन्निवृत्तिप्रसङ्गेन नित्यानुपलम्भापातान्नापि जन्यज्ञानत्वेन निवर्त्तक

त्वमनुमित्यादेरपि तथात्वापातान्नचेष्टापत्तिः तदभावस्य प्रपञ्चितत्वात् । नन्वपरोक्षप्रमाणज्ञाननिवर्त्यस्यापि सत्यत्वमस्तु—न च लोके तथा न दृष्टं तादृग्विधस्य रजतादेर्मिथ्यात्वस्यैव दर्शनादिति वाच्यम् । गरुडादिज्ञाननिवर्त्यस्य विषादेः सत्यत्वदर्शनादितिचेत् किं तत्र गरुडज्ञानमात्रं विषनिवर्त्तकमुत विशिष्टगरुडज्ञानम् । नाद्यः—अतिप्रसङ्गात् । न द्वितीयः । अन्वयव्यतिरेकाभ्यां ज्ञानविशेषस्य विषनिवर्त्तकत्वासिद्धेः । ननु चोदनाबलाद् ज्ञायत इति चेन्न—विधिविषयस्य तस्य प्रमाणज्ञानत्वानुपपत्तेः । ततोऽयं दृष्टान्तो विषमः । ननु तरति शोकमात्मविदितिशास्त्रप्रामाण्यादेव ब्रह्मज्ञानस्य सत्यप्रपञ्चनिदानाविद्यानिवर्त्तकत्वमस्त्विति चेन्न—शास्त्रं हि प्रमाणं यथावस्थितमर्थमवबोधयत् ज्ञानादज्ञाननिवृत्तिमात्रं बोधयति न तु ज्ञानं सत्यं निवर्त्तयत्यसत्यमिति वा ततः शास्त्रप्रामाण्योपपादनायापि दृष्टानुसरणमेवोचितं न तु ज्ञानस्य दृष्टस्वभावविपरीतवर्णनं ततोऽज्ञानं मिथ्याप्रमाणनिवर्त्यत्वाच्छुक्तिरजतवदित्यनुमानसिद्धत्वादज्ञानमिथ्यात्वस्य तत्र न प्रमाणाभाव इत्यर्थः । किञ्चाज्ञानस्यामिथ्यात्वे तत्किमनादि सिद्धमुत कादाचित्कम् । नाद्यः । अनादिमतोभावस्य निवृत्त्यनुपपत्तेरनिर्मोक्षप्रसङ्गात् । द्वितीयेपि—आत्मा तत्र कारणमुतान्यन्नोभयथापीत्याह—न तु स्वतोऽस्तीति । यद्वा पारमार्थिकस्याज्ञानस्यात्मनिसम्बन्धे आत्मनो विक्रियावत्त्वप्रसङ्गः । तादस्थ्ये चाद्वितीयत्वभङ्ग इत्याह—न तु स्वतोस्तीति। तु शब्द एवकारार्थः । स्वतः स्वभावतः परमार्थकत्वेन नैवास्ति तत्र हेतुः । चैतन्यस्यात्मनो वस्तुतः कारणत्वे निष्कलादिश्रुतिप्रतिपन्ननिर्विकारत्वभङ्गः कारणान्तरसत्त्वे चैकमेवाद्वितीयमिति श्रुतिप्रमितकारणाद्वितीयत्वविरोध इति विभागः । तथाचात्मातिरिक्तस्याज्ञानस्य वस्तुत्वेनानिरूपणादपि तन्मृषेति भावः । नन्वज्ञानस्य वस्तुत्ववत्कल्पितत्वमप्यनुपपन्नं तथाहि— किं तदज्ञानमज्ञानान्तरेण कल्पितमुत स्वेनैव । आद्ये अनवस्था । तदज्ञानेप्येव-

मज्ञानान्तरावश्यंभावादन्योऽन्याश्रयचक्रकान्यतरापत्तिर्वा भवेत् द्वितीये चात्माश्रय इत्याक्षिप्य प्रथममनङ्गीकारेण पराकृत्य द्वितीये चोद्ये दूषणानुवादपूर्वकं तन्निषेधति। अज्ञानितेति। अज्ञानिताप्यनवबोध-निबन्धना स्वनिबन्धनेत्यस्मिन्नर्थे आत्माश्रयः स्यादिति न चोदयित-व्यमित्यर्थः। किमुत्पत्तावात्माश्रयः उत ज्ञप्तौ अथवा स्थितौ। नाद्यः। अज्ञानस्यानादित्वात्। नन्वनादिनोऽज्ञानस्य कथं मिथ्यात्वं दोषजन्य-त्वाभावात्तत्वे वात्मनोपि मिथ्यात्वप्रसङ्ग इति चेन्न—कार्यस्यैव हि दोषजन्यत्वेन मिथ्यात्वं न तु मिथ्यात्वमात्रे दोषजन्यत्वं प्रयोजकं सामान्यप्रयोजकं तु वस्तुत आरोप्यप्रतियोगिकात्यन्ताभाववत्परत्र परावभासत्वं तच्चाज्ञानेऽपि विद्यत एवात्मनस्तु न परत्रावभासोऽतो न तस्य मृषात्वम्। ननूभयोरप्यनादित्वाविशेषे आत्मन एवाज्ञानेऽ-वभासः किं न स्यादिति चेन्न—आरोपितं ह्यधिष्ठानस्फुरणेन तत्सत्तया च प्रतीयते स च भवति न तु स्वतः। अन्यथाऽऽरोपवैयर्थ्यात्तत्र भवतामज्ञानत्वाभिमतं यदि स्वतः सत्तास्फूर्तिमदात्मत्वाभिमतश्च तद्विरुद्धः तदा नाममात्र एव विवादः स्वतः सत्तास्फूर्तिमत एवास्म-दभिमतात्मत्वात्। नापि द्वितीयः। साक्षिमात्रभास्यत्वात्। नापि तृतीयः। चिन्मात्राश्रयत्वात्तस्मादात्माश्रयत्वगन्धमात्रस्याप्यभावादेव न चोदयितव्यमित्युच्यते न तु राजशासनेनेति। किं तर्ह्यस्य स्वाधी-नत्वं नाम वस्त्वन्तरवत्स्वसत्तायां स्वप्रतीतौ च स्वस्यातिरिक्तज्ञाना-नपेक्षत्वमेतदेवास्य स्वपरनिर्वाहकशब्देनोच्यत इति ॥ ५१ ॥

अस्तु वा आत्माश्रयः सोप्यनिर्वचनीयवादिनामस्माकं सुहृ-देव किं च परमते प्रमेयत्वे प्रमेयत्वस्येवाज्ञानस्य स्वाधीनताया अपि प्रमाणसिद्धत्वान्नात्माश्रयो दोषायेत्युदाहरणाद्यवयवमनुमानमाह-

**द्वारं तमोऽन्वयमपेक्ष्य दृशा हि दृश्यं**
**संगच्छते सकलमत्र न नो विवादः।**

**मोहोऽपि दृश्यवपुरत्र च संवदध्वे**
**तस्मात्तदन्वयनिमित्तमपीह मोहः ॥ ५२ ॥**

द्वारमिति—दृश्यं हि घटादि दृशा चैतन्येन संगतमेवावभासते संगतिश्चात्र न संयोगादिरूपेण निरूप्या । अत आध्यासिक एव दृग्-दृश्ययोः सम्बन्धः स चाविद्यामूल इति यद्दृश्यं तत्सकलं तमोऽन्वय-मन्वीयमानमज्ञानरूपं द्वारं घटकमपेक्ष्यैव दृशा संगच्छत इत्यत्र न नो विवाद इत्युभयसंप्रतिपन्नव्याप्तिः प्रदर्शिता । उपनयमाह—मोहोऽपीति - अन्यतरासिद्धिमुद्धरति—अत्र च संवदध्व इति । अत्र ज्ञानविरुद्धमोहस्य दृश्य-त्वे यूयमपि संवादं कुरुध्वे । निगमनमाह—तस्मादिति । मोहस्पृश्यत्वात्तस्य मोहस्यान्वयेपि मोहो निमित्तं दृश्यत्वान्मोहोपि मोहाधीनदृक्सम्बन्ध इत्यर्थः । ततश्च मोहान्तराभावात्स्वस्यैव दृक्सम्बन्धे मूलत्वमित्यर्थः । ननु किमिदं मोहसम्बधस्य मोहाधीनत्वं नाम मोहजन्यत्वमिति चेन्न मोहसंबन्धस्यानादित्वात्तत्सम्बन्धात्पूर्वं मोहस्य स्वातन्त्र्यानुपपत्ते-श्चेति चेन्न—मोक्षविरहप्रयोज्यविरहप्रतियोगित्वस्यैव सम्बन्धे मोहा-धीनत्वपदेन विवक्षितत्वादिति अतो नात्माश्रयो दोषायेतिभावः ॥५२॥

प्राभाकरादिमतेनात्माश्रयस्यासाधारणदूषणस्थलं दर्शयति—

**संविद्धुरं वहति तद्विषयोपयुक्तां**
**स्वात्मन्यपि स्वरसतः स्वकरूपसिद्धेः ।**
**कार्यप्रपञ्चपरिकल्पनमात्ममोहा-**
**न्मोहप्रकल्पनयपीति तथोपपन्नम् ॥ ५३ ॥**

संविद्धुरमिति । संविद् घटादिविषयं ज्ञानं प्राकट्यं वा तद्विषयोपर-क्ताज्ञानविषयघटादिगतां स्वाश्रयगतां च धुरमविद्यानिवृत्तिलक्षण-प्रकाशाख्यां कार्यं वहति जनयति । स्वात्मन्यपि स्वोपरक्तां धुरं वहतीति सम्बन्धः । तत्र हेतुः स्वरसतः स्वकरूपसिद्धेरिति । स्वभा-

वादेव स्वरूपसिद्धेः स्वयंप्रकाशत्वादित्यर्थः । यथा प्राभाकरादिमते ज्ञानं ज्ञातता वा घटादिकं प्रकाशयत् स्वयंप्रकाशत्वात्स्वात्मानमपि प्रकाशयति तथा मोहादेवाहंकारादिप्रपञ्चकल्पनं मोहकल्पनमित्युपपन्नमित्यर्थः ॥ ५३ ॥

इदानीं सर्वमतानुरोधेनात्माश्रयादूषणस्थलान्तरमाह—

आत्मा प्रसाधयति वेद्यपदार्थजातं
स्वत्मानमप्यवगतिक्षमशक्तियोगात् ।
स्वज्ञानमेवमिदमात्मपरप्रक्लृप्तौ
शक्तं भवेदिति न किंचन दौस्थ्यमस्ति ॥ ५४ ॥

आत्मेति । अवगतिक्षमशक्तियोगात् स्वसमवेतस्वपरविषयव्यवहारानुकूलज्ञानसामर्थ्ययोगादात्मपरप्रक्लृप्तौ अज्ञानाध्यासे जगदध्यासे चेत्यर्थः ॥ ५४ ॥

इदानीं प्राभाकरबौद्धव्यतिरिक्तान्प्रत्याह—

भेदं च भेद्यं च भिनत्ति भेदो
यथैव भेदान्तरमन्तरेण ।
मोहं च कार्यं च बिभर्ति मोह-
स्तथैव मोहान्तरमन्तरेण ॥ ५५ ॥

भेदं चेति—भिनत्ति असंकीर्णं करोति । तथा च प्रपञ्चपारमार्थिकत्ववादिनामप्यात्माश्रयस्तद्विरुद्धोपि न दोषाय किल किमु तन्मूलप्रपञ्चमृषात्ववादिनामस्माकं न दोषायेति भावः ॥ ५५ ॥

ननु यदि प्रपञ्चमिथ्यात्वं न्यायसिद्धं किमिति न्यायसूचकसूत्रकारस्तन्मिथ्यात्वविषयन्यायं नासूत्रयदिति चेत् न "तद्गुणसारत्वा-

तद्व्यपदेशः प्राज्ञवत्" इत्यत्र तस्य सूचितत्वात्तर्ह्यादावेव तेन भवितव्यं तदधीनत्वाद्विषयप्रयोजनयोरिति चेत्तत्राह—

**ब्रह्मज्ञानं सूचयन् सूत्रकारो**
**बन्धोत्पत्तेर्हेतुविध्वंसनाय ।**
**एतत्सर्वं सूचयामास तस्मा-**
**देतत्सर्वं भाषते भाष्यकारः ॥ ५६ ॥**

ब्रह्मज्ञानमिति । कर्तृत्वादिबन्धोत्पत्तेर्यो हेतुरज्ञानं तन्निवृत्तये "अथातो ब्रह्मजिज्ञासा" इत्यनेन ब्रह्मात्मैक्यज्ञानं सूचयन् सूत्रकार एतत्सर्वमस्म दुक्तं सर्वं कर्तृत्वादिप्रपञ्चमिथ्यात्वं सूचयामास द्योतितवानित्यर्थः । अयम्भावः । सूत्रकरो ह्यथातो ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासां सूचयति स्म तत्र न ज्ञानस्य स्वत एवेष्यमाणत्वमिष्टानिष्टप्राप्तिपरिहारयोरन्यतर-त्वाभावात्, किं त्वनर्थनिवृत्तिहेतुत्वेन तत्र यदि प्रपञ्चस्यानर्थस्य मिथ्यात्वं सूत्रकृत्संमतं न भवेत्तत्कथमिव तन्निवृत्तये ज्ञानं सूचयेत्स-त्यस्य ज्ञाननिवर्त्यत्वानुपपत्तेः ततः प्रथमसूत्रेपि सूचितमेव प्रपञ्च-मिथ्यात्वमिति । अयं चाभिप्रायः सूत्रकारस्य भाष्यकृद्भिर्वर्ण्यत इत्याह—तस्मादिति । यस्मात्सूत्रकार एवमसूसुचत्तस्माद्भगवान् भाष्य-कारोपि युष्मदस्मदित्यादिना बन्धमिथ्यात्वमाहेत्यर्थः ॥ ५६ ॥

नन्वहंकारादेरध्यस्तत्वोक्तिरयुक्ता अहंकारो ह्यहमिदं जानामीत्य-नुभवात्प्रमाता भवति प्रमाता च प्रमित्याश्रयः न चाध्यस्तः प्रमि-त्याश्रयो भवति तस्य जडत्वनियमात्, ज्ञानाश्रयस्यात्मत्वाच्च वियदा-दिकं च जगत्सर्वो हि लोकः सदित्येव प्रत्येति इदञ्चाध्यस्तत्वेऽनुपपन्नम् । नन्वध्यस्तरजतादेरपि सदिति प्रत्ययो दृश्यत इति चेत्तर्हि तत्राप्य-ध्यस्तता व्याहन्येत सद्विलक्षणस्यैवाध्यस्तत्वाद्वियदादिप्रपञ्चस्य रजत तुल्यत्वे वा तद्वत्सद्य एव बाधप्रसङ्गः । न च वियदादिकं कश्चिद्वा-

धितमनुभवति । न चाध्यस्तमपि किञ्चिदेव बाध्यते किञ्चिन्नेति साम्प्रतमबाध्यस्य तस्य मिथ्यात्वानुपपत्तेः। बाध्यत्वं हि मिथ्यात्वं नाम अहंकारामिथ्यात्वे च तन्मूलकर्तृत्वादेरपि वास्तवत्वं स्यादित्याशङ्कामुपसंहारव्याजेन पराकरोति —

**तस्मादध्यस्तमेतत्सकलमपि दृशो भूमरूपातिरिक्तं**
**रूपं स्वाज्ञानमात्रादिति भवति परब्रह्मधीबाध्यमेतत् ।**
**ईशित्रादिप्रभेदप्रतिहतिफलकज्ञानदौस्थ्यापनुत्त्यै**
**श्रीमच्छारीरकार्थप्रकटनपटुताशालि शास्त्रं विदध्मः ५७**

तस्मादिति । यस्माच्छ्रुतिप्रसिद्धात्मविपरीतरूपत्वमहंकारादेर्यस्माच्च न तत्र कारणानुपपत्तिः, यतश्च नात्मनोधिष्ठानत्वानुपपत्तिस्तस्मात् दृशः प्रत्यगात्मनो भूमरूपातिरिक्तमनवच्छिन्नानन्दस्वरूपातिरिक्तमेतत्परिदृश्यमानाहंकारवियदादिसकलमपि रूपमज्ञानमात्राद्ध्यस्तमिति कृत्वा एतद्वियदादि जगद् ब्रह्मधीबाध्यमिति सम्बन्धः । न तावदहंकारस्याध्यस्तत्वे प्रमित्याश्रयत्वानुपपत्तिः । अध्यस्तस्यैव प्रमित्याश्रयत्वात् । तथा हि किं प्रमापदेन चैतन्यमात्रमुच्यते किं वा वृत्तिरुत वृत्तिसंवलितचैतन्यम् । नाद्यः । तस्याजन्यस्य प्रमात्वानुपपत्तेः । चतुष्टयसन्निकर्षादिप्रमाणजन्यस्यैव प्रमात्वात् । नन्वजन्यमपीश्वरज्ञानं प्रमेति चेन्न तस्यैव निरूप्यमाणत्वात्स्वरूपचैतन्यातिरिक्तेश्वरज्ञानाभावाच्च । न द्वितीयः तस्याः केवलाया जडत्वेन प्रमाणफलत्वानुपपत्तेः। अर्थप्रकाशो हि प्रमाणफलं प्रमेति चोच्यते तस्मात्तृतीयः पक्षः परिशिष्यते चैतन्यस्य स्वयंप्रकाशत्वात्तस्य स्वरूपतोऽजन्यत्वेपि वृत्तिसंवलितत्वाकारेण जन्यत्वाच्च । अस्तु तदेवानध्यस्ताहंकाराश्रय इति चेत्किमहंकारश्चैतन्याचैतन्योभयरूपः । किं वैकरूपः । अन्त्येपि किं जडरूपः किं वा चैतन्यरूपः । नाद्यः । जडस्य जडाश्रयत्वेपि चैतन्याश्रयत्वानुपपत्तेः । न द्वितीयः । अविकारिचैतन्यस्य विकाराश्रयत्वानुप-

पत्तेः। परिणामस्य परिणाम्याश्रयत्वनियमाच्च। न चेयं वृत्तिः केवलचैतन्यपरिणामः। चैतन्यपरिणामस्य जडत्वानुपपत्तेः। अस्तु तर्ह्युभयरूपोहंकार इति चेत् न तावदुभयरूपं वास्तवं संभवति। जडाजडभावेन विरुद्धयोर्वास्तवतादात्म्यानुपपत्तेरतोऽध्यस्तात्मभावोहंकार इत्यनिच्छतापि स्वीकर्त्तव्यः। एतेन ज्ञानाश्रयत्वेन तस्यात्मत्वमित्येतन्निरस्तम्। ज्ञानाश्रयो नात्मा ज्ञानविषयत्वात् घटवत्। न चासिद्धो हेतुः मामहं जानामीत्यनुभवात्। न चाप्रयोजकः अनौपाधिकसम्बन्धशालित्वात्। न च ज्ञानानाश्रयत्वमुपाधिः। सुषुप्त्यादावात्मन्यपि सत्त्वेनोपाधेः साधनव्यापकत्वाद्व्यतिरेकव्याप्त्यभावाच्च। लाघवात् ज्ञानत्वस्यैवात्मत्वप्रयोजकत्वाच्च। ननु प्रपञ्चः सन्निति प्रतीयमानः कथमध्यस्त इति इति चेन्न रजतवदुपपत्तेः। ननु तत्र वा कथं सतः सद्विलक्षणत्वमिति चेन्नाधिष्ठानसत्तया तथानुभवोपपत्तेः। एवं प्रपञ्चाधिष्ठानब्रह्मसत्तया प्रपञ्चेपि सद्बुद्धिः। अथवा त्रिविधं सत्त्वं पारमार्थिकं व्यावहारिकं प्रातीतिकं चेति। तत्राद्यं कालत्रयबाधाभावोपलक्षितं स्वरूपं तद्ब्रह्मणः एव भवति न प्रपञ्चस्य। द्वितीयन्तु मातरि सत्यबाध्यमानत्वलक्षणं वियदादिप्रपञ्चस्य। तृतीयन्तु मातरि सति बाधयोग्यत्वं प्रातिभासिकरजतादेरिति न सत्प्रतीत्यनुपपत्तिरिति भावः। अध्यासनिरूपणफलमुपसंहरति–इति भवति परब्रह्मधीबाध्यमिति। अनेन यदुक्तं प्रपञ्चोऽध्यस्तत्वे बाध्येतेति तत्रोत्तरमुक्तं भवति। आरोपितं ह्यधिष्ठानज्ञानेन बाध्यते। न चेदानीमहंकाराद्यधिष्ठानब्रह्मात्मैक्यज्ञानमस्ति। यदा तु तत्त्वमादिवाक्यैस्तत्साक्षात्कारो जन्यते तदा समूलमेव तद्बाध्यत इत्यतो वेदान्तानां ब्रह्मात्मैक्यं विषयोऽनर्थनिवृत्तिश्च प्रयोजनं सिध्यतीति भावः। अतोऽसंभावनादिनिवृत्तिद्वाराविषयप्रयोजनवत्त्वाद्विचारशास्त्रमारम्भणीयमित्युपसंहरति ईशित्रादीति। तस्मादित्यनुषञ्जनीयम् ईशिता ईश्वरः आदिपदेन जगज्जीवौ गृह्येते ईश्वरत्वजीवत्वजगद्रूपो यो भेदस्तस्य या प्रतिहतिः निवृत्तिः सा फलं यस्य तादृशं यज्ज्ञानं ब्रह्मात्मैक्यविषयसाक्षात्कारस्तस्य यद्दौस्स्थ्यमसंभाव-

नाद्यभिभूतत्वं तस्यापनुत्तिर्निवृत्तिः तदर्थमित्यर्थः। श्रीमच्छारीरकं श्रीमदाचार्यभाष्यं तस्य श्रीमत्त्वं चानन्तकल्याणस्वरूपब्रह्मविषयत्वात् तस्य योऽर्थः ब्रह्मात्मैकत्वं तस्य प्रकटनमनुभवप्राधान्येन प्रकाशनं तस्मिन् पटुताशालि दक्षतायुक्तं प्रकाशनसमर्थमित्यर्थः। शास्त्रं हितबोधकम्। अथवा शारीरकशास्त्रार्थस्य निर्गुणब्रह्मणि समन्वयादिपूर्वकं सम्यङ्निरूपणात् प्रकरणेऽप्यस्मिन् शास्त्रशब्दः प्रयुज्यते ॥ ५७ ॥

एवं भेदस्य कल्पितत्वाद्ब्रह्मात्मैक्यविषयोऽनर्थनिवृत्तिश्च प्रयोजनं संभवतीत्युक्तमिदानीं ब्रह्मणः प्रसिद्धप्रसिद्धिभ्यां विषयप्रयोजने आक्षिप्य समर्थ्येते। ननु प्रत्यग्ब्रह्मात्मैक्यं मानान्तरेण सिद्धं न वा। नाद्यः। मानान्तरसिद्धस्य शास्त्रविषयत्वानुपपत्तेः। अज्ञातमसाधारणं हि शास्त्रस्य विषयः। न चैतदन्यविषयस्य एतदेकविषयताख्यमसाधारण्यं संभवति। नापि प्रयोजनमेतस्य संभवति अन्यत एव सिद्धत्वात्। न द्वितीयः। अत्यन्ताप्रसिद्धस्य शास्त्रप्रतिपाद्यत्वानुपपत्तेः। प्रसिद्धो हि विषयो व्युत्पत्तिबलाच्छास्त्रस्य प्रतिपाद्यो भवति। अप्रसिद्धस्य वस्तुनः उद्दिश्य प्रतिपादनानुपपत्तेश्च। तथा च शक्यप्रतिपाद्यत्वलक्षणसम्बन्धाभावान्न तद्व्युत्पादनार्थं सुतरां शास्त्रमारम्भणीयमिति तत्राह—

**मीमांसितव्यमनयैव सदद्वितीयं,**
**मीमांस्यमेव च सदात्मतयाऽनयैतत्।**
**ज्ञातं प्रयोजनमनेन पथेदमस्या-**
**स्तन्नान्तरीयकतया च तमोनिवृत्तिः ॥ ५८ ॥**

मीमांसितव्यमिति। **सदद्वितीयमनया मीमांसया मीमांसितव्यमेवेति सम्बन्धः।** अयमभिसन्धिः। **न तावद् ब्रह्मणोऽविषयत्वं मानान्तरागम्यत्वेनानन्यसाधारणत्वात् न चैवं सत्यशक्यप्रतिपाद्यत्वं विचारात्पूर्वं वेदा-**

न्तवाक्यैरेव ब्रह्मण आपाततः प्रतिपत्तेरात्मनः सामान्यतः प्रसिद्धत्वाद्विशेषतो विप्रतिपत्तेश्च। ननु किमापातप्रतिपत्तिः पदादुत वाक्यान्नोभयथापि ब्रह्मात्मपदार्थस्याप्रसिद्धत्वेन पदयोरव्युत्पन्नत्वान्न हि व्युत्पत्तिं विना पदमर्थं प्रतिपादयति न वा पदार्थप्रन्ययं विना स्वार्थं वाक्यं बोधयतीति चेन्न—समुदायशक्तिज्ञानं विनापि निगमनिरुक्तादिपरिशीलनवतो ब्रह्मपदादेव ब्रह्मत्वगुणयोगितया तदर्थो ज्ञातुं शक्यते इति तद्वाचकपदमपि शक्यव्युत्पत्तिकमिति न ब्रह्मण आपातप्रतीत्यनुपपत्तिः, आत्मनोऽपि स्वयंप्रकाशतया तत्रात्मादिपदानां व्युत्पत्तिसंभवान्न तस्याप्यापातप्रतीत्यसंभवः न चैतावता ब्रह्मणोऽसाधारणत्वक्षतिः, मानान्तरागोचरत्वात्। न चैवं सति किं विचारेणेति वाच्यम्। स्वरूपविशेषस्य विचार्यत्वादित्याह—मीमांस्यमेवेति—तद्ब्रह्मतया सदात्मतया सत्यज्ञानानन्दस्वरूपत्वेन त्रिविधपरिच्छेदशून्यत्वेनात्मत्वेन च मीमांस्यमतो न विचारस्य वैयर्थ्यमित्यर्थः। च शब्दः शङ्कानिवृत्यर्थः। ननु ब्रह्मज्ञानमेव पुरुषार्थसाधनमिति सावग्रहमहत्वादिविशिष्टब्रह्मज्ञानमपि पुरुषार्थसाधनं भविष्यतीति कृतं विचारेणेति चेत्तत्राह—ज्ञातं प्रयोजनमिति। अनेन यथा सत्यादिरूपेण ज्ञातमिदं ब्रह्म प्रयोजनं मुमुक्षुः पुरुषार्थः न प्रकारान्तरेण ज्ञातं 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'द्वितीयाद्वै भयं भवती' त्यादिशास्त्राद् भेददर्शनस्यानर्थहेतुत्वाध्यवसायादित्यर्थः। तस्माद्द्वितीयपरिज्ञानार्थो विचारोऽर्थवानिति भावः। नन्वेवमपि येनाकारेण ब्रह्मणो विचारशास्त्रप्रतिपाद्यत्वं तेनाकारेणाप्रसिद्धत्वान्न शक्यप्रतिपाद्यत्वमिति चेन्न तादृशाकारस्य वाक्यार्थत्वाद्वाक्यार्थस्य सर्वत्राप्रसिद्धस्यानिश्चितस्यैव वाक्यप्रमेयत्वात्। ननु भवतु वाक्यार्थस्यान्यत्राप्रसिद्धिः संशयो वा तस्य पदार्थादतिरेकादिह तु पदार्थ एव वाक्यार्थः पदार्थनिश्चयश्चावश्यक इति तदभावे कथं शक्यप्रतिपाद्यत्वमिति चेन्नास्माभिरपि वाक्यार्थस्य ब्रह्मणः पदार्थत्वानङ्गीकारा-

त्पदवाच्यो हि पदार्थः न हि वाक्यार्थत्वेनेष्यमाणं ब्रह्मपदवाच्यं पदलक्ष्यतया पदार्थत्वेपि न तदत्र सिद्धिपदेनाप्रतिबन्धा सिद्धिरुच्यत इति न विचारवैयर्थ्यं न वा पूर्वोक्तिविरोध इति भावः। ननु ज्ञातं ब्रह्म प्रयोजनमित्यभिहितमनुपपन्नमनर्थहेत्वविद्यानिवृत्तेरेव प्रयोजनत्वात्तत्राह—तन्नान्तरीयकतयेति। तस्यानन्दात्मनो ब्रह्मणो ज्ञानं नान्तरीयकतया अज्ञाननिवृत्तिः ज्ञातमानन्दस्वरूपं ब्रह्मैव मुख्यं प्रयोजनमविद्यानिवृत्तिस्तु तुलोन्नमने आनमनवन्नान्तरीयकतया सिद्धेत्यर्थः ॥ ५८ ॥

नन्वेवमपीदं विचारशास्त्रमनारम्भणीयमेतस्य प्राच्या मीमांसया गतार्थत्वात्। नन्वथातो धर्मजिज्ञासेति धर्मविचारस्तत्र प्रतिज्ञातः न ब्रह्मविचारः—अथ तत्र धर्मशब्दो वेदार्थमात्रपरो वक्तव्यः, अन्यथा तत्राप्रतिज्ञातत्वेनाधर्मविचारानुपपत्तेरितिचेन्न—गङ्गापदवाच्यप्रवाहस्य लक्ष्यतीरानात्मन्ववद्धर्मपदवाच्यधर्मस्यावेदार्थत्वप्रसङ्गात्। ननु धर्मशब्दोऽजहल्लक्षणया स्वार्थमवबोधयिष्यति तत्र वेदार्थत्वं धर्मब्रह्मादिसाधारणमवच्छेदकमतो वेदार्थजिज्ञासा कर्त्तव्येति सूत्रार्थो भविष्यतीति चेन्न-तथा सति "चोदना लक्षणोर्थो धर्म" इति लक्षणप्रमाणपरं सूत्रमननुगुणं स्यात्। न च तत्रापि धर्मपदं लक्षणया ब्रह्मापि बोधयतीति वाच्यं सिद्धस्य ब्रह्मणश्चोदनागम्यत्वानुपपत्तेः। न च चोदनापदेपि लक्षणेति वाच्यम्। चोदनेति क्रियायाः प्रवर्त्तकं वचनमितिभाष्यविरोधात्तस्माद्धर्ममात्रविचारस्य प्रतिज्ञा प्रथमसूत्रार्थः। तन्मात्रविषयलक्षणप्रमाणप्रतिज्ञा द्वितीयसूत्रार्थः। कथं तर्ह्यप्रतिज्ञातस्याधर्मस्य विचार इति चेन्न—प्रथमसूत्रेऽप्रतिज्ञातयोरपि वेदप्रामाण्यकर्मभेदयोरिव मुखतोऽप्रतिज्ञातस्याप्यधर्मस्य प्रधानधर्मशेषत्वेन विचारोपपत्तेः। न हि वेदप्रामाण्यादिकं धर्मो वेदार्थो वा येनोभयविधप्रतिज्ञायामपि तत्प्रतिज्ञा भवेत्। न च विचार्यतया प्रधानस्य धर्मस्याधर्मादिवद्ब्रह्मणोपि व्यावृत्तिसिद्धये ब्रह्मापि विचारितमिति वाच्यम् आपातप्रतीतिदशायामेवात्यन्तधर्मविलक्षणत्वेन

ब्रह्मणः प्रतीतेरस्तु वा लक्षणा। तथाप्यधर्मस्यैव सा न ब्रह्मणः । अधर्म-वाक्यमुदाहृत्य तद्विचारवद् ब्रह्मवाक्यस्य तत्रोदाहरणपूर्वकमविचारि-तत्त्वात्तस्मान्न ब्रह्मविचारो गतार्थ इति चेन्न । चोदनाप्रमाणकत्वं धर्मस्य लक्षणमिति ब्रुवता भगवता जैमिनिना द्रष्टव्यः पश्येदित्या-दिचोदनाप्रमाणकमात्मज्ञानमपि धर्म इति सूचितम् । अन्यथा तत्र धर्मलक्षणस्यातिव्याप्तिप्रसङ्गाद् ब्रह्म च तद्विषयतया तच्छेषमिति ब्रह्मविचारोऽप्यधर्मविचारवदर्थात्प्रतिज्ञात एव न च प्रतिज्ञातोऽप्यवि-चारित इति शक्यं वक्तुं शास्त्रकारस्याकुशलत्वप्रसङ्गात्तस्मान्मुखतोऽऽ विचारितमपि वेदार्थनिर्णयन्यायसाम्याद्विचारितमेवेति गतार्थमेवेदं शास्त्रमित्याशङ्क्याह—

**न च गतार्थमिदं प्रतिभाति नो**
**न हि विधेः पदमात्मसमीक्षणम् ।**
**न खलु यागददातिजुहोतिवत्**
**पुरुषतन्त्रमिहात्मनिदर्शनम् ॥ ५९ ॥**

न च गतार्थमिति । इदं शास्त्रं गतार्थं प्राच्या मीमांसयावगत-विषयमित्यस्माकं न प्रतिभाति तत्रैतदर्थस्यानुपलब्धेः । न च न्यायसाम्याद् गतार्थत्वं किमद्वितीयब्रह्मव्युत्पादकन्यायस्य धर्म-न्यायेन साम्यं किं वा ब्रह्मज्ञानस्य चोदनालक्षणतया धर्मविशेषत्वा-त्तद्व्युत्पादकन्यायानां पूर्वतन्त्रन्यायेन तुल्यता। नाद्यः । सिद्धसा-ध्यरूपेणाद्वितीयत्वसद्वितीयत्वरूपेण विलक्षणयोरेकन्यायविषयत्वा नुपपत्तेरित्यभिप्रेत्य द्वितीयं दूषयति—नहीति । हि यत आत्म-समीक्षणमात्मज्ञानं विधेर्नियोगस्य यद्यत इति पदं विषयो न भवति ततो न्यायसाम्याभावादिदं न गतार्थमिति सम्बन्धः । भवेदात्मज्ञानमपि धर्मतया विचारितं यदि ज्ञानं विधिविषयो भवेन्न त्वेदस्ति। अतो ब्रह्मणो धर्मशेषत्वाभावान्न तद्विचारस्य प्रतिज्ञातत्वम् ।

अत एव न सूत्रकारस्य तद्विचारेणाकौशल्यं चेति भावः । ज्ञानस्य विधेयत्वाभावे हेतुमाह–न खल्वित्यादिना । इह लोके खलु यस्माद्यागदानहोमवदात्मनिदर्शनमात्मविषयं ज्ञानं पुरुषतन्त्रं पुरुषाधीनं न भवति । तस्मान्न विधेः पदमिति सम्बन्धः । यागददातिजुहोतिवदिति व्यतिरेकनिदर्शनं पुरुषतन्त्रस्यैव विधेयत्वात्तदभावात् ज्ञानं न विधेयमित्यर्थः। ननु किमिदं पुरुषतन्त्रत्वं यद्विरहात् ज्ञानस्य न विधेयत्वं—पुरुषोत्पाद्यत्वमिति चेन्न—ज्ञानस्यापि पुरुषोत्पाद्यत्वात् । पुरुषेच्छानिष्पाद्यत्वमिति चेन्न । इष्टविषयज्ञाने तस्यापि सत्त्वात् । ननु सकलज्ञाने तथात्वं नास्तीति चेन्न—क्रियाया अप्यतथात्वेनाविधेयत्वप्रसङ्गान्न हि सर्वाः अपि क्रियापुरुषेच्छया निष्पाद्यन्ते—तृणादिक्रियायास्तदभावादिति चेन्न पुरुषेच्छानिष्पाद्यत्वस्यैव पुरुषतन्त्रशब्दार्थत्वात् । नचैवं सतीष्टविषयज्ञानस्य तत्त्वेन ब्रह्मज्ञानस्यापि तद्रूपतया विधेयत्वप्रसङ्गः । पुरुषेच्छाव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वस्यैव पुरुषेच्छाजन्यपदेन विवक्षिततया ब्रह्मज्ञानस्यातथात्वात्सुखं शयानस्याप्यनिच्छतः परोदीरितवाक्याद्ब्रह्मावबोधदर्शनात् । न च विधेयक्रियायाः एवंभावोस्ति । ननु ब्रह्मज्ञानमपि कचिदिच्छया निष्पाद्यत इति चेत्कामं निष्पाद्यतां न ह्येतावता तद्विधेयं भवति। यज्जातीयस्य सर्वस्योक्तव्यतिरेकप्रतियोगित्वं तदेव हि विधेयं न हि संभवति यागः क्वचिदिच्छया निष्पाद्यते कचिन्नेति किञ्च नेष्टविषयज्ञानस्यापि कस्यचित्पुरुषेच्छाजन्यत्वमस्ति । तत्सामग्र्यामेव स्वातन्त्र्यात् । न च क्रियायामपि न कचित्पुरुषस्य स्वातन्त्र्यं किन्तु तत्सामग्र्यामेवेति साम्प्रतं, क्रियायां स्वातन्त्र्यं विना तत्सामग्र्यामपि स्वातन्त्र्यानुपपत्तेः । किञ्च विधिं विना यागस्योत्पत्त्यभाववन्न ज्ञानस्य तं विना तदभावः भोजने प्रवृत्तस्य तृप्तिविधिं विनापि तृप्तिवच्छ्रवणे प्रवृत्तस्याधिकारिणो ज्ञानविधिं विनापि तदुपपत्तेः । तस्मादात्मज्ञानं न विधेयमिति ॥ ५९ ॥

किञ्चावगत एव हि विधिविषययागादौ हितसाधनत्वादिकं विधीयते तद्वदत्रापि ज्ञानं पूर्वमवगतं न वा न चेन्न विधेयत्वमत्यन्ताप्रसिद्धे तदयोगादित्यभिप्रेत्याद्यं दूषयति—

अपि च रूपितगोचरताविधे-
र्न परमात्मधियोऽस्ति च रूपणम् ।
अविदिते परमात्मनि तद्धियो
न खलु रूपितता घटनान्विता ॥ ६० ॥

अपिचेति । विधेर्नियोगहितसाधनत्वादे रूपितगोचरता ज्ञातविषयता वक्तव्या ततः किं तत्राह—न परमात्मेति । ज्ञानस्य विधेयत्ववादिमते विधेः पूर्वं ब्रह्मज्ञानस्य निरूपणं नास्ति न सम्भवतीत्यर्थः । ननु किमिति पूर्वमात्मज्ञानं ज्ञातुं न शक्यत इत्याशङ्क्य तन्मते आत्मज्ञाने जायमानेपि तद्विषयीभूतस्य ब्रह्मणोऽज्ञायमानत्वं वक्तव्यम् अन्यथा विधिवैयर्थ्यात् । तच्च न संभवति ब्रह्मज्ञाने जाग्रति ब्रह्मणोऽज्ञायमानत्वानुपपत्तेः । न च परात्मसमवायित्वेन प्रसिद्धं ब्रह्म ज्ञानमुद्दिश्य विधीयत इति वाच्यं तत्रापि किं ज्ञानविषयीभूतं ब्रह्मापि ज्ञातज्ञानेन विषयीक्रियते उत नेति विकल्प्यान्त्यं प्रत्याह अविदितइति । खलु यस्मात्परमात्मन्यविदितेऽप्रकाशमाने तद्धियः परमात्मज्ञानस्य रूपितता घटनान्विता न संभवति परमात्मधिय इति संबन्धः । विशेषणमविषयीकुर्वत्या विशिष्टबुद्धेरभावादात्मन्यनवगम्यमाने तज्ज्ञानाधिगमो न संभवतीत्यर्थः ॥ ६० ॥

प्रथमं पक्षं पराकरोति—

विदितता परमात्मन इष्यते
यदि वृथा विधिरस्य धियो भवेत् ।

निखिलभेदनिदाननिवृत्तितो
भवति तद्विषयादि च दुर्लभम् ॥ ६१ ॥

विदिततेति । अस्य परमात्मनो न केवलं प्रयोजनाभावः अपि तु विध्यसंभवोऽपीत्याह—निखिलभेदेति । आत्मज्ञानेन नियोज्यविषयादिभेदनिदानज्ञानस्य निवृत्तत्वात्तस्य नियोगस्य नियोज्यविषयाभावेन नियोगप्रतीतिर्न संभवतीत्यर्थः । उपरिष्टाच्चैनं सपरिकरं निराकरिष्यति ॥ ६१ ॥

तस्मान्नायं विचारो गतार्थ इत्याह—

इति न धर्मविशेषसमर्पणं
श्रुतिशिरोवचनैः क्रियते ततः ।
भवति धर्मविचारगतार्थताऽ—
नवसरः परमात्मविचारणे ॥ ६२ ॥

इति न धर्मविशेषेति । इतिशब्दो हेतौ । यस्माज्ज्ञानं न विधेयं तस्माद्वेदान्तैर्धर्मविशेषसमर्पणं न क्रियत इति सम्बन्धः । फलितमाह —तत इत्यादिना । तस्मान्न ज्ञाने विधिरिति न ज्ञानं धर्मविशेष इति भावः ॥६२॥

ननु यदि वेदान्तेषु न ज्ञानविधिस्तर्हि द्रष्टव्यः पश्येदित्येवमादिविधिविभक्तीनां का गतिरिति चेन्न तेषामर्हाद्यर्थत्वेनाप्युपपत्तेरित्याह-

अर्हाद्यर्थे च कृत्यस्मरणमभिमतं पाणिनेः प्रार्थनादौ
लिङ्लोडादेश्च वृत्तिः प्रचुरमभिमता पाणिनेर्जैमिनेश्च ।
तस्माद्वेदान्तवाक्ये पठितमपि लिङाद्यन्यथा योजनीयं
विध्यर्थासंभवेन स्फुटितमुदितनयादेतदन्यागतार्थम् ६३

अर्हाद्यर्थे चेति । आदिशब्दात् भावाद्यर्थे यस्मात्पाणिनेरर्हाद्यर्थे कृत्यस्मरणं कृत्यसंज्ञकतव्यप्रत्ययस्य स्मरणमभिहितम् 'अर्हे कृत्यतृच-

श्च' इति विधानाद्यस्माच्च पाणिनेर्जैमिनेश्च प्रार्थनादौ आदिपदात्, विध्याद्यर्थे आशिषि च लिङ्लोडादेर्वृत्तिः प्रचुरमभिमता 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' 'लोट् च' 'आशिषि लिङ्लोटौ' इत्यादिविधानात्तस्मादिति सम्बन्धः। जैमिनिरपि भगवान् विष्णुरूपांशु यष्टव्यः जर्तिलयवाग्वा जुहुयादित्येवमादौ तेषामर्हाद्यर्थत्वमङ्गीचकार। चकाराद्भगवतो बादरायणस्यापि "तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदि"त्याद्यनङ्गत्वचिन्तनपरे वाक्ये लिङोऽनुवादत्वमात्रमङ्गीकृतमिति सूचयति—अन्यथा—अर्हाद्यर्थत्वेन। ननु विष्णुरूपांशु यष्टव्य इत्येवमादौ विधेरन्यतः सिद्धत्वादर्हाद्यर्थत्वमत्र च न ज्ञानविधिरन्यतः सिद्धः। ततः कथमर्हाद्यर्थत्वमित्याशङ्क्य पूर्वोक्ताद्बाधकादित्याह—विध्यर्थासंभवेनेति। स्फुटमुदितनयाद्विध्यर्थासंभवेन विधिरूपार्थासंभवेन वेदान्तवाक्ये पठितमपि लिङाद्यन्यथा योजनीयमिति सम्बन्धः। तस्मादगतार्थोऽयं विचार इत्युपसंहरति—एतदन्यागतार्थमिति। अत एतच्छास्त्रमन्यया मीमांसया गतार्थं न भवतीत्यर्थः॥ ६३॥

नन्वेवमपि नेदं शास्त्रमारम्भणीयमधिकार्यभावात्। किमधीतस्वाध्यायोऽधिकारी किं वा निर्वृत्तधर्मविचारः उतानुष्ठितसकलधर्मा अथवा मुमुक्षुः। नाद्यः। अध्ययनानन्तरं फलवदर्थावबोधफलकाध्ययनविध्यापादितधर्मविचार एव तस्य प्रवृत्तेः। ननु धर्मविचारमिव ब्रह्मविचारमप्यध्ययनविधिः प्रयोजयिष्यतीति चेन्न। अमुमुक्षोः स्वाभिलषितस्वर्गाद्यनुकूलतया ब्रह्मविचारे प्रवृत्त्ययोगादविरक्तस्याध्ययनमात्राद् ब्रह्मविचारे प्रवृत्त्यनुदयाच्च। अत एव न द्वितीयः। अर्थज्ञानस्याध्ययनविध्यापादितफलकत्वनिर्वाहाय धर्मानुष्ठान एव प्रवृत्त्यवश्यंभावनियमाच्च। न च तृतीयः। एकस्मिन् जन्मनि तदयोगात्। न चतुर्थः। विषयवशीकृतचित्तस्य तस्य तदनुपपत्तेः। ननु जितेन्द्रियत्वलक्षणशान्त्यादिकमपेक्षत इति चेन्न। रागिणस्तदनुपपत्तेः। ननु वैराग्यमप्यपेक्षत इति चेन्न। अविवेकिनस्तदनुपपत्तेः। कर्मफल-

स्यापि नित्यत्वेन ततो वैराग्यायोगाच्च। तस्माद्धिकार्यनिरूपणान्नेदं शास्त्रमारम्भणीयमिति चेद्यद्यपि सर्वेषां न दृढतरा मुमुक्षा तथापि यज्ञाद्यनुष्ठाननिबर्हितस्वान्तध्वान्तस्य पुरुषश्रेष्ठस्य यत्कृतकं तदनित्यमिति न्यायानुगृहीतया तद्यथेत्यादिश्रुत्या कर्मफलस्यानित्यत्वावगमात्ततो वैराग्यसंभवे न शान्त्यादिपूर्विका मुमुक्षा भवतीत्यभिप्रेत्याह—

**एकाहाहीनसत्रद्वयविधिविहितानेककर्मानुभाव–**
**ध्वस्तस्वान्तोपरोधाः कथमपि पुरुषाश्चिद्दिदृक्षां लभन्ते।**
**यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा**
**स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ति ६४**

एकाहेति। एकसुत्याकानि ज्योतिष्टोमादीनि एकाहानि अहीनानि द्व्यहादिद्वादशाहान्तानि सत्राण्यनेकयजमानानि द्वादशाहादिसहस्रसम्वत्सरान्तानि। द्वादशाहस्य चाहीनसत्रोभयरूपत्वं द्वादशाहमृद्धिकामा उपेयुः, द्वादशाहेन प्रजाकामं याजयेदितिश्रुतिद्वयादवगम्यते। तानि च द्विविधानि। अहोभिः सम्वत्सरैश्च साध्यानि तेषां विधिः विधायकः शब्दः ज्योतिष्टोमेन यजेतेत्येवमादिः तेन विहितानां हितसाधनत्वेन ज्ञापितानामनेकेषां ज्योतिष्टोमादिकर्मणामनुभावो दोषनिवर्हणसामर्थ्यं तेन ध्वस्तो विनाशितः स्वान्तोपरोधः अन्तःकरणगतदोषाख्यविविदिषाप्रतिबन्धो येषां ते तथोक्ताश्चिद्दिदृक्षां पुरुषविविदिषां कथमपि बहुजन्मान्ते लभन्त इति सम्बन्धः। कथमपीत्यनेनात्मजिज्ञासाया अतिदुर्लभत्वं सूचयति तदुक्तं भगवता 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यत' इति। चिद्दिदृक्षां लभन्त इत्यनेनार्थान्मुमुक्षापि दर्शिता। अन्यथा फलेच्छां विना साधनेच्छायोगात्तथा च तद्धेतुत्वेन विवेकादीन्यपि सूचितानीति साधनचतुष्टयसम्पन्नो-

धिकारीति दर्शितम्। ननु कथं यज्ञादीनां विविदिषासाधनत्वं प्रमाणाभावादित्यत्राह—यज्ञेनेति। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन' इति वाक्यं शतपथविहितं शतपथब्राह्मणे कर्मभागे विहितं कर्मणां वृन्दं समूहं पुरुषविविदिषामात्रसाध्ये तदेकफले युनक्ति विनियोजयति। अतः प्रमाणाभावोऽप्रसिद्ध इत्यर्थः। ननु ज्योतिष्टोमादियज्ञादेः फलान्तरे स्वर्गादौ विनियुक्तस्य कथं विविदिषायां विनियोगः विनियुक्तविनियोगविरोधादित्याशङ्क्याह गृहीत्वा स्वोत्पत्त्याम्नानसिद्धमिति। स्वस्य कर्मणो यदुत्पत्त्याम्नानं कर्मस्वरूपमात्रबोधकमुत्पत्तिवाक्यं यजेदित्यादिरूपं तत्सिद्धमित्यर्थः। न हि स्वर्गादौ विनियुक्तो यज्ञादिः विविदिषायां विनियुज्यते किन्तूत्पत्तिवाक्यसिद्धं कर्मस्वरूपं नानाफलसाधारणं गृहीत्वा वाक्यं विविदिषायां विनियुङ्क्ते उत्पत्तिवाक्यसिद्धरूपस्य नित्यकाम्यसाधारणत्ववदेतत्साधारणत्वमप्यविरुद्धमिति भावः। ननु कर्मणां न विविदिषाहेतुत्वं तेषां साक्षान्मुक्तिं प्रत्येव हेतुत्वात्तथा हि पूर्वोपार्जितानि सर्वाणि कर्माणि संभूय एकं देहमारभन्ते तस्मिन्देहे अहंममाभिमानवतो यदि कस्य चिद्दैवयोगान्मुमुक्षा भवति ततस्त्यक्तकाम्यनिषिद्धकर्मणस्तस्यागामिदेवतिर्यगादिलक्षणदेहारम्भककर्माभावेनागामितत्तद्देहाभावान्नित्यनैमित्तिकानुष्ठानेन तदकरणनिमित्तप्रत्यवायस्य निवर्हितत्वाद्भोगेन त्वारब्धकर्मणः क्षीणत्वात्कफनिवृत्तौ ज्वरनिवृत्तिवत् भवत्यात्यन्तिकदेहनिवृत्तिलक्षणो मोक्षः। नन्वेवं 'निचाय्य तं मृत्युमुखात्प्रमुच्यत' इति मुक्तेर्ज्ञानफलत्वश्रुतिविरोध इति चेन्न। तस्याः पर्णतादिफलवचनवदर्थवादत्वात्। अत एव विदुषामपि जनकोद्दालकप्रभृतीनां यज्ञपुत्रानुशासनकर्माचारो दृश्यते तंविद्याकर्मणी समन्वारभेते इति च विद्यायाः फलारम्भे कर्मसाहित्यं दर्शयति विद्यास्वातन्त्र्ये तदनुपपन्नं स्यात्। कुर्वन्नेवेह कर्माणीति च श्रुतिर्विदुषोपि कर्मानुष्ठानं दर्शयति। अतो विद्यायाः न स्वातन्त्र्येण फलवत्त्वं तस्मात्कर्मणां

मुक्तिहेतुत्वान्न विविदिषाहेतुत्वमितिचेत्तत्र किं नित्यनैमित्तिककर्मणां साक्षादेव देहात्यन्तिकनिवृत्तिलक्षणमोक्षहेतुत्वं किं वा कर्मणा स्वाकरणनिमित्तप्रत्यवायनिवृत्तिः तया च प्रत्यवायनिमित्तदेहनिवृत्तिरिति परम्परया। नाद्यः। उपात्तदेहस्य तेन विनापि निवृत्तिसंभवात् आगामिदेहस्य चानुत्पन्नत्वादेव निवृत्त्यसंभवात्। न द्वितीयः। जातमात्रमृतबालकानां मुक्तिप्रसङ्गात्तेषां नित्याद्यधिकाराभावेन तदकरणनिमित्तप्रत्यवायस्याभावान्निषिद्धकाम्याननुष्ठानाच्च तन्निमित्तदेहान्तरासंभवात्। किञ्च यो यो देह आरभ्यते स सर्वोऽपि संचितसकलकर्मभिरारभ्यते किं वा यः कश्चित्। नाद्यः। तिर्यगादीनामपि मुक्तिप्रसङ्गात्। न द्वितीयः। तत्र प्रमाणाभावात्। संचितसर्वकर्मभिरेकदेहारम्भायोगाच्च। न हि ब्रह्महत्याश्वमेधादृष्टयोरेकदेहारम्भकत्वं सम्भवति। न वा चित्रायागज्योतिष्टोमादृष्टयोः सर्वप्रकारेण निषिद्धकाम्यपरिवर्जनायोगाच्चातियत्नवतामपि सूक्ष्मानन्तापराधदर्शनान्निषिद्धनिरीक्षणश्रवणादिप्रभवतः प्रत्यवायस्याशक्यपरिहारत्वाच्च। कर्मणां मुक्तिफलत्वे तस्याज्ञानफलत्वबोधकनिखिलवाक्यत्वादिश्रुतिविरोधः। न च ज्ञानफलवचनश्रवणं पर्णताफलवचनवदर्थवादः। तत्र हि युक्तं पर्णताया वाक्यप्रमाणावगतक्रतुशेषतया तत्फलश्रवणस्यार्थवादत्वं "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादि"तिजैमिन्याचार्यैरुक्तत्वात् न च ज्ञानस्य क्रत्वङ्गत्वे किञ्चित्प्रमाणमस्ति प्रत्युत असङ्गात्मविज्ञानस्य कर्मविरुद्धत्वात् न तदङ्गत्वम्। यत्तूक्तं जनकादीनां विदुषामपि यागाद्यनुष्ठानं श्रुतौ दृष्टमिति तन्न तस्य विद्यास्तुतिपरत्वादित्थं किल महाभागा विद्या यत्कृतमपि विद्वांसं न स्पृशतीति। अन्यथा किं प्रजया करिष्यामः एतद्ब्रह्म वै तद्विद्वांसोऽग्निहोत्रं न जुह्वांचक्रिर इत्यादिश्रुतिविरोधात्। यत्तु विद्यायाः फलारम्भे कर्मसहभावः श्रुत इतितत्त्वपरविद्याविषय इति न कामयमान इति कामनयैवोपसंहारात्। या तु नियमश्रुतिरुदाहृता साप्युक्तरीत्या स्तुतिपरत्वेन

व्याख्येया तस्मान्न कर्मभिरेव मुक्तिरिति साधुवचनम् । ननु माभूत्केवलकर्मणो मुक्तिः ज्ञानसहितात्तु ततो भविष्यति 'विद्यां चाविद्यां च यस्तद्वेदोभयं सहेति' श्रुतेः न च मुक्तेः कर्मफलत्वेऽनित्यत्वप्रसङ्गः केवलकर्मफलस्यानित्यत्वेपि विद्यासहितस्य तत्फलस्य नित्यत्वोपपत्तेः । केवलविषदधिभक्षणस्य मरणज्वरहेतुत्वेपि मन्त्रशर्करादिसंस्कृतस्य जीवनपुष्टिहेतुत्वदर्शनात् तस्मान्न कर्मणां विविदिषां प्रति हेतुत्वं किंतु मोक्षं प्रत्येवेति चेन्न—'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' 'नास्त्यकृतः कृतेन किं प्रजया करिष्याम' इति श्रुतिभिः कर्मणां मोक्षसाधनत्वनिषेधात् । न च तत्र केवलकर्मण एव मोक्षसाधनत्वनिषेध इति वाच्यम्, संकोचे बाधकाभावात् । न च विद्यां चाविद्यां चेति समुच्चयश्रुतिरत्र बाधिका तत्राविद्यापदवेदनीयकर्मणां विद्यायाश्च परम्परया साध्यसाधनभावेन साहित्यस्यैव विवक्षितत्वात् । अत एवाविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इति वाक्यशेषे तयोः पृथक्फलवर्णनं चोपपद्यते । किञ्च न तावत् सर्वेषां कर्मणां विद्यया समुच्चयः असम्भवान्न हि संभवति बृहस्पतिसवराजसूयवैश्यस्तोमानामेकत्र समावेशः जन्मान्तरानुष्ठिते च निश्चयाभावेनेदानीं परिशिष्टसाधने मुक्त्यर्थिप्रवृत्त्यनुपपत्तेः । नाप्येकजन्मविशिष्टानां सर्वेषां कर्मणां विद्यया समुच्चयः । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति ज्ञानोद्देश्येन संन्यासविधानविरोधाद्विविदिषावाक्यविरोधाच्च न कर्मणां मुक्तिहेतुत्वं न च कुडपायिनामयनगताग्निहोत्रस्य कर्मान्तरत्ववदेतदपि यज्ञान्तरमेव प्रकरणभेदस्यात्रापि तुल्यत्वादिति वाच्यं युक्तं हि तत्र मासमग्निहोत्रपदस्य साध्यावमर्श्याख्यातसमभिव्याहारात्सिद्धावमर्शिनोपि नाम्नः साध्यार्थावमर्श्याख्यातपारतन्त्र्येण प्रकरणान्तरसिद्धनित्याग्निहोत्रानुवादित्वायोगात्कर्मान्तरत्वेन विधानं तत्राग्निहोत्रपदं च नित्याग्निहोत्रगुणयोगेन वर्त्तते । नचात्र यज्ञादयः साध्यत्वेन विधीयन्ते येन नाम्नस्तदवमर्श्याख्यातपारतन्त्र्यं भवेत् किन्तु

यज्ञादिकमनूद्य विविदिषाशेषत्वं विधीयते । अनुवादश्च पुरोवादपूर्वकः । नचात्रापि यज्ञेन विविदिषन्तीति विशिष्टविधिः गौरवप्रसङ्गाद्यज्ञशब्दप्रयोगवैयर्थ्याच्च । नचाग्निहोत्रपदवद्यागगुणातिदेशार्थं तदिति वाच्यं सकलयागधर्मयोगेनैकस्यानुष्ठानासंभवात्प्रकरणभेदस्तु स्वतोऽकिञ्चित्कर एव तस्मात् सिद्धयागादिरेव विविदिषावाक्ये यज्ञादिपदेनानूद्य विविदिषायां विनियुज्यत इत्येव वक्तुमुचितं न मोक्षहेतुत्वमपि तेषां तस्मात्सुष्ठूक्तं विविदिषामात्रसाध्य इति । विविदिषैव फलं शुद्ध्यादिकं तु तद्द्वारमिति भावः । एवमुपासनापि विविदिषाहेतुरेवेत्यनेन सूचितम् । न च तत्र विनियोजकाभावः । एष पन्था ब्रह्मणाह्यनुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चेति विनियोजकप्रमाणसत्वात् । तत्रहि पूर्वप्रकृतब्रह्मविद्यामार्ग एष इति परामृश्यते तेनैव मार्गेणान्योपि ब्रह्मविद्यातीत्युक्त्वा केन तर्हि ब्रह्मविद्या भवतीत्याकाङ्क्षायाम् यः पुण्यकृद्यज्ञाद्यनुष्ठाता यस्तैजसस्तेजसि ब्रह्मणि मनो नियुञ्जान उपासकः सोपि ब्रह्मविद्भवतीत्युपासनाया अपि विद्याहेतुत्वं प्रतिपाद्यते । तथाचोक्तं वार्तिकाचार्यैः "उपासनं च यत्किञ्चिद्विद्याप्रकरणे श्रुतम् । तदप्यैकात्म्यविज्ञानयोग्यत्वायैव कल्प्यते ॥" इति यस्माद्यज्ञेनेत्यादिवाक्यं कर्मवृन्दं पुरुषविविदिषामात्रसाध्ये युनक्ति तस्मादेकाहाहीनेत्यध्याहृत्य सम्बन्धः ॥ ६४ ॥

एवं साधनचतुष्टयसम्पन्नो विचारशास्त्रेऽधिकारीत्युक्त्वा इदानीं सुखप्रतिपत्त्यर्थं गुरुशिष्यप्रश्नोत्तररूपेण विचारमारभमाणो गुरूपसत्तिरप्युक्ताधिकारिणो विद्याङ्गं भवतीत्याह—

उपाससाद चतुष्टयसाधनो
निशितबुद्धिरशुद्धिपरिक्षयात् ।
विविदिषुर्विहितैर्विविधाध्वरै-
र्विदितवेद्यतमं विधिवद्गुरुम् ॥ ६५ ॥

उपससादेति । विविधैर्ज्योतिष्टोमाद्यनेकप्रकारैर्यज्ञैरशुद्धिपरिक्षयाद्धेतोर्निशितबुद्धिः शुद्धान्तःकरणः अत एव चतुष्टयसाधनो विवेकवैराग्यादिसम्पन्नः । ततश्च विविदिषुः विदितवेद्यतमं साक्षात्कृतपरमात्मतत्त्वं गुरुं विधिवद्दन्तकाष्ठकौपीनाद्युपायनपूर्वकमुपससाद प्रणिपातादिपूर्वकं प्राप्तवानित्यर्थः ॥ ६५ ॥

ननु साधनचतुष्टयसंपत्तिरनुपपन्ना मोक्षस्य निर्विशेषतयाऽनुभूतविजातीयत्वेन तत्रेच्छाऽसंभवादित्याशङ्क्य कैमुतिकन्यायमाश्रित्याह—

इह जगति हि सर्व एव जन्तु-
र्निरतिशयं सुखमुत्तमं ममास्तु ।
व्युपरमतु तथोपघातरूपं
विषयजदुःखमिति स्पृहां करोति ॥ ६६ ॥

इह जगति हीति । हिशब्दः प्रसिद्धौ सर्व एव पामरोपीत्यर्थः । तथा च निरतिशयसुखेच्छायास्सर्वजनप्रसिद्धत्वात् न विशिष्टपुरुषस्य परमानन्दप्रेप्सालक्षणमुमुक्षाक्षेपमर्हतीति भावः । निखिलानर्थपरिजिहीर्षालक्षणमुमुक्षापि सर्वजनसम्मतेत्याह—व्युपरमत्विति । व्युपरमतु विशेषेण नश्यतु यथा सर्वो जन्तुरात्मनो निरतिशयसुखं वाञ्छति तथा विषयजं पुत्रादिवियोगजन्यमुपघातरूपं पीडात्मकं दुःखं व्युपरमत्विति स्पृहां करोतीति हि सम्बन्धः ॥ ६६ ॥

नन्वस्तु सर्वेषां निरतिशयसुखेच्छानिखिलदुःखाभावेच्छा च तावता मुमुक्षायां किमायातम् न च सैव मुमुक्षा प्रमाणाभावादित्याशङ्क्याह—

निरतिशयसुखं च दुःखजात-
व्युपरमणं च वदन्ति मोक्षतत्त्वम् ।

उभयमपि जनोऽभिवाञ्छतीति
स्फुटतरमस्य सदाऽस्ति मोक्षवाञ्छा ॥६७॥

निरतिशयेति। एषोऽस्य परम आनन्दः ऽभयं वै जनक प्राप्तोस्यभयं वै ब्रह्मेत्यादिश्रुतयो मोक्षतत्त्वं निरतिशयानन्दं निखिलदुःखाभावरूपमिति वदन्ति। अतस्तत्र प्रमाणाभावोऽसिद्ध इत्यर्थः। आनन्ददुःखाभावयोर्मोक्षात्मत्वसाधनफलमाह—उभयमिति। इतिशब्दो हेतौ सर्वोऽपि जनः तदुभयं निरतिशयानन्दं निखिलदुःखव्युपरमणं चाभिवाञ्छति यतस्ततोऽस्य जनस्यापि मोक्षवाञ्छा स्फुटतरं सदास्त्यधिकारिणः किमु वक्तव्यमित्यर्थः ॥ ६७ ॥

ननु जनस्य निरतिशयसुखेच्छा वैषयिकसुखविषयैव न स्वरूपसुखविषया तस्य तत्र प्रमाणाभावेनाननुभवादननुभूते चेच्छानुपपत्तेः। एवं दुःखाभावेच्छापि स्वरूपातिरिक्ताभावविषयैव तत्कथं मुमुक्षाप्रसिद्धिरिति तत्राह—

उभयमपि परमात्मनः स्वरूपं
विमलचिदेकरसं स्वयंप्रकाशम्।
इति भवति विना प्रमाणमस्मि-
न्नुदितनयादभिवाञ्छनोपपत्तिः ॥ ६८ ॥

उभयमपीति। इतिर्हेतौ यस्मादुक्तश्रुतिभिरुभयं सुखं दुःखाभावश्च परमात्मनः निर्मलज्ञानैकरूपमत एव स्वयं प्रकाशमिति सिद्धम्। तस्माज्जनस्य प्रमाणं विनापि सुखे दुःखाभावे चानुभवसंभवाद्वाञ्छोपपद्यत इत्यर्थः। इच्छा हि ज्ञानमात्रमपेक्षते न तु प्रमाणजन्यं ज्ञानं ज्ञानं त्वात्मस्वरूपं विद्यत एव। न च वैषयिकं सुखं स्वयंप्रकाशात्मस्वरूपं न भवतीति वाच्यम्। सुखभेदे प्रमाणाभावादुत्पत्त्यादेश्चाभिव्यञ्जकवृत्तिविषयत्वेनोपपत्तेः अत एव न मोक्षस्य अनुभूतसुखविजातीयत्वम-

पीति उक्तन्यायान्मुमुक्षापि नाक्षेपमर्हतीति फलितमाह—अस्मिन्निति। अस्मिन्मोक्षे उदितनयात्सुखादेः स्वयंप्रकाशज्ञानात्मकत्वाल्लौकिकसुखेच्छाया अपि मुमुक्षात्वादेवेत्युक्तनयादित्यर्थः। ननु न केवलं सुखेच्छैव मुमुक्षा किन्तु निरतिशयसुखत्वाकारेण तदिच्छैव सा च न लोकसिद्धा लौकिकेच्छाया वस्तुतो निरतिशयसुखविषयत्वेपि तदाकारज्ञानं विना तादृशेच्छायोगादतो मुमुक्षोरपि सा कथं भवति स्वयंप्रकाशात्ममात्रतया प्रकाशसंभवेपि तदाकारप्रकाशाभावादिति चेन्न—लौकिकानां मम सर्वोत्कृष्टं सुखं भूयादिति तदिच्छायाः सर्वजनसिद्धत्वेनापह्नोतुमशक्यत्वात्। ननु कारणाभावे कथं सा भवतीति चेन्न—आप्तवाक्यादिना तत्प्रकारज्ञानसद्भावादिति ॥ ६८ ॥

नन्वस्तु लोके सा यथाकथंचिन्मुमुक्षुपुरुषगता तु सा भवितुं न योग्या सा हि केवलं निरतिशयसुखत्वप्रकारकेच्छैव किंत्वात्मान एव तद्रूपत्वप्रकारकेच्छा परमानन्दब्रह्मावाप्तेरेव प्रार्थ्यमानत्वात्। न च तादृगानन्दाकारात्मनः परिज्ञानं प्रमाणं विना भवति, स्वरूपप्रकाशस्य निर्विकल्पत्वादित्याशङ्क्याह—

कर्मकाण्डकृतबुद्धिशुद्धित-<br>
स्तर्किते च खलु मोक्षवस्तुनि।<br>
अर्थिताऽस्य घटते प्रयोजक-<br>
ज्ञाननुन्नमनसो महात्मनः॥ ६९॥

कर्मकाण्डकृतेति। अस्य पुंसो मोक्षवस्तुन्यर्थिता घटत इति सम्बन्धः। कथमर्थिता घटेत उक्तदोषादित्याशङ्क्याधिकारिणं विशिनष्टि—प्रयोजकज्ञाननुन्नमनस इति। विचारहेतुभूतमात्मविषयं वेदान्तवाक्यजन्यमापातज्ञानं प्रयोजकज्ञानं तेन नुन्नं श्रवणादिप्रवृत्त्युन्मुखं मनो यस्य तस्येत्यर्थः। तथा च यद्यपि निरतिशयसुखरूपात्मप्रकाशस्तदाकारो न भवति तथाप्येषोऽस्य परमआनन्दः यो वै भूमा तत्सुखं विज्ञानमानन्दं

ब्रह्म ब्रह्मविदाप्नोति परमित्यादिवाक्यात्तद्रूपेणावगच्छतस्सा भवतीत्यर्थः। श्रुतिसिद्धमात्मनः आनन्दरूपत्वं तर्केणापि संभाव्यत इत्याह—तर्कित इति। श्रुतितोवगते मोक्षस्वरूपपरमानन्दप्रत्यगात्मनि परप्रेमास्पदत्वलक्षणलिङ्गेन परमानन्दत्वेन संभाविते चेत्यर्थः। नन्वेतादृशतर्कश्रुत्योः सर्वसाधारणत्वात्किमिति सर्वेषामात्मनि तादृशं ज्ञानं न जायते कारणाभावादित्याह कर्मकाण्डेति। काण्डशब्दः समूहपरः यथा देहः स्वव्यतिरिक्तद्रष्टृकः दृश्यत्वादित्याद्यनुमानस्य साधारणत्वेप्यतिमलिनाशयानां प्राकृतानां न देहव्यतिरिक्तात्मपरिज्ञानं तथाशयस्यातिशुद्ध्यभावादधीतस्वाध्यायानां न्यायभूमिनिष्णातानामप्यात्मन आनन्दत्वपरिज्ञानं न जायते अनुष्ठितयज्ञादिनिराकृतान्तरायाणां तु तत्त्वेनात्मा प्रकाशतइति भावः ॥ ६९ ॥

ननु साधनचतुष्टयसम्पत्तिर्विद्याङ्गं भवतु गुरूपसदनं तु किमिति विद्याङ्गं तत्र प्रमाणाभावात्तत्राह—

धर्मनिर्णयनिमित्तमिष्यते
वेदवित्परिषदेव मानवे।
तद्वदत्र गुरुणाऽस्य संगति-
स्तेन चास्य घटतेऽर्थिता गुरौ ॥ ७० ॥

धर्मनिर्णयेति। यथा मानवे मनुशास्त्रे वेदविदां परिषत्सभा 'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तम' इति स्मृत्युक्तलक्षणधर्मनिर्णयनिमित्तं सदिष्यते तद्वदत्र ब्रह्मविद्यायामस्याधिकारिणो गुरुणा संगतिर्निमित्तं सदिष्यत इति सम्बन्धः। न च प्रमाणाभावः-अचार्यवान्पुरुषो वेद आचार्याद्धैव विद्या विदिता आचार्यस्तु ते गतिं वक्ता यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मनः तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति श्रुतेर्विद्यमानत्वात्। फलितमाह—तेनेति। येन गुरूपसदनस्य

विद्याङ्गत्वं श्रुत्यवगतं तेनेत्यर्थः । तस्मात्साधनचतुष्टयसम्पन्नस्य गुरुमुपसन्नस्य विद्योपदेष्टव्येति सिद्धम् ॥ ७० ॥

ननु काण्डद्वयविचाराधिकारिणोरधिकर्त्तव्यभेदाभावात्कथं विलक्षणोऽधिकारी ब्रह्मविचारे निरूप्यत इत्याशङ्क्याधिकर्त्तव्यभेदाभावोऽसिद्ध इत्याह—

यः कर्मकाण्डविषयेऽभिहितोऽधिकारी
सोऽयं प्रवृत्तिषु निवृत्तिषु तुल्यरूपः ।
अत्राभिधित्सितविशेषणपूगयुक्तोऽ-
साधारणस्त्वभिमतः पुरुषो निवृत्तौ ॥ ७१ ॥

यः कर्मकाण्डेति । कर्मकाण्डस्य क्रियावाक्यस्य विचारे विषयेभिहितो योधिकारी स ज्योतिष्टोमादिरूपासु प्रवृत्तिषु निवृत्तिष्वहिंसादिरूपासु तुल्यरूपः उभयमपि तस्याधिकर्त्तव्यमित्यर्थः । तस्मादेतस्याधिकर्त्तव्यविशेषमाह—अत्रेति । अत्र ब्रह्ममीमांसायामभिधित्सितान्यभिधातुमिष्टानि यानि विवेकवैराग्यशमदममुमुक्षालक्षणानि विशेषणानि तद्युक्तोऽयं पुरुषो निवृत्तावेवाधिक्रियते न प्रवृत्तावपीत्यर्थः । अभिहितेपि विवेकादावभिधित्सितेति कथनमस्य तृतीयाध्यायप्रतिपाद्यत्वमभिप्रेत्येति द्रष्टव्यम् ॥ ७१ ॥

नन्वेतस्य न निवृत्तिमात्रमधिकर्त्तव्यमित्युपपन्नं श्रवणादिप्रवृत्तेरप्यधिकर्त्तव्यत्वादित्याशङ्क्याह—

शास्त्रं प्रवृत्तिनिवृत्तिषु तुल्यरूपं
साधारणस्य पुरुषस्य पुराभ्यधायि ।
अत्रोच्यते सकलकर्मनिवृत्तिभाजः
सर्वं निवृत्तिविषयं श्रवणादिशास्त्रम् ॥ ७२ ॥

शास्त्रं प्रवृत्तीति । पुरा पूर्वं साधारणप्रवृत्तिनिवृत्तियोग्यस्य पुरुषस्य

प्रवृत्तिषु निवृत्तिषु तुल्यरूपं प्रवृत्तिनिवृत्त्यनुकूलशास्त्रं यजेत न हिंस्यादित्येवमादिरूपं कर्मकाण्डमभ्यधायि अभिहितार्थिकक्रमापेक्षयापुरेत्युक्तिः । सकलकर्मनिवृत्तिभाजः सकलकर्मनिवृत्तियोग्यस्यास्य साधनचतुष्टयसम्पन्नस्य सर्वं श्रवणादिशास्त्रं श्रोतव्यं मन्तव्यमित्येवमादिरूपं निवृत्तिविषयं सदुच्यते । श्रवणादिशास्त्रेणाप्यनात्मविषयव्यापारपरिवर्जनमेव बोध्यत इत्यर्थः । अथवा सकलकर्मनिवृत्तिभाज इति संन्यासिन इत्यर्थः । संन्यासं विनानुष्ठितश्रवणस्य न फलपर्यवसायित्वमिति श्रवणादेः संन्यासिविषयत्वमुक्तमतो न श्रवणे गृहस्थाद्यधिकारविरोध इत्यर्थः ॥ ७२ ॥

ननु काण्डद्वयाधिकारिणोर्भेदे किं प्रमाणं येन ब्रह्ममीमांसायामधिकारी पृथक् वर्ण्यंतेत्याशङ्क्य किं काण्डद्वयाधिकारिभेदप्रमाणाभावाद्ब्रह्ममीमांसायां विवक्षितविशेषणकलापयुक्तोधिकारी न वर्णनीय इति चोद्यते किं वा भेदप्रमाणाभावमात्रं तत्र न तावच्चरमः 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' 'तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' 'शान्तो दान्त उपरत' इत्यादि श्रुत्याभिहितविशेषणचतुष्टयस्यापि विद्याप्रकरणे पठितत्वादित्यभिप्रेत्य प्रथमं प्रत्याह—

**शास्त्रद्वैविध्यदृष्टेर्द्विविधमधिकृतेर्भेदमप्याश्रयन्ते**
**तद्द्वैविध्योपलब्धेः पुरुषमधिकृतं शास्त्रयोर्भिन्नमाहुः ।**
**शास्त्रार्थद्वित्वहेतोः पुरुषमधिकृतं तद्गतं चाधिकारं**
**नोचेद्भिन्नं प्रतीयुर्द्विविधमिह वृथाशास्त्रमापाद्यते हि ॥७३॥**

शास्त्रद्वैविध्येति । प्रवृत्तिसमानकर्तृकनिवृत्तिप्रतिपादकत्वेन केवलनिवृत्तिप्रतिपादकत्वेन च शास्त्रस्य कर्मकाण्डस्य ज्ञानकाण्डस्य च द्वैविध्यदृष्टेः शास्त्रद्वैविध्यान्यथानुपपत्त्याधिकृतेः काण्डद्वयाधिकारस्याधिकारपदेन विधिपुरुषसम्बन्धनिमित्तं जीवनादिरुच्यते । द्विविधं

भेदमाश्रयन्ते ततः किमित्याकाङ्क्षायामाह—तद्द्वैविध्येति। अधिकारद्वैविध्योपलब्ध्या शास्त्रयोः पूर्वोत्तरकाण्डयोरधिकृतमधिकारिणं पुरुषं भिन्नमाहुरिति सम्बन्धः। अन्यथाधिकारभेदानुपपत्तेः। ननु दर्शपूर्णमासगोदोहनशास्त्रयोरधिकारभेदेऽप्यधिकारिभेदो न दृश्यते तथेहापि किं न स्यादित्यन्यथोपपत्तिमपवदति शास्त्रार्थद्वित्वहेतोरिति। शास्त्रार्थस्याधिकर्तव्यस्य द्वित्वाद्धेतोः अधिकारभेदं तद्भेदात्तदाश्रयाधिकारिभेदं च यदि न प्रतीयुः न जानीयुः तदेह जगति शास्त्रद्वैविध्यं पूर्वोत्तरकाण्डलक्षणद्वैविध्यं व्यर्थं स्यादित्यर्थः। अर्थभेदाभावे शास्त्रभेदानुपपत्तेः नह्यन्तरावाक्यविष्णवादिवाक्ययोः शास्त्रभेदप्रसिद्धिरस्ति न वाधिकारतदाश्रयाधिकारिभेदाभावे शास्त्रार्थौ भिद्यते, दर्शपूर्णमासादौ तददर्शनाद्गोदोहनादावप्यधिकारभेदस्य सत्त्वात्। ननु तत्राप्यधिकारिभेदो न दृश्यत इति चेत्सत्यं तस्य गोदोहनस्याधिकृताधिकारत्वात्। न चेमौ शास्त्रार्थौ तथा तस्मात्स्वतन्त्रशास्त्रार्थभेदोऽधिकारिभेदं कल्पयतीति ॥ ७३ ॥

ननु श्रवणादिशास्त्रस्य निवृत्तिमात्रपरत्वे काण्डयोरधिकर्तव्यभेदादधिकारी भिद्येत तदेव कुतस्तस्य प्रवृत्तिविधायित्वे वाधकाभावात्। न च तस्य संन्यासिविषयत्वमेव वाधकं तस्यैवेति नियमाभावादित्याशङ्क्य श्रवणं सन्यासिन एवेति नियमाभावेपि इतरस्य विद्याधिकारिणो विज्ञानोद्देशेन संन्यासविधानमालस्यादिना न परं तत्र प्रवर्तते न हि विरुद्धशास्त्रयोर्द्वयोरेकदैकत्र समावेशः संभवति। नचैवं तस्य नित्याकरणप्रसङ्गः विधितस्तदभावस्येष्टत्वात्तदुक्तं भगवता 'जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनामि'ति वासनामूलं तु तत्तस्यापि न निवार्यते तस्मादविवक्षितकालभेदेन सकलकर्मत्यागं संन्यासं विदधाना श्रुतिर्न विद्याधिकारिणः कामपि प्रवृत्तिं सहत इति श्रवणादिशास्त्रस्य निवृत्तिपरत्वमेवेत्याह—

यमनियमविधानैर्वाङ्मनः कायचेष्टा-
व्युपरमणविशेषैः कथ्यते न प्रवृत्तिः ।
यदि भवति कदाचित्काचिदस्य प्रवृत्तिः
श्रुतिविहितनिवृत्तिः कर्मणां कत्थनं स्यात् ॥७४॥

यमनियमेति । यमा -निवृत्तिशास्त्रप्रतिपाद्याः नियमाः-प्रवृत्तिशास्त्रप्रतिपाद्याः श्रवणादिकमपि स्वाध्यायमौनादिषु यथायोगमन्तर्भवति । यथा यमविधायकं शास्त्रमशेषक्रियाव्युपरमणं बोधयति न कामपि प्रवृत्तिं तथाऽशेषैर्नियमशास्त्रैरपि वाङ्मनःकायचेष्टाद्युपरमणमेव कथ्यते न प्रवृत्तिरित्यर्थः । विपक्षे सकलकर्मपरित्यागश्रुतिः पीड्येतेत्याह—यदीत्यादिना । अस्य विद्याधिकारिणः कत्थनं पीडनम् ॥ ७४ ॥

नन्वेवं संन्यासशास्त्रैरेवाशेषनिवृत्तेः सिद्धत्वाच्छ्रवणादिशास्त्रं व्यर्थं स्यात् । संन्यासशास्त्रस्य निवृत्तिविशेषबोधकत्वे वा न श्रवणादिप्रवृत्तिस्तेन विरुद्ध्येतेत्याशङ्क्याह —

औदासीन्यविशेषमेव हि परब्रह्मात्मधीजन्मने
शास्तीदं श्रवणादिशास्त्रममुना त्वाक्षिप्यते व्यापृतिः ।
तां तां व्यापृतिमन्तरेण घटते सा सा न शास्त्रार्थधी-
रित्यर्थाल्लशुनादिभक्षणगतौदासीन्यबोधादिव ॥ ७५ ॥

औदासीन्येति । प्रवृत्त्युपरमवाच्यौदासीन्यशब्देन तद्धेत्विष्टसाधनत्वाभाव उच्यते । श्रवणादिशास्त्रं परब्रह्मात्मधीजन्मने औदासीन्यविशेषमेव शास्ति न सर्वमौदासीन्यं संन्यासशास्त्रं हि वैधव्यापारान्निवृत्तिं बोधयति । शास्त्रीयत्वाभिमानेन श्रद्धापूर्वं तत्प्रवृत्तेरेव विद्याविरोधित्वाच्छ्रवणादि शास्त्रं तु ततोऽप्राप्तां स्वाभाविकबाह्यव्यापारान्निवृत्तिं बोधयतीति न व्यर्थम् । यदापि संन्यासशास्त्रमेषणात्रयाद् व्युत्थानं बोधयत्स्वाभाविकव्यापारादपि व्युत्थानं बोधयतीत्युच्यते तदापि स्वा-

विक्षबाह्यव्यापारस्य विशेषतः परिवर्ज्यत्वद्योतनाय श्रवणादिशास्त्रमिति न व्यर्थं तदिति भावः। ननु तर्हि विद्यार्थिनः श्रवणे प्रवृत्तिः किंनिबन्धनेत्यत आह—अमुनेति। व्यापृतिः श्रवणादिरूपा प्रवृत्तिरमुना नात्मव्यापारौदासीन्येनाक्षिप्यते—अनुपपत्त्या प्रमीयत इत्यर्थः। अनुपपत्तिमेवाह तां तामिति। इतिर्हेतौ यस्माच्छ्रवणादिरूपव्यापृतिमन्तरेण शास्त्रार्थधीरात्मज्ञानशेषतयौदासीन्यबुद्धिर्न घटते तस्मादमुनेति सम्बन्धः। आत्मा हि स्वभावतो निर्दुःखानतिशयानन्दरूप एव सन् प्राप्तमपि स्वानन्दं परिहृतमपि दुःखं मोहादप्राप्तमपरिहृतं च मन्यमानोऽनुभवति वा प्राप्तपरिहृतसुःखदुःखप्रेप्सापरिजिहीर्षाभ्यामुन्मत्तवत्तत्र तत्र बाह्येषु साधनेषु बंभ्रमीति। स एव यदि कालान्तरे भगवदनुग्रहवशान्मुमुक्षुः संस्तादृशसुखदुःखाभावसाधनमात्मज्ञानमभिलषते, तदा यद्यपि वेदान्ता एव तादृग्ब्रह्मज्ञानजनने समर्थास्तथापि तं बाह्यव्यापारं विक्षिप्तचेतसं वर्षधारेव शिलातलमङ्कुरयितुं प्रतिबोधयितुमसमर्थाः सन्तः तस्याधिकारिणो बाह्यव्यापारनिवृत्तिमपेक्षन्ते। तां च श्रवणादिशास्त्रमात्मज्ञानशेषतया बोधयति। तच्चौदासीन्यं वेदान्तानामर्थान्तरप्रतिभासदशायां स्वस्मादात्मज्ञानं न संभवतीति। तन्निरासहेतुं श्रवणादिकमाक्षिपतीति प्रवृत्तेरौदासीन्यादाक्षेपे दृष्टान्तमाह—लशुनेति। कलञ्जादिकमादिपदग्राह्यं यथा लशुनं न भक्षयेदितिवाक्येन लशुनभक्षणस्येष्टसाधनत्वाभावबोधनद्वारा निवृत्त्यनुकूलप्रयत्नरूपा प्रवृत्तिरर्थादाक्षिप्यते तद्वदित्यर्थः॥ ७५॥

दृष्टान्तमेवोपपादयति—

औदासीन्ये बोधिते शास्त्रवृन्दै-
रर्थादस्मात्प्रच्युतस्यास्त्यनर्थः।
इत्यालोच्य प्रच्युतेः प्रापकस्य
प्राबल्येऽर्थे प्रातिलोम्यं विधत्ते॥ ७६॥

औदासीन्ये बोधितइति न हन्यान्न पिबेदित्यादिशास्त्रैरौदासीन्ये श्रेयः साधनत्वाभावेऽवगतेऽस्मादौदासीन्यान्निवृत्तेः प्रच्युतस्य हननादौ प्रवृत्तस्यानर्थोऽस्तीत्यर्थादनुपपत्त्या शाब्दविशिष्टाभावप्रतीत्यनुपपत्त्याऽऽलोच्य निश्चित्य प्रच्युतेः पलाण्डुभक्षणादिप्रवृत्तेः प्रापकस्य हेतोः रागादेः प्राबल्येऽर्थे उत्कटताविषये प्रातिलोम्यं प्रतिकूलं विधारणप्रयत्नादि विधत्त इत्यर्थः ॥ ७६ ॥

ननु कथमौदासीन्यात्प्रच्युतस्यानर्थप्राप्तिः, यतः प्रवृत्तस्य सुखमनुभूयते, नचेष्टसाधनत्वाभावमात्रेणानिष्टत्वमायाति, अनुपपत्तिर्वा कस्येति न ज्ञायत इत्याशङ्क्याह—

औदासीन्यं बोधयच्छास्त्रमेत-
न्नित्यं पथ्यं बोधयत्यस्य पुंसः ।
पथ्यादस्मात्प्रच्युतस्यास्त्यपथ्यं
बुद्ध्वापथ्यं प्रातिलोम्ये यतेत ॥ ७७ ॥

औदासीन्यामिति—एतच्छास्त्रं निषेधशास्त्रमौदासीन्यं बोधयदस्य पुरुषस्य नित्यं पथ्यं बोधयति आत्यन्तिकपुरुषार्थं बोधयति । शास्त्रस्यात्यन्तिकपुरुषार्थपरत्वात् अस्मादात्यन्तिकपुरुषार्थलक्षणौदासीन्यात्प्रच्युतस्य परिभ्रष्टस्य प्रवृत्तस्यापथ्यमनर्थो भविष्यतीत्यर्थात् बुध्वा पथ्यप्रातिलोम्येऽनर्थप्रतिकूले इष्टसाधनत्वाभावज्ञानान्निवृत्त्यनुकूलप्रयत्ने यतेतेत्यर्थः । एतदुक्तं भवति । यद्यपि पलाण्डुभक्षणादिकमनुतिष्ठतो दृष्टं सुखमस्ति तथापि न तदात्यन्तिकसुखं तस्य निरयपातहेतुत्वादतः शास्त्रेण निरयपातवर्जितसुखसाधनमिदं न भवतीत्यात्यन्तिकपुरुषार्थे बोधिते सति विशेष्यवति विशिष्टाभावानुपपत्त्या विशेषणाभावो निरयपातो निश्चेतुं शक्यत इति तत्प्रातिकूल्यनिवृत्तिप्रयत्नं संपादयिष्यतीति ततोऽस्य विद्याधिकारिणो निवृत्तमात्रमधिकर्त्तव्यं श्रवणादि

शास्त्रेणापि बोध्यते। श्रवणादिप्रवृत्तिस्तु भोजनादिप्रवृत्तिवदर्थसिद्धा न शास्त्रीयाऽतो ब्रह्ममीमांसाया विलक्षणाधिकारित्वात्तन्निरूपणं न मुधेत्यर्थः ॥ ७७ ॥

ननु निवृत्त्यधिकारिणोपि प्रथमतन्त्रे निरूपितत्वादिह तद्विचारो वृथेत्याशङ्क्याह—

**वृत्ता प्रवर्त्तकनिवर्त्तकशास्त्रसिद्ध्यै**
**षष्ठे प्रवृत्तिविनिवृत्त्यधिकारिचिन्ता।**
**अत्रैकमेव तु निवृत्त्यधिकारमार्ग-**
**माश्रित्य सूत्रकृदथात इह प्रवृत्तः ॥७८॥**

वृत्तेति। षष्ठे प्रथमतन्त्रे षष्ठाध्याये प्रवर्त्तकं विधिशास्त्रं निवर्त्तकं निषेधशास्त्रं तदर्थसिद्ध्यै प्रवृत्तिनिवृत्यनुगुणाधिकारिचिन्ता प्रवृत्ता अत्र तद्विपरीताधिकारी चिन्त्यते। न हि हननादिनिवृत्त्यधिकारिण एव ब्रह्मविद्यायामधिकारः। येनायं विचारो गतार्थो भवेत्। किन्तु सकलक्रियानिवृत्तिमत एव ब्रह्मविद्येति तद्विलक्षणाधिकार्यत्र चिन्त्यत इत्यर्थः। ननु ब्रह्मज्ञानाय वेदान्तवाक्यविचारकर्त्तव्यतां विदधानः सूत्रकारो विद्याधिकारिणोपि वैधीं प्रवृत्तिं सूचयति स्मेति तत्राह— अत्रैकमेव तु निवृत्त्यधिकारिमार्गमिति—सूत्रकृन्निवृत्तिमात्राधिकारिणमाश्रित्याथातोब्रह्मजिज्ञासेति प्रवृत्त इत्यर्थः। न च विचारकर्त्तव्यता तदर्थो भवत्यनुपलम्भात्। किन्तु जिज्ञासामात्रमिति भावः ॥ ७८ ॥

ननु कर्माधिकारिवदस्याप्यस्त्येवोभयरूपत्वमग्निहोत्रादेरावश्यकत्वान्न हि शास्त्रीयात्कर्मणो निवृत्तिः शास्त्रात् बोधयितुं शक्यते न वा शास्त्रीयस्य पुरुषार्थत्वाभावः येन पुरुषार्थार्थी तत्परित्यजेदित्याशङ्क्याह—

**औदासीन्यप्रच्युतेः प्रापकौ च**
**रागद्वेषौ नापरो हेतुरस्ति।**

रागद्वेषप्रातिलोम्ये प्रवृत्ति-
रौदासीन्यप्रापणाच्छास्त्रतोऽर्थात् ॥ ७९ ॥

औदासीन्येति । औदासीन्यप्रच्युतेर्यागादिप्रवृत्तेः प्रापको हेतु-रागद्वेषावेव नान्यस्तद्धेतुः । रागादिनिवृत्तिस्तु निवृत्तिशास्त्राद्भवतीत्यर्थः । यागादिविषया प्रवृत्तिरपि न शास्त्रजन्या किंत्वन्यत्र क्लृप्त-कारणभावाद्रागादेव न हि शास्त्रं पुरुषं रागादिवत्प्रवर्त्तयति । अप्रमाण्यापातात्, अपि तर्हि हितसाधनत्वबोधनेन तत्रेच्छामुपह-रँस्तदावश्यकत्वाद्राग एव प्रवर्त्तकः शास्त्रं त्वज्ञातज्ञापकं यागादेः स्वर्गादिहितसाधनत्वमेव बोधयति, तदपि न यागादेरात्यन्तिकं स्वर्गादेः पुरुषार्थाभासत्वात्तथापि प्रतिपन्नाशयानुरोधेन प्रतिपादनीय-मित्याभासोऽपि फलमित्यादौ तत्साधनत्वं बोधयति । यदा पुनर्निर-स्तनिखिलकाममधिकारिणं पश्यति तं प्रति परमपुरुषार्थसाधनतया निखिलकर्मनिवृत्तिमेव बोधयति । तस्माद्विद्याधिकारिण इतरवन्ना-वश्यकं कर्मेतीदं शास्त्रं विलक्षणाधिकारिकमित्यर्थः ॥ ७९ ॥

ते शौचत्वं विधीयमानं तस्य कथमाक्षिप्येतेत्याशङ्क्य तदप्या-क्षेपादेव सिद्ध्यतीत्याह—

अशुचेः प्रतिषेधशास्त्रतो
न भवत्येव हि वेदचिन्तनम् ।
श्रवणादिनिवृत्तिशास्त्रतः
स्वयमर्थादथ शौचमापतेत् ॥८०॥

अशुचेरिति । अशुचेः शौचादिरहितस्य पुरुषस्य तस्य वा एतस्य द्वावनध्यायौ यदात्मा शुचिर्यद्देश इति प्रतिषेधशास्त्रेण वेदोच्चारणं न भवत्येव, यतस्ततः श्रवणादिनिवृत्तिशास्त्रतः श्रोतव्यादिलक्षणे-तरनिवृत्तिपराच्छास्त्रादथ श्रवणाक्षेपानन्तरं शौचमप्यापतेदित्यर्थः ।

श्रवणस्य वेदोच्चारणं विनानुपपत्तेः । तदुच्चारणस्याशुचेरयोगाच्छ्रवणाक्षेपकशास्त्रादेव शौचरागद्वेषप्रातिलोम्यविषया प्रवृत्तिःऔदासीन्यप्रापणान्निवृत्तिबोधकादित्यर्थः । नन्वस्तु श्रवणस्यार्थादाक्षेपस्तथापि केन वचनमप्याक्षिप्यत इत्यर्थः ॥ ८० ॥

नन्वेवमपि शुद्धिसाधनं शौचमात्रमाक्षिप्यतां तस्य चातुर्गुण्यं केनाक्षिप्येतेत्याशंक्याह—

अचतुर्गुणशौचवारणा-
त्स्वयमेवास्य चतुर्गुणं भवेत् ।
अचतुर्ष्वशनस्य वारणा-
त्स्वयमेवास्य चतुर्षु भोजनम् ॥८१॥

अचतुर्गुणेति । अस्य त्रिविदिषासंन्यासिनः यतीनां तु चतुर्गुणमित्यादिना चतुर्गुणव्यतिरिक्तशौचवारणादाक्षिप्तशौचसाधनत्वेन चतुर्गुणमृत्तिकादानमापततीत्यर्थः । एवं श्रवणाक्षिप्तजीवनान्यथानुपपत्त्या क्षिप्ताशनस्य चातुवर्ण्यं चरेद्भैक्षमित्यादिना वर्णचतुष्टयातिरिक्तचण्डालादिपरिर्जनाच्चातुवर्ण्यभिक्षाचरणं प्राप्यत इत्याह— अचतुर्ष्वशनस्येति । ब्राह्मणादिचातुर्वर्ण्यव्यतिरिक्तेष्वित्यर्थः ॥ ८१ ॥

ननु 'विवर्णवासा मुण्डोऽपरिग्रह' इत्यादिना विवर्णवासस्त्वादिकं विधीयते, न च तत्केनचिदर्थाक्षेप्यं न च तत्राप्यविवर्णवासो न धार्यमिति कल्प्यम्, तथात्वे तत्र सर्वत्र श्रुतहान्यश्रुतकल्पने प्रसज्येयातामित्याशङ्कामुपसंहारव्याजेन पराकरोति—

इति योजय सर्वमीदृशं
कथितन्यायवशेन सादरम् ।
विधिहीननिवृत्तिशास्त्रतः
कथितेऽस्मिन्नधिकारवर्त्मनि ॥८२॥

योजयेति । इत्यनेनेतरपरिवर्जनप्रकारेणेदशविधिस्वरूपसर्ववाक्यमस्मिन्नधिकारवर्त्मनि निवृत्तिमात्राधिकारमार्गे संन्यासशास्त्रपीडनलक्षणकथितन्यायेन सादरं श्रुतहान्यादिदोषचिन्तनं विना योजयेति सम्बन्धः । तत्र हेत्वन्तरमाह—विधिहीनेति । विधिहीननिवृत्तिमार्गत इत्यर्थः । अस्यापि कर्त्तव्यबोधने पूर्वं तन्त्राधिकारिणोऽस्य वैलक्षण्यन्न सिद्ध्येत्संन्यासशास्त्रपरिपीडनमपि स्यादित्यर्थः । ततः प्रामाणिकत्वाच्छास्त्रश्रुतहान्यश्रुतकल्पने न दोषायेति भावः ॥ ८२ ॥

एवं श्रवणादिशास्त्रस्यनिवृत्तिमात्रपरत्वमुक्तमिदानी तस्यापि प्रवृत्तिपरत्वमिति पक्षान्तरमाह—

इति केचन वर्णयन्ति त-
द्विपरीतं प्रवदन्ति केचन ।
प्रविभज्य तदप्युदीर्यते
निपुणाचार्यपरम्परागतम् ॥८३॥

इतिकेचनवर्णयन्तीति । तद्विपरीतं श्रवणादिशास्त्रस्य निवृत्तिमात्रपरत्वविपरीतं प्रवृत्तिपरत्वमित्यर्थः । प्रविभज्य प्रविविच्य निपुणाचार्यपरम्परागतमित्यनेनायं पक्षः स्वाभिमत इति दर्शितम् ॥ ८३ ॥

ननु कथं श्रवणादिशास्त्रस्य विधिपरत्वं संन्यासशास्त्रविरोधादित्याशङ्क्याह—

उत्सर्गतः सकलकर्मनिवृत्तिनिष्ठा
संन्यासशास्त्रशतकोटिभिरार्पिताऽस्य ।
अस्ति प्रतिप्रसवशास्त्रमुखात्प्रतीता
चेष्टाऽऽत्मबुद्धिपरिपाकफलापि काचित् ॥८४॥

उत्सर्गत इति । अस्य विद्याधिकारिणः संन्यासशास्त्रैरुत्सर्गतः सामान्यतः सकलकर्मनिवृत्तौ एव निष्ठाधिकारसमर्पिता यद्यपि तथापि प्रतिप्रसवशास्त्रात्परित्यक्तस्य प्रत्यर्पणविधेरवगतात्मबुद्धिपरिपाकोऽसंभावनादिकृतदौस्थ्यनिवृत्तिस्तत्फला काचिच्चेष्टा प्रवृत्तिरपि विद्यत इत्यर्थः । अयम्भावः—यद्यपि सामान्यतः तस्मादेवंवित् शान्तो दान्त उपरतः एतं वैतमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणाया व्युत्थायाथ भिक्षाचर्यं चरन्ति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यादिश्रुतिभिर्ज्ञानोद्देशेन सकलकर्मत्यागः श्रूयते तथापि त्यक्तैकदेशस्य श्रवणादेः प्रतिप्रसवेन श्रोतव्यादिवाक्येन कर्त्तव्यता बोध्यते । अन्यथा श्रुतहान्यश्रुतकल्पनाप्रसङ्गादुभयश्रुतिमुख्यार्थसम्भवत्यन्यतरलक्षणाया अन्याय्यत्वाच्च । नचैवं सति श्रुतिद्वयविरोधोप्यस्ति । न चैतावता सर्वकर्मप्रसङ्गः, तस्य ज्ञानाङ्गत्वेनाविधनाद्यज्ञोपवीतदारसंग्रहसाध्यस्य तस्य तद्विरहिणा संन्यासिना कर्त्तुमशक्यत्वाच्च । तस्मान्न श्रवणादिशास्त्रस्यविधिपरत्वे संन्यासशास्त्रं बाधकमिति ॥ ८४ ॥

विद्याधिकारिणोपि शास्त्रद्वयात्प्रवृत्तिनिवृत्ती विद्येते इत्युक्तमिदानीं के ते प्रवृत्तिनिवृत्ती इत्यत्र द्वैराश्यं कृत्वा दर्शयति—

यमस्वरूपा सकला निवृत्ति-
स्तथा प्रवृत्तिर्नियमस्वरूपा ।
निवर्तकादत्र यमप्रसिद्धिः
प्रवर्तकात्स्यान्नियमप्रसिद्धिः ॥८५॥

यमस्वरूपेति । यमनियमयोर्लक्षणमाह—निवर्त्तकादिति । निवर्त्तकशास्त्रवेदनीया यमाः प्रवर्त्तकशास्त्रवेदनीया नियमा इत्यर्थः ॥ ८५ ॥

इदानीं निवृत्तिं द्वेधा विभज्य दर्शयति—

निवृत्तिरस्ति द्विविधा बहिःस्थिता
शरीरसर्वेन्द्रियसंयमात्मिका ।
तथाऽपराऽभ्यन्तरवस्तुसंश्रया
सदात्मकूटस्थचिदेकविग्रहा ॥ ८६ ॥

निवृत्तिरस्तीति । ननु कथं निवृत्तिद्वैविध्यं वाक्कायमनोनिवृत्तिभेदेन तस्यास्त्रिप्रकारत्वादित्याशङ्क्य तासां सर्वासामपि बाह्यत्वाद्बाह्याभ्यन्तरभेदेन द्वैविध्यं विद्यत इत्याह— बहिः स्थितेत्यादिना। बहिस्थिता काचिदभ्यन्तरवस्तुसंश्रया काचिदित्यर्थः । बहिस्थितामेवाह-शरीरेति । शरीरस्य द्विविधेन्द्रियग्रामस्य च स्वस्वविषयव्यापारोपरमरूपेत्यर्थः ननु तर्हि का सावभ्यन्तरनिवृत्तिः, इन्द्रियमनोनिवृत्तेरपि बाह्यत्वादात्मगता निवृत्तिरभ्यन्तरेति चेन्न। तस्य सर्वगतस्य सर्वात्मनो निवृत्त्यनुपपत्तेरिति तत्राह—सदात्मकूटस्थचिदेकविग्रहेति । आत्मनः सर्वात्मत्वेपि सत्यकूटस्थचैतन्यैकरूपतया कालत्रयेप्यनृत्तजडविकारास्पर्शित्वादात्मरूपैवाभ्यन्तरनिवृत्तिरित्यर्थः । एतच्चाधिकारिनिरूपणवेलायां त्वंपदलक्ष्यस्याधिकारिस्वरूपस्य वस्तुतः कर्तृत्वाद्यसंस्पर्शितया ऽसङ्गत्वमुपपादयितुमतो नाप्रस्तुताभिधानमित्यर्थः ॥ ८६ ॥

द्वैविध्यकीर्त्तनस्य फलान्तरमप्याह—

तयोस्तु बाह्या विधिशास्त्रलभ्या
प्रयत्ननिवर्त्त्यतया प्रतीतेः ।
विधानशास्त्रं विरहय्य लभ्या
चितिस्वरूपा त्वितरा निवृत्तिः ॥ ८७ ॥

तयोस्त्विति । तयोर्निवृत्त्योर्मध्ये बाह्यनिवृत्तिर्बाह्यशरीराद्याश्रया निवृत्तिः प्रयत्नसाध्यतया प्रतीयमानत्वाद्विधिशास्त्रलभ्या यद्यपि निवृत्तिः प्रवृत्तिप्रागभावः स चानादिः तथापि प्रवृत्तिहेतुसमाजेन

प्रवृत्तिप्रसक्त्या तत्प्रागभावनाशप्रसक्तौ इन्द्रियमुपसंहरेन्निवर्तयेदित्येवं रूपं निवृत्तिशास्त्रं प्रवृत्तिविरोधिनिवृत्तिप्रयत्नद्वारा प्रवृत्तिहेतुं विरुणद्धि। ततः प्रवृत्तिप्रागभावः कालान्तरसम्बन्धी भवतीति निवृत्तिः प्रयत्नसाध्येति भावः। आन्तरनिवृत्तिस्त्वेवं न भवतीत्याह—विधानशास्त्रमिति। इतरा बाह्या निवृत्तिरन्या चितिस्वरूपा निवृत्तिः विधानशास्त्रं निवृत्तिधायकशास्त्रं विनैव लभ्यते तस्या नित्यसिद्धचैतन्यस्वरूपत्वादित्यर्थः ॥ ८७ ॥

ननूभय्यपि निवृत्तिः किं परमार्था, नेत्याह—

मायामयी बाह्यनिवृत्तिरिष्टा
चितिस्वरूपा परमार्थसत्या।
तयोर्निवृत्त्योश्च निवृत्तिशास्त्रं
विधायकं बाह्यनिवृत्त्यपेक्षम् ॥ ८८ ॥

मायामयीति। मायामयदेहाद्याश्रितत्वात्स्वस्या अपि मायाकार्यत्वाद्बाह्यनिवृत्तिर्मायामयी मिथ्येत्यर्थः। अत एव बाह्यनिवृत्तिर्विधीयते चेत्याह—तयोर्निवृत्त्योरिति। ॥ ८८ ॥

ननु निवृत्तिशास्त्रस्यापि विधायकत्वे कुतस्तस्य निवर्त्तकत्वमित्याशङ्क्य निवृत्तिबोधनादित्याह—

प्रवृत्तिशास्त्रेण समेऽपि सम्मते
निवृत्तिशास्त्रस्य विधेयबोधने।
निवृत्त्यनुष्ठाननिबन्धनत्वतो
निवर्तकं शास्त्रमिदं प्रचक्षते ॥ ८९ ॥

प्रवृत्तिशास्त्रेणेति। प्रवर्त्तकशास्त्रेणेत्यर्थः। विधायकत्वे समेऽपि

निवृत्तिविधायकत्वान्निवर्त्तकत्वमित्याह — निवृत्त्यनुष्ठानेति । निवृत्त्यनुष्ठान-प्रयोजकत्वादित्यर्थः ॥ ८६ ॥

नन्वेवं ब्रह्मविद्याधिकारिणोपि कर्त्तव्यसद्भावे काण्डद्वयस्याधि-कारिवैलक्ष्यण्यन्न स्यादित्याशङ्क्य प्रकारान्तरेण तदुपपादयन्नधि-कारिनिरूपणमुपसंहरति

शास्त्रद्वयेन परिदर्शितसाधनेन
साध्यस्पृहापरवशः पुरुषो मुमुक्षुः ।
शुश्रूषते गुरुमथेत्युदितः स चात्र
वेदान्तवाक्यविषयश्रवणाधिकारी ॥ ९० ॥

शास्त्रद्वयेनेति । पुरुषो गुरुं शुश्रूषत इति सम्बन्धः । पुरुषं विशिनष्टि शास्त्रेति । प्रवर्त्तकनिवर्त्तकरूपेण शास्त्रद्वयेन परिदर्शितं यत्साधनं यमादि तेन यमाद्यनुष्ठानेन साध्यस्पृहापरवशः ब्रह्मात्मैक्यसाक्षात्का-रवाञ्छावशीकृतव्यापार इत्यर्थः । अनेन विविदिषुचिकीर्षुभेदेन काण्ड-द्वयाधिकारिवैलक्षण्यं दर्शितं यद्यप्ययमपि श्रवणादि चिकीर्षुस्त-थापि न चिकीर्षुः विविदिषयैव तत्र प्रवृत्तेः तस्य विद्यैकफलत्वा-दिति भावः । वैलक्षण्यान्तरमाह — मुमुक्षुरिति । अयं मुमुक्षुः स स्वर्गादि-बुभुक्षुः मुमुक्षाशब्दो विशेषणान्तराणामप्युपलक्षणम् । तथा च विवे-की विरक्तः शान्तो मुमुक्षुरत्राधिकारी, अविवेक्यविरक्तोऽशान्तः बुभुक्षु-स्तत्राधिकारीति प्रकाशतमोवदनयोर्वैलक्षण्यमित्यर्थः । वैलक्षण्यान्त-रमाह — गुरुं शुश्रूषत इति । अयं विद्यार्थी गुरुमेव शुश्रूषते नाग्नीनितर-स्त्वग्नीनेवेत्यर्थः । नन्वेतत्सूत्राननुगुणं सूत्रकारेण निवृत्तिमात्रमार्गा-श्रयणेनाधिकारिवैलक्षण्यनिरूपणात्तत्राह अथेत्युदित इति । य एवंलक्षणः स एव वेदान्तवाक्यश्रवणाधिकारीत्यथशब्देनापि सूत्रस्थेनोदितः सूचित इति सम्बन्धः । अयम्भावः । सूत्रकारो हि ब्रह्मज्ञानाय वेदान्त-

वाक्यविचारकर्त्तव्यतां सूचयति न जिज्ञासामात्रं तथात्वे निरर्थकसिद्धबोधित्वेनानुवादकत्वप्रसङ्गात्तस्य च न्यायसूचनपरे सूत्रेऽनुपपत्तेस्तस्माद्विचारकर्त्तव्यतां सूचयतः सूत्रकारस्यायमेवाधिकारिविभागः संमत इति । ननु श्रवणस्य विधेयत्वमनुपपन्नं स च न तावन्नित्यविधिः अकरणे प्रत्यवायाभावान्नापि काम्यविधिः विध्युद्देशे फलाश्रवणान्निमित्तसंयोगाभावान्न नैमित्तिकोपि नापि प्रायश्चित्तविधिः दोषसंयोगे सत्यचोदितत्वादिति चेन्न रात्रिसत्रन्यायेनार्थवादिकं फलमादायानर्थनिवृत्तिप्रतिबन्धनिवृत्तिकामो विचारं कुर्यादिति विधिविपरिणामेन काम्यविधित्वोपपत्तेः । नन्वसंभावनादिप्रतिबन्धनिवृत्तिं प्रति विचारोऽन्वयव्यतिरेकसिद्धसाधनभावो भवति लोके गान्धर्वशास्त्रविचारस्य तदसंभावनादिनिवर्त्तकत्वदर्शनाद्विधिश्चाप्राप्तविषय एव भवति विधिरत्यन्तमप्राप्त इति वृद्धवचनादतो नायं विधिरिति चेत्सत्यं तथाप्यवहननादिवन्नियमविधित्वोपपत्तेः, नियमे चाप्राप्तांशप्रापकत्वस्य सत्त्वात्तस्य फलतोऽपूर्वत्वात् । नन्वात्मन्यसंभावनानिवृत्तौ कारणान्तराभावात्कथं पाक्षिकप्राप्तिः, पाक्षिकप्राप्तौ सत्यां हि नियमविधिः, नियमः पाक्षिके सतीत्यभिधानादतो ऽप्राप्तांशप्राप्त्यसंभवान्न नियमविधिरिति चेन्न—असंभावनानिवृत्तित्वसामान्यौपाधौ कारणान्तरस्यापि सिद्धत्वाद्ब्रह्माद्यसंभावनायास्तर्कान्तरेण निवर्त्यमानत्वात् । नन्वस्य नियमापूर्वस्य कुत्रोपयोगः न तावदाशयशुद्धौ तस्यास्तदनन्तरभाव्यसंभावनादिनिवृत्तिलक्षणदृष्टफलसमानाश्रयत्वेनापूर्वस्य तद्धेतुत्वानुपपत्तेः नापि ज्ञाने ज्ञानस्य दृष्टप्रमाणफलत्वेन अदृष्टफलत्वानुपपत्तेरिति चेन्न श्रवणस्यासंभावनानिवृत्तिस्तत्समवाय्यदृष्टं च फलं ताभ्यां च साक्षात्कारो विधूतार्थिकं संशयात्मवान्भवतीति? नियमापूर्वसाध्यमस्त्येवेति । अथवाऽसंभावनादिकमिवाशयमालिन्यविशेषोऽप्यविद्यानिवृत्तिप्रतिबन्धकः तन्निवृत्तिश्च नियमापूर्वेण जायत इति सर्वथाप्यस्त्येव प्रयोजनम् । केचित्तु आत्मा

वारे द्रष्टव्य श्रोतव्य' इत्यादिविध्युद्देशेऽप्रतिबन्धालौकिकात्मसाक्षात्कारस्य विशेषणतया मूलाज्ञाननिवृत्तिप्रतिबन्धकाभावस्य वोद्देश्यतया श्रवणविधिफलत्वाच्छ्रवणस्य तत्साधनत्वस्य मानान्तरागोचरत्वात्तादृशज्ञाने तादृशासंभावनानिवृत्तौ वा कारणान्तराभावादपूर्वविधिरेव श्रवणविधिरिति वदन्ति। नचैवं सति नियमत्वप्रसङ्ग इति वाच्यम्। यस्य हि येनाकारेण फलत्वं तदाकारेण तत्र साधनद्वयप्राप्तौ नियमः यथाऽपेक्षिततुषविमोकत्वाकारेणावहननफले तुषविमोके साधनद्वयस्य योग्यतया प्राप्तावहननियमः, नाचात्रात्मज्ञानत्वाकारेणासंभवनादिनिवृत्तित्वाकारेण वा तयोः फलत्वं तस्यान्यतोपि सिद्धत्वादत एव न नियमविधिपक्षोक्तदोषपरिहारप्रयासोपीति तस्मात्सर्वथाप्यस्त्येव श्रवणादिविधिरिति ॥ ९० ॥

एवं प्रकरणारम्भापेक्षितं ब्रह्मात्मैक्यलक्षणविषयमनर्थनिवृत्त्यानन्दावाप्तिलक्षणप्रयोजनं शक्यप्रतिपाद्यत्वलक्षणसंबंधं नित्यानित्यविवेकादिविशेषणकलापविशिष्टाधिकारिणं चानुबन्धचतुष्टयमुपपादयञ्शास्त्रारम्भमुपपाद्य गुरुशिष्योपदेशक्रमेण शास्त्रमारभमाणो नाबुभुत्सितं बोधनीयमितिन्यायेन बुभुत्सानुरोधेनार्थमवबोधयितुं पदार्थद्वयवाक्यार्थविषयबुभुत्सामर्थात्तद्विषयप्रमाणबुभुत्सां च दर्शयति—

स परिपृच्छति कोऽहमसौ च कः
सहजमस्य च तस्य च किं पृथक्।
उत तयोरभिदेश्वरजीवयो-
रिति च संशयसंकुलमानसः ॥ ९१ ॥

स परिपृच्छतीति। स विशिष्टाधिकारी गुरुमित्यनेन प्रकारेण पृच्छतीत्यनुषज्य सम्बन्धः। प्रश्ने निमित्तमाह—संशयसंकुलमानस इति। संशयाकुलितचित्त इत्यर्थः। किं पृच्छतीत्याकाङ्क्षायां संशयप्रश्नयोः

समानविषयत्वादितिशब्दपरामृष्टं प्रश्नसंशययोर्विषयं दर्शयति । तत्रादौ त्वंपदार्थे संशयप्रश्नविषयमाह — कोहमिति । अहं कः किं देहेन्द्रियादिष्वन्यतमः उत तदन्यः । यद्यपि तदन्यः तदापि देहेन्द्रियादिसंहतः कर्त्ता भोक्ता उत तद्विलक्षणोऽपरोक्षनित्यानुभवप्रकाशकूटस्थासङ्गस्वभाव इति संशयप्रश्नयोरर्थः । अहंप्रत्ययावगतस्यात्मत्वाद्देहादिषु प्रत्येकं ब्राह्मणोहं कृशोहं काणोहं बधिरोहं मूकोहं मन्ताहमिति प्रत्येकमहंप्रत्ययस्य सत्त्वात्तेषां प्रत्येकं व्यावृत्तत्वाच्च किं सर्वानुस्यूतोऽन्य एव वात्मेति विशेषानवधारणात्प्रश्नः यदा त्वन्यस्तदाप्यधीतसाङ्गस्वाध्यायस्याहरहरावर्त्यमानवेदान्तवाक्यैः कतम आत्मेत्युपक्रम्य 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, अत्रायं पुरुषः स्वयं ज्योतिः, स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष, (बृ० ४-३-१५) इत्यादिश्रुतिभ्यः प्रत्यगात्मन्यापाततो देहेन्द्रियादिव्यतिरिक्तत्वस्वयंज्योतिष्ट्वावस्थात्रयपुण्यपापासंस्पर्शित्वाद्यवगमात् प्रत्यक्षादिभिश्च तद्विपरीतयुक्तत्वप्रतीतेर्विशेषानवधारणात्त्वंपदार्थप्रश्नः । अर्थाच्च तद्विषयप्रमाणप्रश्नोपि दर्शितः । किमत्राहमनुभवः प्रमाणमुतागमः । यद्याद्यः तदा मद्रूपं कर्तृत्वादिविशिष्टमेव सिद्ध्यति । यद्यागमस्तर्हि यथागममसङ्गमविक्रियं मद्रूपं सिद्ध्यति । आगमस्य तु प्रामाण्यं न युक्तमिव भाति आत्मनः कर्तृत्वदुःखित्वाद्यावेदकप्रत्यक्षविरोधादिति । तत्पदार्थसंशयप्रश्नावाह—असौ क इति । परोक्षत्वेन प्रतीयमानः परमेश्वरोपि कः—किमद्वितीयापरोक्षस्वरूपः उत सद्वितीयपरोक्षस्वरूप इति 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, ऐतदात्म्यमिदं सर्वंतत्सत्यं स आत्मा तत्त्वमसि, नेह नानास्ति किंचन, यत्साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः" (बृ० ३-४-१) इत्यादिवाक्यैस्तत्पदार्थस्य ब्रह्मणोऽद्वितीयत्वापरोक्षभावसरूपत्वानुभवादनुमानादिना सद्वितीयत्वपरोक्षत्वावगतेर्विशेषानवधारणात्प्रश्न इत्यर्थः ।

अर्थात्तद्विषयप्रमाणसंशयप्रश्नोपि दर्शितः । किंब्रह्मण्यनुमानमुतागम एव । यद्याद्यः तदा कार्यानुरोधेनकारणमनुमीयमानमनेकरसं परोक्षमेव तत्सिद्ध्यति । यद्यागमः तदाऽद्वितीयमपरोक्षमेव सिद्ध्यति परन्तु भेदग्राहिप्रमाणविरोधात्तस्य प्रमाण्यमेवदुर्लभमिव भातीति वाक्यार्थे संशयप्रश्नावाह—सहजमित्यादिना । अस्य त्वंपदार्थस्य तत्पदार्थस्य च पृथक् पृथक्त्वं भेदः किं सहजः स्वाभाविकः।उत तयोः पदार्थयोरभेदः सहज इति किं जीवेश्वरौ स्वभावतो भिन्नावुताभिन्नाविति वाक्यार्थे 'तत्त्वमसि, अयमात्मा ब्रह्म, अहं ब्रह्मास्मि, प्रज्ञानं ब्रह्म, यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् । सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तदि (कै० १६) त्यादिवाक्यैर्जीवपरयोरभेदावगमात् द्वासुपर्णेत्यादिना च त योर्भेदावगमादनवधारणात्प्रश्नः । अर्थात्तद्विषयप्रमाणसंशयप्रश्नोपि किमैक्ये । तत्त्वमादिवाक्यं प्रमाणमन्यद्वा अन्यत्तु नोपलभामहे तत्त्वमादिवाक्यं च तत्र न प्रमाणं भवति तद्भेदावगाहिश्रुत्यन्तरविरुद्धत्वादिति । नन्वध्यस्तमलपवपुरित्यत्र सर्वस्याप्यध्यासात्मकत्वमुक्तं तत्कथं मानान्तरविरोधाशङ्केति चेत्सत्यं तत्र हि ब्रह्मात्मैक्यं सिद्धवत्कृत्य प्रमितविपरीतरूपत्वेन प्रपञ्चस्याध्यस्तत्वं वर्णितमत्र तु तदेवाक्षिप्यत इति न दोषः। चशब्देनान्येपि संशयाः साधनादिविषयाः समुच्चीयन्त इति भावः । वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वादादौ पदार्थविषयः प्रश्नः तत्रापि त्वं पदार्थस्यापरोक्षतया प्रथममुपस्थितत्वात्प्रथमं तत्प्रश्न इति क्रमः ॥ ११ ॥

एवं शिष्यजिज्ञासां दर्शयित्वा न तज्जिज्ञासामात्रेणाप्यात्मोपदेशो युक्तः अनधिकारिणोपि पाण्डित्याद्यर्थतज्जिज्ञासोपपत्तेः । दृश्यते ह्यद्यतनानामपि तथा जिज्ञासा न च तत्राप्येतदुपदेशनं युक्तं नाविरक्ताय न चाशुश्रूषवे वाच्यं न च मां योभ्यसूयतीत्यादिनिषेधादतो भूयोप्यधिकारी परीक्षणीय इत्युपदेशार्हं प्रदर्शितमधिकारिणं बहुशः परीक्षान्यायेनाह—

तीर्थेन तं विविदिषन्तमनन्यभक्तं-
संसारसागरभयातुरचित्तवृत्तिम् ।
एकं मुमुक्षुमधिकारिणमात्मतत्त्व-
ज्ञाने समीक्ष्य गुरुराह दयाविधेयः ॥ ९२ ॥

तीर्थेनेति । गुरुरधिकारिणं समीक्ष्य वक्ष्यमाणमाहेति सम्बन्धः । कुत्राधिकारिणमित्यत्र ज्ञानाधिकारिणमित्याह—आत्मतत्त्वज्ञान इति । अधिकारिणमेवाह तीर्थेनेत्यादिना । तीर्थेन वैदिकेन कर्मणा तं परमात्मानं विविदिषन्तं गुरुशुश्रूषादिपूर्वकं शुद्धाशयतयाऽप्रतिबन्धपरमात्मज्ञानमिच्छन्तमित्यर्थः । ननु स्वर्गादिरागेणात्मविविदिषा न संभवतीत्यत्राह—अनन्यभक्तमिति । आत्मैकप्रियमित्यर्थः । तथा च नायं स्वर्गादिरागीत्यर्थः । न केवलमस्यान्यत्र रागाभावः किन्तु तद्विषयोद्वेगोपीत्याह-संसारेति । संसार एव सागरस्तन्निमित्तं यद्भयं तेनातुरा उद्विग्ना चित्तवृत्तिर्यस्य स तथोक्तः । तीव्ररागादिज्वालाजटिलसंसारमहानलसंदह्यमानमिवात्मानं मन्यमानमित्यर्थः । एतादृशस्य च लोके नोपालब्ध्यभावः शङ्कनीयः सहस्राणां मध्ये कस्य चिदेवंरूपत्वसम्भवादित्याह—एकमिति । तदुक्तं भगवतापि 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत'इति । विविदिषाहेतुमुमुक्षाप्यस्तीत्याह-मुमुक्षुमिति । तथा च जिज्ञासामात्रेण न विद्योपदिश्यते किन्तु नित्याद्यनुष्ठानोपात्तविशिष्टादृष्टसमुपजातबुद्धिशुद्धिं नित्यानित्यविवेकिनं बन्धान्तर्भूतैहिकामुष्मिकभोगविमुखीकृतचित्तवृत्तिं त्यक्तनित्यनैमित्तिककाम्यकर्माणं शमादिमन्तं मुमुक्षुमात्मैकप्रियं गुरोरिष्टं समाचरेदिति शिष्टाचारपरिप्राप्तगुरुशुश्रूषादिसाधनवन्तं कर्तृत्वादिप्रपञ्चानर्थव्रातोपशमनपटुरप्रत्यग्ब्रह्मात्मैक्यावजिगमिषुं प्रत्येवेति गुरोः शिष्यं प्रत्युपदेशनिमित्तं दर्शयति—दयाविधेय इति । हा कष्टमयं स्वाविद्याकल्पितेऽस्मिन्संसारे सुगमसंतरणेपि कण्ठाबद्धपाषाण

इव शश्वन्निमज्जति कथमस्मादुद्धर्त्तव्यः अवश्यं चैनमुद्धरामीत्येवं रूपदययैव शिष्योपदेशकर्मणि विधेयः प्रयोज्यः न तु द्रव्यादानख्यात्यादिभिः। यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इति विद्यायाः अमूल्यत्वश्रुतेः परमानन्दनिमग्नस्य ख्यात्याद्यभिलाषाभावाच्चेत्यर्थः ॥ ६२ ॥

इदनीमुपदेश्यमानार्थस्यातिसूक्ष्मतया तत्प्रतिपत्तये शिष्यस्यावहिततां संपादयन् किमाहेत्याकाङ्क्षायां तदेवाह—

**वक्ष्यामि वत्स तव वाञ्छितमत्यवस्थ-**
**मत्यन्तमेव च हितं शृणु तन्मनस्कः।**
**त्वं प्रत्यगव्यवहितं तव सुप्रसिद्धं**
**ब्रह्माद्वितीयमुदितं च तदस्यजस्रम् ॥ ६३ ॥**

वक्ष्यामि वत्सेति। हे वत्स। तव वाञ्छितं ब्रह्मात्मैक्यं वक्ष्यामि त्वं तन्मनस्कः सन् शृणुवति सम्बन्धः। वत्सेति सम्बोधनेन स्वस्य सौमनस्यं शिष्यानुग्रहनिमित्तदयां च सूचयति। वाञ्छितं विशिनष्टि—अत्यवस्थमिति। सकलव्यवहारातीतं परं सूक्ष्मं सूक्ष्मात्सूक्ष्मतरमिति श्रुतेः। अनेन तन्मनस्कत्वे हेतुरुक्तः तर्हि किंदुर्ज्ञेयत्वादुपेक्षणीयमेव नेत्याह-अत्यन्तमिति। अत्यर्थं हितमेव ज्ञातमात्रेण परपुरुषार्थो भवतीत्यतोऽतिसूक्ष्ममप्यवहितमनस्कः सन् तच्छृणुवत्यर्थः। एवं शिष्यस्यावहिततां संपाद्य प्रश्नक्रमेणोत्तरमभिप्रेत्याह—त्वं प्रत्यगित्यादिना। त्वंशब्दार्थंशोधितमाह प्रत्यगिति। कोहमिति यस्त्वं पृच्छसि स त्वं प्रत्यगनृतजडदेहादिप्रातिकूल्येन सत्यप्रकाशात्मना च प्रकाशत इति प्रत्यक्सत्यचैतन्यरूपः न देहादिस्तत्संहतो वा देहादेरूपादिमत्त्वेन कार्यत्वेन च स्वव्यतिरिक्तद्रष्टृकत्वान्मम देहो मम चक्षुर्मम मन इति आत्मनस्तद्व्यतिरेकानुभवाच्च तत्संघातस्य चानात्मसंघातत्वेन गृहा-

दिवदनात्मत्वात् द्रष्टृत्वानुपपत्तेः ततः प्रत्यगेव त्वम्, अतो न कर्तृत्वादिगुणक इत्यर्थः । एतस्मिन्सत्यचैतन्यरूपेऽनुभवं प्रमाणमाह—तव सुप्रसिद्धमिति । श्रुतिमस्तकैर्वा सत्यचैतन्यं तव स्वरूपं प्रसिद्धमित्यर्थः । न च प्रत्यक्षविरोधः दुःखित्वादेरनात्मधर्मत्वात्तद्ग्राह्यस्य तद्धर्मत्वानुपपत्तेरिति । तत्पदार्थप्रश्नोत्तरमाह—ब्रह्मेति । तत्पदशोधितपदार्थमाह—अद्वितीयमव्यवहितमिति । यद्ब्रह्म तत्सजातीयादिभेदशून्यमेकरसमत एवाव्यवहिते प्रतिपत्तुः स्वरूपाभिन्नतयाऽपरोक्षं न तु सद्वितीयं परोक्षं चेत्यर्थः । वाक्यार्थप्रश्नोत्तरमाह—तदसीति । प्रत्यक्त्वमव्यवहितमद्वितीयं यद्ब्रह्माजस्रं संसारावस्थायामपि तदसीति सम्बन्धः । ततो जीवपरयोरभेद एव न तु भेद इत्यर्थः । तत्पदार्थवाक्यार्थविषयार्थिकप्रमाणप्रश्नस्यार्थादुत्तरमभिप्रेत्याह—उदितमिति । एकमेवेत्यादिश्रुत्या प्रतिपादितमित्यर्थः । न च सद्वितीयत्वग्राहिमानान्तरविरोधादस्याप्रामाण्यं तस्य कल्पितद्वैतविषयत्वेनाविरोधात् । न च तत्त्वमाद्यैक्यश्रुतेर्द्वासुपर्णेत्यादिभेदश्रुतिविरोधः तस्याः प्रत्यक्षादिसिद्धभेदानुवादित्वादभेद एव च सर्वस्याः श्रुतेस्तात्पर्यावगमादिति भावः ॥ ९३ ॥

एवं संक्षेपतः पदार्थद्वयं वाक्यार्थं च सप्रमाणकमुपदिश्य विस्तरेणाप्येतमर्थं शिष्याकाङ्क्षानुरोधेन प्रतिपिपादयिषुः शिष्यस्यानुचितकरणाशङ्काव्यावृत्तये चोद्यावकाशं ददाति—

> यद्यत्र पश्यसि विरोधमुदीरय त्वं
> सद्यस्ततः परिहराणि तमप्रयत्नात् ।
> वाक्यं निरस्तसकलप्रतिबन्धकं स-
> त्त्वां बोधयिष्यति करार्पितबिल्वतुल्यम् ॥ ९४ ॥

यद्यत्र पश्यसीति । त्वमत्रास्मदुक्ते यदि विरोधं पश्यसि तर्हुदीरय ।
ततो विरोधोदीरणानन्तरमेवाहं तं विरोधमप्रयत्नात् परिहराणि

परिहर्त्तुमिच्छामि इच्छार्थेषु लिङ्लोटाविताच्छार्थे लोट्प्रत्ययः। अत्र यदि पश्यसीत्यनेन वस्तुतो विरोध एव नास्ति। विरोधप्रतीतिस्तु वस्तुनोऽतिसूक्ष्मत्वात्तव भ्रान्तिकृतैवेति दर्शयति। अतएव परिहारे मम न भारोस्तीत्याह अप्रयत्नादनायासेनेत्यर्थः। विरोधे प्रतिबन्धके परिहृते वाक्यं त्वां बोधयिष्यतीत्याह—वाक्यमिति। नन्वेवं सति वेदस्य सापेक्षत्वमित्याशङ्क्य प्रतिबन्धनिरासानन्तरं पूर्वमेव वाक्यजन्यज्ञानस्य विषयप्रतिष्ठितत्वमात्रं भवतीत्याह—करार्पितबिल्वेति। स्पष्टं विषयप्रतिष्ठितं यथा भवति तथेत्यर्थः॥ ६४॥

एवं गुरुणादत्तावसरः शिष्यो वाक्यार्थस्य प्रधानत्वादव्यवहितानन्तर्यतया बुद्धिस्थत्वाच्चादौ वाक्यार्थविषये विरोधमुद्घाटयतीत्यत्राह—

**अत्राऽऽह सद्वयमहं मम रूपमीक्षे**
**तच्चाद्वयं विगणयामि परोक्षमेव।**
**पारोक्ष्यसद्वयविभागयुजोर्विरोधा-**
**द्वाक्यार्थबोधमतिदुर्लभमेव मन्ये॥ ६५॥**

अत्राहेति। अत्रैवं गुरुणा चोदयितव्यमित्युक्ते सति वाक्यार्थे विषये शिष्य आह किमाहेत्यत आह—सद्वयमिति। त्वं पदार्थस्य मम स्वरूपं सद्वयं देहेन्द्रियकर्तृत्वादिद्वयसहितमीक्षे पश्यामि। अनेन स्वस्यापरोक्षत्वमनुभूय दर्शितं भवति तत्पदप्रतिपाद्यमद्वयं सर्वस्यापि कार्यस्य तन्मयत्वादद्वितीयं परोक्षं व्यवहितमेव च विगणयामीत्यनेनतस्यानुभवतोपि परोक्षत्वमुक्तं ततः किमित्यत आह—पारोक्ष्यसद्वयेति। परोक्ष्यापरोक्ष्यसद्वयत्वाद्वयत्वलक्षणविभागयुजोर्विभागप्रयोजकविरुद्धधर्मद्वयवतोर्वाक्यार्थबोधनमैक्यबोधनमिदमत्यन्तदुर्लभमेव मन्य इत्यर्थः॥ ६५॥

नन्वस्तु विरुद्धधर्माख्यो विभागः स चोपदिष्टवाक्यार्थप्रमित्या निवर्त्तयिष्यते तत्राह—

यद्वस्तु सद्वयतयाऽवगतं स्वशब्दा-
त्तस्याद्वयत्वमवगन्तुमशक्यमेव।
यद्वस्तु च व्यवहितं प्रतिपादितं त-
त्प्रत्यक्तया न तु जनः प्रतिपत्तुमीशः॥ ९६॥

यद्वस्त्विति। त्वं पदार्थभूतं यद्वस्तु स्वशब्दात्स्वस्य वाचकत्वमहमादिशब्दात्सद्वयतया देहेन्द्रियादिना कर्तृत्वादिना च विशिष्टतयावगतं तस्याद्वयत्वं ब्रह्मात्मत्वमवगन्तुमशक्यमेव एवमयं जनस्तत्पदार्थभूतमपि यद्वस्तु तद्ब्रह्मादिशब्दाद्व्यवहितं परोक्षं सत् प्रतिपादितमुपस्थितं तत्परोक्षं ब्रह्माख्यवस्तुप्रत्यक्तयाऽपरोक्षानुभवात्मकजीवाभेदेन प्रतिपत्तुं नेश इत्यर्थः। तथा च यदि वाक्यं ब्रह्मात्मत्वमवबोधयेत्तदा तद्बोधनेन कल्पितविरुद्धधर्मप्रतिभासो निवर्त्येतापि बोध एव न संभवति पदार्थयोर्विरुद्धधर्मप्रतिभासादिति भावः॥ ९६॥

ननु चक्षुरादिकं रजताद्याकारेण गृह्यमाणे शुक्तिशकलादौ यथा शुक्त्यादिज्ञानमुत्पादयति एवं वाक्यमपि प्रमाणत्वाविशेषाद्विरुद्धधर्मप्रतिभासेपि स्वार्थं किमिति न बोधयेदिति चेत्तत्र किं तत्त्वमादिवाक्यं वाच्यार्थयोस्तादात्म्यलक्षणमभेदमवबोधयति उत लक्ष्ययोरखण्डात्मकम्। आद्येपि शब्दः स्वार्थबोधने योग्यतां नापेक्षते उत अपेक्षते नाद्य इत्याह—

आकाङ्क्षितं भवति पूरणशक्तियुक्तं
यत्सन्निधौ पठितमस्य हि संगतिः स्यात्।
नाऽऽकाङ्क्षयैव न तु सन्निधिनैव वा स्यात्
सम्बन्धिता हि विरहय्य पदार्थशक्तिम्॥९७॥

आकाङ्क्षितमिति । येन विना यस्याभिधानमपर्यवसन्नं तत्तस्याकाङ्क्षा तद्युक्तमाकाङ्क्षितं पूरणशक्तियुक्तं पदार्थान्तरसम्बन्धयोग्यताशक्तियुक्तार्थाभिधायकं संनिधौ पठितमव्यवधानेनाभिहितम् आसत्तियुक्तं यत्पदमस्य हि अस्यैव संगतिः वाक्यभावेनान्वयः । आकाङ्क्षायोग्यतासत्तियुक्तमेव पदं तादृशेन पदेनान्वीयते । एवकारव्यावर्त्यमाह—नाऽऽकाङ्क्षयैवेति—पदानामाकाङ्क्षामात्रेण सम्बन्धितान्वयो न भवति न वा सन्निधिमात्रेण । वाशब्दात् समुदिताभ्यामप्याभ्यां पदार्थशक्तिविरहय्य योग्यतां विना नान्वयबोधः संभवतीत्यर्थः । आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बकस्यैव वाक्यत्वाद्वाक्यभावस्यार्थज्ञाने कारणत्वाद्योग्यतामन्तरेण पदानामन्वयबोध एव न भवति । कुतस्ततो वाक्यार्थप्रमितिरत एव न वह्निना सिञ्चतीत्यादौ वाक्यार्थप्रमितिः । चक्षुषस्तु न योग्यता बोधापेक्षाऽतो दृष्टान्तो विषमः । चक्षुषोप्यदुष्टस्यैव शुक्तितत्त्वज्ञानदर्शनाच्चेति भावः ॥ ९७ ॥

द्वितीयेपि किं प्रकृते पदार्थयोग्यतापेक्ष्यते उत शब्दयोग्यतैव । आद्ये त्वन्वयबोधो भवेद्यदि सा भवेत्सैव तत्त्वमादिवाक्ये मृग्येत्याह—

योग्यत्वमत्र न च तत्त्वमसीति वाक्ये
सम्बन्धितां प्रति पदार्थयुगस्य भाति ।
पारोक्ष्यसद्वयविभागविरोधहेतो-
र्गौरश्व इत्यभिहिते तु यथैव वाक्ये ॥ ९८ ॥

योग्यत्वमत्रेति । अत्र तत्त्वमसीति वाक्ये पदार्थयुगस्यान्योन्यसम्बन्धितां प्रति योग्यत्वं न चास्ति नैवास्तीति सम्बन्धः । तत्र हेतुमाह पारोक्ष्येति पारोक्ष्यापरोक्षसद्वयत्वाद्वयत्वाख्यौ यौ विभागौ विरुद्धधर्मौ तयोर्विरोधाद्धेतोरेकाश्रयवृत्तित्वानुपपत्तेरित्यर्थः । ननु शब्दयोग्यतैवापेक्ष्यते सा च तत्त्वमादिवाक्येपि सुलभेत्याशङ्क्य सत्यामपि

तस्यां वह्निना सिञ्चतीत्यादावर्थयोग्यतां विनार्थबोधाभावादर्थयोग्यताप्यपेक्षित इत्यभिप्रेत्य । ननु समानविभक्त्यन्तलक्षणशब्दयोग्यतायां सत्यामर्थयोग्यतापि भवत्येव, नीलमुत्पलमित्यादौ तथा दर्शनादित्याशङ्क्य व्यभिचारान्नेत्याह—गौरश्वइति । यथा गौरश्वः पुरुषो हस्ती मर्कट इत्युक्ते वाक्ये समानविभक्त्यन्तलक्षणशब्दयोग्यतायां सत्यामपि यथा नार्थयोग्यता गवादीनां परस्परात्मतया बाधितत्वात्तथा तत्त्वमादिवाक्येपि न पदार्थयोग्यतेत्यर्थः ॥ ९८ ॥

ननु लक्षणया तत्त्वमादिवाक्यमखण्डार्थप्रमितिं जनयति विरुद्धांशपरित्यागात् । न चैकपदलक्षणायामखण्डार्थत्वक्षतिः पदद्वयलक्षणा चाप्रसिद्धेति वाच्यम् । सोऽयं देवदत्तेत्यादौ पदद्वयलक्षणा दर्शनादित्याशङ्क्य लोके पदद्वयलक्षणामङ्गीकृत्य वेदे लक्षणैवानुपपन्नेति दूषयति—

सोऽयंगिरोरिव न लक्षणयापि वृत्ति-
र्मानान्तराधिगतिहीनतयाऽऽत्मनि स्यात् ।
मानान्तराधिगतगोचर एव दृष्टः
शब्दप्रयोग इह लाक्षणिकस्तु लोके ॥ ९९ ॥

सोऽयमिति । यथावाक्यस्थतदिदंशब्दयोर्लक्षणया देवदत्तादि, स्वरूपमात्रे वृत्तिः । तथा तत्त्वं पदयोर्नात्मनि वृत्तिः कुतस्तत्राह—मानान्तरेति । आत्मनो मानान्तराविषयत्वादित्यर्थः । मानान्तराविषयत्वेऽप्यात्मनि किमिति लक्षणा न स्यात्तत्राह—मानान्तरेति । इह लोके वाच्यार्थसम्बन्धित्वेन मानान्तरजन्यज्ञानविषय एव तीरादौ लाक्षणिकशब्दप्रयोगो गङ्गायां घोष इत्येवमादिर्दृष्ट इत्यर्थः । लाक्षणिकस्त्विति । तु शब्देन मुख्यार्थस्य मानान्तरगम्यत्वनियमं वारयति लिङादिवाच्यकार्येऽदर्शनादिति ॥ ९९ ॥

प्रकारद्वयेपि वाक्यार्थबोधनिरसनमुपसंहरति—

तस्मादखण्डविषया न वचःप्रवृत्तिः
संसर्गबोधनमपास्तमयोग्यभावात् ।
एवं न वाक्यगतशब्दसमन्वयोऽपि
दूरे प्रमान्तरविरोधनिरासांसिद्धिः ॥ १०० ॥

तस्मादखण्डविषयेति । यस्मादात्मनि न लक्षणा तस्मादखण्डविषया एकरसब्रह्मविषया पदार्थयोरयोग्यभावाद्वाक्यस्य तादात्म्यलक्षण-संसर्गबोधनमप्यपास्तं न सम्भवतीत्यर्थः । एवं वार्थैक्याप्रमित्य-भावमुपपाद्य तत्फले विरोधप्रतीतिनिरासाभावमुपसंहरति—एवमिति । उक्तं प्रकारेणार्थयोग्यताविरहाल्लक्षणाभावाच्चेत्यर्थः । योग्यताविरहा-त्पदानामन्वय एव नास्ति कुतः पुनस्तज्जन्या प्रमितिः कुतस्तरां ततो विरोधप्रतीतिनिरास इत्यभिप्रेत्याह— दूर इति । प्रमान्तरं स्वाभाविक-सद्वितीयत्वादिप्रतीतिः ॥ १०० ॥

एवं सिद्धे ब्रह्मणि वेदान्तानां मानाभावमङ्गीकृत्य योग्यता-भावाल्लक्षणाभावाच्च प्रत्यक्ब्रह्मैक्यबोधो न संभवतीत्युक्तं सम्प्रति-वेदान्तानां ब्रह्मणि प्रामाण्यमेव न सम्भवति इति वक्तुं किं ब्रह्ममाना-न्तरगम्यं न भवति उत भवति आद्योऽनुपपन्न इत्याह—

किं च प्रमान्तरमपेक्ष्य गिरः प्रवृत्तिः
सिद्धेषु वस्तुषु जगत्युपलब्धपूर्वा ।
ब्रह्मात्मवस्तुनि तथा वचसः प्रवृत्ति-
र्युक्तात्मनस्तु फलवत्परिनिष्ठितत्वात् ॥ १०१ ॥

किं च प्रमान्तरमिति । किंच जगति सिद्धेषु परिनिष्पन्नेषु वस्तुषु प्रमान्तरं प्रमाणान्तरमपेक्ष्य गिरः प्रवृत्तिरुपलब्धपूर्वा पूर्वमुपलब्धेति

सम्बन्धः मानान्तरविषयत्वयोग्य एव सिद्धशब्दस्य प्रवृत्तिर्दृष्टेत्यर्थः । ततः किं तत्राह—ब्रह्मात्मवस्तुनीति । यथा लोके नद्यस्तीरे पञ्चफलानीत्यादिसिद्धबोधि वाक्यं मानान्तरमपेक्ष्यैव प्रवर्त्तते तथैव ब्रह्मात्मवस्तुन्यपि वचसः प्रवृत्तिर्युक्ता कुत आत्मनः फलवत्परिनिष्ठितत्वात् सिद्धत्वादित्यर्थः ॥ १०१ ॥

ननु लोकेपि वाक्यस्य न स्वार्थप्रमितौ जनयितव्यायां मानान्तरापेक्षा अनुपयोगात्, किन्तूत्पन्नायां प्रमितौ तद्विषयाभावशङ्कानिराकरणायेत्याशङ्क्य फलवदित्युक्तं दृष्टान्तमुपपादयन् दूषयति—

**नद्यास्तीरे फलमितिगिरः सिद्धवस्तुप्रवृत्ते-**
**र्दृष्टा स्वार्थप्रमितिजनने स्वान्यमानव्यपेक्षा ।**
**तद्वद् ब्रह्मण्यपि तु वचसो वैदिकस्याभ्युपेया**
**तस्मादस्मिन्न खलु घटते मानभावः श्रुतीनाम् ॥१०२॥**

नद्या इति । सिद्धवस्तुप्रवृत्तेर्हेतोर्नद्यास्तीरे फलमिति गिरः स्वार्थप्रमितिजनन एव स्वस्माच्छब्दादन्यस्मिन्मानव्यपेक्षा दृष्टा न तु स्वविषयाभावशङ्कानिवृत्तये शङ्काया निश्चयनिवर्त्यत्वेन निश्चयरूपाया वाक्यजन्यप्रमितेरेव तदुपपत्तेः । यदि वाक्यात्प्रमितेपि विषयाभावशङ्कानिवृत्तये मानान्तरमर्थ्यतेति ब्रूषे तर्हि ब्रह्मण्यप्यभावशङ्कानिवृत्तये मानान्तरापेक्षास्त्वित्याह—तद्वदिति । तु शब्दोप्यर्थः तद्वदपि ब्रह्मण्यपि वैदिकस्य वचसः स्वान्यमानव्यपेक्षा युक्तेति सम्बन्धः । प्रथमपक्षनिराकरणमुपसंहरति । तस्मादिति । यस्माद्ब्रह्मणि न मानान्तरं तस्मादित्यर्थः । न द्वितीयः—वेदान्तप्रतिपाद्ये ब्रह्मणि मानान्तरानुपलब्धेरिति ॥ १०२ ॥

ननु लोकेपि न वाक्यार्थे मानान्तरापेक्षा वाक्यार्थस्य सर्वत्रापूर्वत्वात्सिद्धबोधिवाक्यमपि न स्वार्थप्रमितौ तदभावशङ्कानिवृत्त-

ये वा मानान्तरमपेक्षते किन्तु वाक्यस्य वक्तृदोषप्रवृत्ताप्रामाण्य-शङ्कानिरासाय ब्रह्मत्वपौरुषेयवेदान्तलक्ष्यमखण्डं सद्वाक्यार्थ एवा-तस्तल्लक्षकवेदान्तानां न मानान्तरापेक्षा। न च वाच्यार्थसम्बन्धित्वेन मानान्तराधिगतिं विना लक्षणापि न संभवतीति वाच्यम्। किं वाच्यार्थसम्बन्धित्वेन मानान्तराधिगतिर्लक्षणासहकारित्वेनापेक्ष्यते, उत लक्ष्यपदार्थस्य मुग्धतापरिहाराय। नाद्यः वाच्यार्थसम्बन्ध-मात्रस्यैव तदपेक्षितत्वात्। न द्वितीयः ब्रह्मणः स्वयंप्रकाशस्य मानान्तर-धिगतिं विनापि मुग्धतापरिहारादतः कथमपि वेदान्तानां मानान्त-रापेक्षाभावाद्ब्रह्मणि कथमप्रामाण्यमित्याशङ्क्य भवेदेतदेवं वाक्यस्य यद्यखण्डार्थत्वं स्यात्तदेव न संभवति तस्य लोकवेदयोरप्रसिद्धत्वात्। न च सोयमित्यादौ तत्प्रसिद्धिरिति वाच्यम्। तत्रापि तदसिद्धे-रित्याह—

**नाखण्डवस्तुविषया वचसः प्रवृत्ति-**
**र्लोकेऽपि दृष्टिपथमापतिता कदाचित्।**
**नानापदार्थघटनाविषयत्वहेतो**
**र्दूरेत्यता श्रुतिशिरोवचनेषु तस्याः॥ १०३॥**

नाखण्डेति। एकप्रातिपदिकार्थमात्रविषयेत्यर्थः। लोके सोयमि-त्यादिलौकिकवाक्ये अपि शब्दादन्यत्र वेदेपीत्यर्थः। अथवा विवक्षा-धीनपौरुषयवाक्येपि तन्न दृष्टं किमु वक्तव्यमपौरुषेयेवेद इत्यर्थः। दृष्टिपथमापतिता ज्ञानविषयत्वं प्राप्ता। ननु सोऽयमित्यादौ प्रकारा-न्तरेणान्वयबोधासंभवादखण्डार्थत्वं वक्तव्यमित्याशङ्क्यासंभवोऽ-सिद्धः तदेतत्कालविशिष्टयोरभेदोपपत्तेरित्यभिप्रेत्य वाक्यार्थलक्षणमाह नानापदार्थघटनाविषयत्वहेतोरिति। घटना संसर्गः वाक्यस्य नानापदार्थ-संसर्गविषयत्वादेकपदार्थमात्रविषयत्वमनुपपन्नमित्यर्थः। लोकेऽ-भावेपि वेदे तत्किं न स्या त्तत्राह—दूर इति। तस्या अखण्डतायाः

श्रुतिशिरोवचनेष्वखण्डार्थाभिधेयता। दूरेत्यता दूरेगतता दूरेगतिः दूरविनिर्मुक्तेत्यर्थः। वेदस्य लोकनिर्णीतार्थकत्वात्तदभावे वेदे तत्कथनमपि न भवतीति भावः ॥ १०३ ॥

ननु वेदस्य न सर्वात्मना लोकसिद्धार्थप्रतिपादकत्वं तथात्वे पराभिमतस्य नियोगस्यापि शब्दार्थत्वाभावप्रसङ्गादित्याशङ्क्य न केवलं वाक्यस्य लोकेऽखण्डार्थत्वादर्शनादत्र तं निराकुर्मः किन्तु युक्तिबाधितत्वादपीति वक्तुं शब्दस्य स्वार्थबोधनप्रकारं दर्शयति—

आदाय मुख्यगुणलाक्षणिकप्रवृत्ती-
रर्थं समर्पयति शब्द इति प्रसिद्धम् ।
आस्वेष नान्यतमयाऽपि वदत्यखण्डम्
शब्दान्तरात्तविषयादधिकार्थवृत्तेः ॥ १०४ ॥

आदायेति । लोके हि माणवकमध्यापयाग्निर्माणवको गङ्गायां घोष इत्येवमादिरूपशब्दः मुख्यगुणलाक्षणिकप्रवृत्तीर्मुख्यामभिधानरूपां गौणीं लक्षणावृत्तिं वा आदाय स्वार्थं समर्पयति बोधयतीति प्रसिद्धमिति सम्बन्धः। अतो वेदान्तोऽप्यासु मध्येऽन्यतमां वृत्तिमादायैव बोधयेदित्यर्थः। किमतो यद्येवं तत्राह— आस्विति। एष वेदान्तः आसु वृत्तिषु मध्येऽन्यतमयाप्येकयापि वृत्त्याऽखण्डमर्थं न वदेत्तत्र हेतुः शब्दान्तरेति । तत्त्वमादिवाक्ये प्रयुक्ततत्त्वंशब्दयोर्मध्येऽन्यतरशब्दस्यान्यतरशब्दप्रतिपादितादर्थादधिकार्थवृत्तित्वप्रसङ्गादित्यर्थः। पदानामेकपदार्थमात्रवृत्तौ ह्यखण्डार्थत्वं न च सा सम्भवति। शब्दस्य हि मुख्यवृत्त्यार्थबोधकत्वे एकार्थवृत्तित्वं पदानां स्पष्टमनुपपन्नम्। गौणलाक्षणिकवृत्तिस्वीकारेऽप्यन्यतरपदवाच्यार्थाल्लक्ष्याद्वाऽधिकयोर्लक्ष्यमाणगुणान्यतरपदवाच्यार्थयोः सत्त्वात् न वाक्यस्यैकपदार्थमात्रवृत्तित्वमिति भावः ॥ १०४ ॥

नन्वस्तु मुख्यगुणवृत्त्या बोधकत्वे त्वदुक्तो दोषः लक्षणापक्षे तु न दोषः, पदद्वयेपि लक्षणाङ्गीकारात्, न च पदद्वयलक्षणासंप्रतिपन्नेति वाच्यम्। विषं भुङ्क्ष्वेत्यादिलौकिकवाक्येपि तत्सिद्धेरिति चेत्तत्र किं तत्त्वंपदद्वयमपि विषंभुङ्क्ष्वेति पदद्वयवदन्यमन्यमर्थं लक्षयति उतैकमेव—नाद्यः पूर्वोक्तदोषानतिवृत्तेरित्यभिप्रेत्य द्वितीयं दूषयति—

आधिक्यमुत्सृजति शब्दगणो निजेऽर्थे
शब्दान्तराप्तविषयादिति मन्यमानाः।
वाक्यत्वमेव पदजातगतं विहन्यु-
र्न ह्यस्ति हस्तकरशब्दगतं तदेषाम् ॥ १०५ ॥

आधिक्यमिति। शब्दगणोऽनेकपदात्मकं वाक्यं निजेऽर्थे वाक्यार्थे शब्दान्तराप्तविषयात्स्वावयवभूतपदान्तरप्रतिपादितादर्थादाधिक्यमुत्सृजतीति मन्यमाना वादिनः पदजातगतं वाक्यत्वमेव विहन्युः परित्यजेयुः। ननु किमिति विहन्युः एकार्थत्वेपि पदानामाकाङ्क्षादिमत्पदकदम्बकत्वेन वाक्यत्वोपपत्तेरित्याशङ्क्यार्थभेदाभावे पदानां पर्यायत्वादाकाङ्क्षादेरभावाद्वाक्यत्वानुपपत्तिः वाक्यवैयर्थ्यं चेत्यभिप्रेत्य प्रसिद्धं दृष्टान्तमाह— नह्यस्तीति। एषां वादिनां पर्यायत्वादाकाङ्क्षाहस्तकरपाण्यादिसमुदितशब्दगतं तद्वाक्यत्वं नास्ति हीति सम्बन्धः ॥ १०५ ॥

ननु पदानां लक्षणया एकार्थत्वेऽपि न पर्यायत्वं वाच्यार्थस्य भिन्नत्वान्नापि वाक्यवैयर्थ्यं तस्य पदादनतिरिक्तत्वेपि प्रमितिजनकत्वेनार्थवत्त्वात्पदस्य चाप्रमाणस्य तदनुपपत्तेरित्याशङ्क्य वेदान्तानां ब्रह्मविषयप्रमितिजनकत्वाङ्गीकारेऽपसिद्धान्तप्रसङ्ग इत्याह—

किञ्च स्वयंप्रभमलुप्तचिदेकरूपं
सर्वं प्रमाणविषयाद्बहिरभ्युपेत्य।

**आत्मानमात्मनि च शास्त्रमुदाहरन्तः**
**सिद्धान्तमभ्युपगतं परिपीडयन्ति ॥ १०६ ॥**

किञ्च स्वयंप्रभमिति। स्वयंप्रकाशमित्यर्थः। तत्र हेतुः अलुप्तचिदेकरूपामिति। अनुदितानस्तमितचैतन्यमात्रस्वरूपमित्यर्थः। अतो न ब्रह्मस्वरूपसिद्धौ मानान्तरापेक्षेत्याह—सर्वप्रमाणेति। बहिरन्यदित्यर्थः। भवदभ्युपगमोपि तथैवेत्याह—अभ्युपेत्येति। ततः किमित्यत आह—आत्मनि चेति। अविषये आत्मनि शास्त्रं वेदान्तं प्रमाणत्वेनोदाहरन्तो वेदान्तिनोभ्युपगतमात्मनोऽविषयत्वलक्षणं सिद्धान्तं परिपीडयन्ति। ब्रह्मविषयप्रमितिं जनयन्नेव हि वेदान्तस्तत्र प्रमाणं भवति। तथा च ब्रह्मणो विषयत्वमभ्युपगतं गतमित्यर्थः ॥ १०६ ॥

न केवलमपसिद्धान्तः प्रमाणप्रवृत्तिवैफल्यं चेत्याह—

**सर्वत्र वस्तुषु जडेष्वजडप्रकाशं**
**कुर्वत्प्रमाणमिति सम्प्रतिपन्नमेतत् ।**
**ब्रह्मात्मवस्त्वजडबोधवपुः कुतोऽस्मि-**
**न्वेदान्तवाक्यजनिताऽजडसंविदन्या ॥ १०७ ॥**

सर्वत्रेति। अत्र यद्यपि नैयायिकादीनां प्रमाणफलं स्वयंप्रकाशमिति न सम्प्रतिपत्तिस्तथापि तेषामपि विषयप्रकाशसत्त्वात्तथाभ्युपेयमिति भावः। अस्तु तर्हि ब्रह्मात्मविषया तथारूपा संविदित्यत्राह—ब्रह्मात्मवस्त्वजडबोधवपुरिति। अभ्युगतमितिशेषः। एतच्च तद्विषयज्ञानासंभवे हेतुः। अस्तु स्वयंप्रकाशं ज्ञानं प्रमाणफलं ब्रह्म च स्वयंप्रकाशं ततः किं तत्राह—कुतोऽस्मिन्निति। आत्मनि विषये वेदान्तवाक्यजन्या स्वस्मादन्याऽजडसंवित्कुतः सम्भवति न कुतोपीत्यर्थः। प्रमाणं हि नादृष्टार्थं प्रमितिमुत्पादयति किन्तु स्वविषयप्रकाशार्थं स च प्रकाशो ब्रह्मणः

स्वमहिम्नैव सिद्ध इति तद्विषयप्रकाशो व्यर्थः ब्रह्मणो दृश्यत्वापाताच्चेत्यर्थः ॥ १०७ ॥

ननु न कुत्रापि मानस्याजडप्रकाशहेतुत्वमजडप्रकाशस्यात्मरूपतया नित्यत्वादात्मातिरिक्तता जडप्रकाशे प्रमाणाभावात्किन्तु वृत्तिप्रकाशहेतुत्वमेव तच्च वेदान्तानां स्वप्रकाशे ब्रह्मणि सम्भवति तस्यास्माभिरपि वृत्तिवेद्यत्वाङ्गीकारादित्याशङ्क्यात्रापि प्रयोजनाभावस्तदवस्थ इत्यभिप्रेत्य वेदान्तानां परस्परान्वय एव न सिद्ध्येत् गामानयेत्यादिवाक्ये गवादिपदानां क्रियापेक्षितकर्मकरणकर्तृसमर्पकतयान्यदर्शनात्तथैव वक्तव्यश्च समप्रधानानामन्वयायोगात्क्रियाया एव च साध्यतया प्राधान्यात् । न चात्र तत्त्वमादिवाक्येषु क्रियाऽस्ति । यद्यप्यस्यस्मीति क्रियापदं श्रूयते तदपि न भवन्मते क्रियापरमखण्डार्थत्वभङ्गप्रसङ्गात्तस्माद्वेदान्तस्य वाक्यत्वाभावान्न वृत्तिलक्षणप्रमितिजनकत्वमपीत्यभिप्रेत्याह —

किं च क्रियापदमपेक्ष्य पदानि वाक्य-
भावेन सम्यगिह संगतिमाप्नुवन्ति ।
नात्र क्रियापदमपेक्षितमामनन्ति
वाक्यं कुतो भवति वेदशिरस्तदानीम् ॥१०८॥

किञ्च क्रियापदमिति । अत्र तत्त्वमादिवाक्येऽपेक्षितमपेक्षितक्रियारूपार्थम् ॥ १०८ ॥

ननु माभूद् वाक्यभावः पदानि सत्येव स्वार्थमवबोधयन्त्विन्याशङ्क्य किं लोकेप्येवमुत वेदे एव नाद्य इत्याह—

नापूर्वमर्थमुपलम्भयितुं पदानां
सामर्थ्यमस्ति परिहृत्य तु वाक्यभावम् ।

स्वार्थस्मृतिं हि जनयन्ति पदानि लोके
विज्ञातसंगतितया न तु कार्यमन्यत् ॥ १०६ ॥

नापूर्वमिति । मानान्तरेण ज्ञातमित्यर्थः । उपलम्भयितुं बोधयितुं पदानां पदत्वेनापूर्वार्थप्रत्यायकत्वाभावे हेतुमाह—स्वार्थस्मृतिमिति । हि शब्दो हेतौ यस्माल्लोके पदानि विज्ञातसंगतिकतया स्वार्थेन गृहीत-सम्बन्धकतया स्वार्थस्मृतिमेव जनयन्ति न त्वन्यत्कार्यं तस्मान्ना-पूर्वमिति सम्बन्धः । अथवा पदानां बोधकत्वाभावे किं वैयर्थ्यमेव नेत्याह – स्वार्थस्मृतिमिति । तर्हि वाक्यार्थमपि स्मारयन्तु न सम्बन्धा-वगमाभावादित्याह—विज्ञात संगतितयेति । अयम्भावः । देवदत्त दण्डेन गामा-नयेति वाक्ये हि देवदत्त कर्तृकदण्डकरणकगोकर्मकानयनं प्रतीयते । न च तादृशानयनं मानान्तरेण ज्ञातुं शक्यते तस्य वाक्यश्रवणकाले-ऽसत्वेन प्रत्यक्षादिना ग्रहीतुमशक्यत्वान्नापि प्रत्येकं पदैरेव ज्ञातुं शक्यते । तेषां पदार्थमात्रे विज्ञातसङ्गतिकतया स्वार्थमात्रस्मारकत्वा-त्तस्य पूर्वमनुपस्थिततया तत्र सम्बन्धग्रहणाभावात्सम्बन्धग्रहणं विना पदस्य स्वार्थप्रतिपादकत्वायोगाच्च, पदान्तरवैयर्थ्याच्च । तस्माल्लोके वाक्यभावेनैव पदानि वाक्यार्थमवबोधयन्तीति वक्तव्य-मिति ॥ १०६ ॥

द्वितीयं दूषयति—

हित्वा न वाक्यपदते प्रतिपत्तिहेतु-
र्वेदो भवेदिति कथंचन वक्तुमीशः ।
कश्चित्कदाचिदपि तत्र कुतः श्रुतीनां
प्रामाण्यमात्मनि भवेदिति वर्णयन्ति ॥ ११० ॥

हित्वेति । वाक्येतिभावप्रधानो निर्देशः वाक्यता पदतेत्यर्थः ।

पदत्वं चात्र महावाक्यावयवावान्तरवाक्यत्वं न तु वर्णसमुदायात्मकपदत्वं तस्यात्रानुपस्थितेः। वाक्यभावस्यैवाक्षिप्यमाणत्वाद्यथा पदभावं विना वर्णानां न बोधकत्वं तथा वाक्यभावं विनेति दृष्टान्तार्थं वा पदग्रहणं वेदस्यापि वाक्यभावेनैवार्थबोधकत्वं तदर्थापूर्वत्वस्यात्रापि तुल्यत्वादिति भावः। ननु यत्र मुख्यार्थयोः संसर्गो वाक्यार्थः तत्रैवं भवतु यत्र तु वेदो लक्षणया स्वार्थमवबोधयति तत्र पदं सदेवापूर्वार्थमवगमयिष्यति यथार्थवादपदानि प्राशस्त्यमिति तत्राह—कथञ्चनेति। मुख्यया वृत्त्या लक्षणया वेत्यर्थः। कथञ्चन प्रतिपत्तिहेतुरिति सम्बन्धः। तत्र हि सहश्रुतनिखिलपदानां सम्भूयकारित्वव्युत्पत्त्यनुरोधेन विधिनान्विताभिधानार्थं पदस्याप्यपूर्वप्रशंसापरत्वं कल्प्यते, न चात्र कल्पकं किञ्चिदस्तीति भावः। ननु वेदस्य वाक्यत्वाभावेपि वेदाभिव्यक्तस्फोट एवार्थमवगमयिष्यति तत्राह—तनेति। एवं वाक्यत्वाभावे सतीत्यर्थः। कुतो वर्णनीयं न कुतोपि वर्णयितुं शक्यत इत्यर्थः। न तावत् स्फोटो नाम वर्णतत्समुदायपदतत्समुदायवाक्यव्यतिरेकेणानुभूयते। नाप्यर्थप्रतीत्यनुपपत्या कल्प्यते पदवाक्याभ्यामेव तदुपपत्तेः। न च क्षणिकाभिव्यक्तिविशिष्टवर्णादीनां समूहाभावात्पदत्वाद्यनुपपत्त्या वाचकत्वमनुपपन्नमिति वाच्यम्। एकबुद्धिविषयतया बौद्धसमूहोपपत्तेः। स्फोटवादिनाप्ययं समूहोऽङ्गीकर्त्तव्य एव समूहीभूतवर्णाविभक्तस्यैव स्फोटस्यार्थप्रत्यायकत्वादेकैकस्माद्वर्णात्पदाद्वा स्फोटाभिव्यक्तौ वर्णान्तरपदान्तरवैयर्थ्यप्रसङ्गात्। नन्वभ्यासानुरोधेन क्रमेण रत्नतत्त्वाभिव्यक्तिवत्तत्तद्वर्णैः पदैर्वा क्रमेण स्फोटोभिव्यज्यत इति चेन्न निरवयवस्फोटस्य क्रमेणाभिव्यक्तिकल्पनानुपपत्तेः विषयविशेषाभावात्प्रथमचरमाभिव्यक्त्योरविशेषप्रसङ्गात्। किञ्च वर्णपदादीनां समूहमनपेक्ष्य स्फोटाभिव्यक्तौ विलम्बेनोच्चारणस्थलेपि स्फोटाभिव्यक्तिप्रसङ्गात्। नन्वविलम्बेनोच्चारणमप्यपेक्ष्यत इति चेत्, न तावदिदं सेतुदर्शनवददृष्टार्थं सत् स्फोटमभि-

व्यञ्जयति। एकज्ञानविषयतायोग्यतासम्पादनं तु भविष्यति। ननु वर्णानां वाचकत्वे राजा जारेतिप्रयोगभेदेऽर्थभेदो न स्यादुभयत्रापि वर्णस्यैकत्वादिति चेन्न। विलक्षणानुपूर्वीविशिष्टेषु वर्णेषु तदुपपत्तेः। क्रमविशिष्टेष्वेव वर्णेषु वाचकत्वशक्तिकल्पनात्। एतच्च त्वयाप्यभ्युपेयम् अन्यथा— राजाजारेत्यत्र क्रमभेदं विना वर्णविशेषाभावात्तदभिव्यक्तस्फोटेपि विशेषाभावादर्थप्रत्ययविशेषानुपपत्तेः। तस्मान्न स्फोटः प्रामाणिक इति॥ ११०॥

ननु नायमस्ति नियमः क्रियानिमित्त एव पदानामन्वय इति प्रचुरप्रकाशः सविता पृथुतरभारविनम्रकुसुमस्तबकविकासि वनमिति लोके वषट्कर्त्तुः प्रथमभक्ष इति वेदे मतभेदेनार्थवादानां च क्रियां विनापि पदानामन्वयदर्शनादिति चेदस्त्वेवं तथापि सकलमानान्तरागोचरे ब्रह्मणि व्युत्पत्त्यभावादत्यन्ताप्रसिद्धे तदयोगादव्युत्पन्नाः शब्दाः कथमात्मानमवगमयेयुः। अथैतद्दोषपरिजिहीर्षया ब्रह्मण्यपि मानान्तरं कल्पयसि तर्हि वेदान्तानामनुवादकत्वप्रसङ्ग इत्यभिप्रेत्याह—

**किं च प्रमान्तरमिहाभ्युपयन्प्रतीचि**
**वेदान्तवाक्यमनुवादकमभ्युपेयात्।**
**मानान्तरं यदि च नेच्छति शब्दशक्ते-**
**स्तत्र ग्रहः कथमिति प्रतिपादनीयम्॥ १११॥**

किञ्चेति। प्रमान्तरं प्रमाणान्तरमित्यर्थः। अभ्युपयन्नङ्गीकुर्वन्नित्यर्थः। तत्र ब्रह्मणि यदि मानान्तरं च नेच्छति शब्दशक्तेर्ग्रहः कथमिति प्रतिपादनीयमिति सम्बन्धः॥ १११॥

ननु पदवाच्यार्थ एव व्युत्पत्त्यपेक्षा न लक्ष्ये लक्ष्यं च ब्रह्म वाक्यार्थः, अतः कथं व्युत्पत्त्यभावेनाप्रामाण्यमित्याशङ्क्यैवमपि न ब्रह्मणि प्रामाण्यं सम्भवति, वेदान्तानामपि हि फलवदर्थपरत्वं वा-

च्यम् अन्यथा अध्ययनविधिव्यकोपप्रसङ्गात्फलं चेष्टानिष्टप्राप्तिपरिहारात्मकं ज्योतिष्टोमादि ब्रह्महत्यादि प्रवृत्तिनिवृत्तिभ्यां साधनीयम्। न च ब्रह्म तदन्यतरगोचरो भवति। तस्याहेयानुपादेयस्वरूपत्वात्ततश्च निष्प्रयोजनं ब्रह्मेति न तत्प्रमाणं वेदान्त इत्याह—

किंच प्रवृत्तिविनिवृत्तिविहीनवस्तु
तत्त्वप्रतीतिजननान्न च किंचिदस्ति।
पुंसः प्रयोजनमतोऽपि न तत्र मानं
वेदान्तवाक्यमिति युक्तिमदुच्यमानम्॥ ११२॥

किञ्च प्रवृत्तीति। प्रवृत्तिनिवृत्तिभ्यां विहीनं तदयोग्यं यद्वस्तुतत्त्वं ब्रह्म तद्विषयणी या प्रतीतिस्तज्जननात्प्रवृत्तिनिवृत्तिहीना तदजनिका या वस्तुतत्त्वप्रतीतिरिति वा। अतोपि निष्प्रयोजनवत्वादपीत्यर्थः। निष्प्रयोजनस्यापि क्रियाशेषार्थत्वेन प्रामाण्यमस्ति नचात्र तदद्वितीयब्रह्मणस्तदयोग्यत्वादित्येतदपि शब्दः सूचयति तत्र ब्रह्मणि। न च प्रामाण्यस्य प्रयोजनमनङ्गमुपेक्षाज्ञानस्यापि प्रामाण्यदर्शनादिति वाच्यम्। अन्यत्र नियमाभावेपि शब्दे तन्नियमादन्यथा अध्ययनविधिव्याकोपस्योक्तत्वात्प्रयोजनस्य तात्पर्यलिङ्गत्वाच्च॥ ११२॥

ननु यद्वस्तु स्वतोऽपुरुषार्थः तद्विषयवाक्यस्यैव स्वविषयप्रवृत्तिनिवृत्तिद्वारा फलपरत्वं वक्तव्यं ब्रह्म तु स्वत एव निरस्तनिखिलानर्थनिरतिशयानन्दरूपमिति कथं तद्बोधकवाक्यस्याप्रामाण्यमित्याशङ्क्यैवमपि ब्रह्मणः स्वप्रकाशस्याज्ञातत्वाभावादनधिगतार्थगन्तृत्वलक्षणप्रामाण्यानुपपत्तेरिति प्रमाणलक्षणकथनपूर्वकमाह—

अज्ञातमर्थमवबोधयतः प्रमायां
हेतुत्वमभ्युपगतं ननु वेदविद्भिः।

अज्ञातता च परमात्मनि दुर्निरूपा
विज्ञानमात्रवपुषीति न मानकृत्यम् ॥ ११३ ॥

अज्ञातमर्थमिति । प्रमायां हेतुत्वं प्रमाणत्वं न त्वनधिगतार्थगन्तृत्वं प्रमाणत्वमिति सर्वैं नाभ्युपगम्यते । प्रमाकरणं प्रमाणमित्यपि केषाञ्चिदङ्गीकारात्तत्राह—वेदविद्भिरिति । वार्तिककारप्रभृतिभिरित्यर्थः । ततः किमित्यत आह—अज्ञातता चेति । परमात्मनो ज्ञाततभावे हेतुमाह—विज्ञानमात्रवपुषीति । आत्मनः स्वयंप्रकाशज्ञानात्मकत्वान्न तत्राज्ञाततेत्यर्थः । अज्ञातत्वराहित्यसमर्थनफलमाह—इति न मानकृत्यमिति । इति शब्दो हेतौ यस्मादात्मनो नाज्ञातत्वं तस्मान्न मानकृत्यं न प्रामाण्यमित्यर्थः ॥ ११३ ॥

ननु विज्ञानस्वरूप एवाज्ञानं वक्तव्यमज्ञानस्वरूपस्य स्वत एव जडतया तत्राज्ञातत्वकल्पनायां प्रयोजनाभावादित्याशङ्क्याह—

बोधस्वभावकमबुद्धमनुष्णमुष्णं
शीतस्वभावकमशीतमितीदृशानि ।
कः श्रद्धीत पुरुषो वचनानि तस्मा-
द्ब्रह्माप्रबुद्धमिति वाक्यमयुक्तमाहुः ॥ ११४ ॥

बोधेति । अबुद्धमज्ञानविषयः बोधस्वभावस्याबुद्धत्वासंभवे दृष्टान्तमाह—अनुष्णमिति । यथा उष्णो वह्निरनुष्णः शीतं जलमशीतमितीदृशं वाक्यं विरुद्धार्थत्वात्कोपि न श्रद्धत्ते एवं स्वयं प्रकाशचैतन्यात्मा अज्ञात इति वचनं श्रद्धेयं न भवतीत्यर्थः । न हि जडेऽज्ञानं न सम्भवतीति चैतन्ये तत्कल्पनं युक्तिमन्न हि शार्वरे तमसि तमः कल्पनमनुचितमित्येतावता खरतरकिरणनिकरशालिनि दिनकरेऽपि तत्संभाव्यत इति भावः ॥ ११४ ॥

नन्वज्ञातस्य वस्तुनः प्रमेयत्वेऽज्ञानमपि प्रमेयं स्यात्, न च तत्संभवति, तस्याज्ञातताभावादज्ञानोपलक्षितस्य प्रमेयत्वे धारावाहिकोत्तरोत्तरबुद्धेरपि प्रामाण्यप्रसङ्गः, तस्य च प्रामाण्येऽनधिगतेति विशेषणं व्यर्थं, ततः प्रमाकरणत्वमेव प्रामाण्यमिति स्यात्तच्च ब्रह्मण्यपि वेदान्तानामखण्डितमित्याशङ्क्याज्ञानं न विषयविशेषणं न चोपलक्षणम्, किन्तुपाधिः, उपाधिर्नाम विशेष्याननुप्रवेशित्वे सति स्वसम्बन्धिनि स्वसमयमात्रव्यावृत्तिबुद्धिजनकः, तथा चाज्ञातस्यैव प्रमेयत्वं न तु प्रमाकरणत्वं प्रमाणत्वं प्रमात्वादेरनिरूपणादित्याह—

उपाध्यभावे न भवेदुपाधि-
स्तटस्थमज्ञानमुपाधिरिष्यते ।
प्रमाणबुद्धेर्न तदात्मवस्तुनि
स्वयंप्रकाशे न ततोऽत्र मानधीः ॥ ११५ ॥

उपाध्यभाव इति । श्रोत्रस्याकाशात्मत्वेपि कर्णशष्कुल्यभावे तदभावदर्शनात् पशुत्वाभावे इतिहरिशब्दवाच्यत्वाभावदर्शनाच्चोपाध्यभावे उपहितं न भवेदित्यर्थः । ततः किं तत्राह—तटस्थमिति । अज्ञानं तटस्थं विषयाननुप्रवेशि यथा भवति तथा प्रमाणप्रवृत्तौ उपाधिरिष्यत इत्यर्थः । यद्यपि ताटस्थ्यमुपलक्षणेऽप्यस्ति तथाप्युक्तं विशेषणं युक्तं तदुपाधेरेवोपलक्षणस्य स्वाभावकालेपि सम्बन्धिनि व्यावृत्तिबुद्धिजनकत्वादिति भावः । ततोपि किं तत्राह—न तदिति । स्वयं प्रकाशे आत्मनि तदुपाधिभूतमाज्ञानं न फलितमाह—न तत इति । तत उपाधेरज्ञानस्याभावादत्र ब्रह्मणि न मानजन्यधीरित्यर्थः ॥ ११५ ॥

किञ्च प्रमातृप्रमाणादिकमात्मव्यतिरिक्तमुताव्यतिरिक्तमाद्ये उभयथा व्याहतिं दूषणमाह—

**अद्वैतमात्मपदमाहुरनन्यमानं,**
**द्वैतं प्रमाणमिह च प्रतिपादयन्ति।**
**वाक्ये निजे पदविरोधमनीक्षमाणाः**
**पाण्डित्यमप्रतिहतं प्रतिलभ्य धीराः॥ ११६॥**

अद्वैतमात्मपदमिति। आत्मपदमात्मस्वरूपं न विद्यतेऽन्यन्मानं यस्य तदनन्यमानं स्वप्रकाशमित्यर्थः। निजे स्वकीये सजातीविजातीय स्वगतभेदरहितमात्मस्वरूपं प्रमातृप्रमाणादिकं च ततो भिन्नमात्मा चानन्यमानः तत्र च वेदान्ताः प्रमाणमिति वाक्ये पदयोरद्वैतद्वैत-पदयोरनन्यमानतद्विषयप्रमाणपदयोर्विरोधं विरुद्धार्थत्वमनीक्षमाणा अप श्यन्तः प्रतिपादयन्तीति सम्बन्धः किं प्रतिपादयन्तीति तत्राह—अद्वैत-मित्यादि। इतिशब्दः प्रकृतप्रकारपरामर्शी पाण्डित्यमित्याद्युपहासः धीराः 'कथमेवं सभायां विरुद्धार्थवचनं वक्तव्यमि'ति भयरहिताः॥ ११६॥

द्वितीयं पक्षमनूद्य बहुधा दूषणमाह—

**मातृप्रमाणमिति मेयविभागभिन्नं**
**ब्रह्मैव चेद्भवति तत्र च वर्णयामः।**
**कूटस्थतापहतिरेकरसत्वहानिः**
**शाक्यैश्च सन्धिरिति दूषणमन्यदत्र॥ ११७॥**

मातृप्रमाणेति। माता प्रमाता प्रमाणं वेदान्तादिप्रमितिर्ब्रह्मा-कारा घटाद्याकारा चान्तःकरणवृत्तिः प्रमेयं ब्रह्म घटादिश्च ते एव विभागाः तद्रूपेण भिन्नं चेत्सर्वस्यापि ब्रह्मपरिणामत्वात् ब्रह्मैव मात्रा-दिस्वरूपेण भिन्नं चेत्तत्र दूषणं वर्णयामः। दूषणमेवाह—कूटस्थेति। ब्रह्मणः परिणामित्वे कूटस्थत्वहानिरेको दोषः। नानाकारत्वेन विज्ञानैकरसत्वहानिर्द्वितीयो दोषः शाक्यैर्बौद्धैः सन्धिः—साम्यम्,

ते ह्यालयविज्ञानं प्रमातृ तदेवासत्यप्रकाशनशक्तिमत्त्वेन विज्ञानं प्रमाणं घटाद्याकारयुक्तत्वेन प्रमेयं विषयावभासात्मना प्रमितिश्चेति मात्रादिविभागः सर्वोऽपि विज्ञानमेवेति वदन्ति त्वमपि विज्ञानं ब्रह्मैव सर्वमिति ब्रूषे ततो बौद्धमतप्रवेशापत्तिः तृतीयो दोषः सत्यब्रह्मपरिणामत्वे प्रपञ्चस्य सत्यतया ज्ञाननिवर्त्यत्वायोगादनिर्मोक्षापत्तिरप्यन्यदिति दूषणं वर्णयाम इति सम्बन्धः ॥ ११७ ॥

नन्वेतेषां दूषणानामनन्यतमस्यापि नात्रावकाशः, सर्वस्याप्यज्ञानकल्पितस्य विज्ञानात्मकब्रह्मव्यतिरेकेण व्यावहारिकभेदस्यापि सत्त्वादित्याशङ्क्याह—

**अज्ञानकल्पितमनिर्वचनीयमिष्टं**
**मात्रादिमानफलपर्यवसानमेतत् ।**
**इत्युच्यते यदि तदा परमात्मनोऽपि**
**मेयत्वतो भवति कल्पितताप्रसङ्गः ॥ ११८ ॥**

अज्ञानकल्पितमिति । मानस्य यत्फलं प्रमितिः पर्यवसानमन्तो यस्य मात्रादेस्तत्प्रमातृ आदिर्यस्य मानमेयस्य तत्प्रमात्रादि एतन्मानफलपर्यवसानं प्रमात्रादि दृश्यत्वादज्ञानकल्पितमनिर्वचनीयमिष्टमित्युच्यते यदि तद्भवतु नाम तदा परमात्मनोपि मेयत्वात्कल्पितताप्रसङ्गः । अन्यथा दृश्यत्वहेतोर्व्यभिचारेण प्रपञ्चस्यापि मिथ्यात्वासिद्धिप्रसङ्ग इति भावः ॥ ११८ ॥

ननु दृश्यत्वं हेतुर्नात्मनि विद्यते येन तत्र व्यभिचारः स्यादात्मा ह्यप्रमेयः कथमदृश्यः स्यादिति स्वसिद्धान्तश्रद्धाजडं प्रत्याह —

**ब्रह्म प्रमेयमथ नेष्टमिह प्रमाणं**
**वेदान्तवाक्यमिति पत्त्रपराहतिर्वः ।**

न ह्यप्रमेयमवबोधयदस्ति मानं

नादाह्यदाहक इति प्रथितः कृशानुः ॥ ११९ ॥

अह्येति। अथ यदि ब्रह्म प्रमेयं नेष्टं तर्हि इहाप्रमेये ब्रह्मणि वेदान्तवाक्यं प्रमाणमिति युष्माकं सिद्धान्तहानिः। नन्वप्रमेयोपि वेदान्तः किमिति प्रमाणं न भवेत्तत्राह—न हीति। यतोऽप्रमेयं प्रमाविषयत्वायोग्यं बोधयत्तद्विषयप्रमितिं जनयन्मानं नास्ति ततो वः पक्षपराहतिरिति सम्बन्धः। एतादृशोर्थोऽसंभवीत्यत्र दृष्टान्तमाह—नादाह्यदाहक इति। कृशानुर्वह्निरदाह्यस्य गगनादेर्दाहक इति न प्रथितः प्रसिद्धो न भवतीत्यर्थः ॥ ११९ ॥

तिष्ठतु तावदात्मनो मेयत्वेन कल्पितत्वापादनं प्रमात्रादिविभागाङ्गीकारे कौटस्थहान्यादिदोषस्तदस्त्वथ एव। न च तस्यानिर्वचनीयत्वाददोषः किमिदमनिर्वचनीयत्वं सदसद्विलक्षणत्वमिति चेन्न—तस्यात्यन्ताप्रसिद्धेरित्याह

किंचाप्रसिद्धमिदमत्र जगत्त्रयेऽपि

स्वाज्ञानकल्पितमनिर्वचनीयमेकम्।

निःशेषतीर्थदृगुदीरिततन्त्रमार्गे

सिद्धे यतः सदसती सकलेऽपि तन्त्रे ॥ १२० ॥

किंचेति। किंचात्र जगत्त्रयेपीदं स्वाज्ञानकल्पितमनिर्वचनीयमित्यप्रसिद्धं सदसत्त्वयोरेव प्रसिद्धत्वादित्यर्थः। ननु लोके प्रसिद्ध्यभावेपि शास्त्रीया प्रसिद्धिः क्वचिद्भविष्यतीति चेत्किं वैदिकशास्त्रे उत तदितरशास्त्रे नोभयथापीत्याह—निःशेषेति। यतो निःशेषाणि तीर्थानि वेदार्थास्तानि पश्यन्तीति निःशेषतीर्थदृक् जैमिनिस्तदुदीरितो यस्तन्त्रमार्गः वेदार्थप्राप्त्युपायशास्त्रं तस्मिन्पूर्वमीमांसायामित्यर्थः।

सकले तन्त्रेपि वैदिकेतरशास्त्रेपि सदसती एव सिद्धे ततोऽप्रसिद्ध-मिति सम्बन्धः ॥ १२० ॥

ननु न ते मायावादिनः वयं तु मायावादिनः ततोऽन्यत्राप्रसि-द्धमप्यज्ञानबलादस्मन्मत एवानिर्वचनीयं सिध्यति न ह्यस्ति नियमः लोकप्रसिद्धस्तन्त्रान्तरप्रसिद्ध एवार्थस्तन्त्रान्तरे व्युत्पादनीय इति तत्राह—

अज्ञानमप्यसदभावतया प्रसिद्धे-
र्द्वैतप्रसूतिकृदतो न तदभ्युपेयम् ।
नासत्कदाचिदपि सज्जनने समर्थं
बन्ध्यासुता न खलु पुत्रशतं प्रसूते ॥१२१॥

अज्ञानमपीति । अज्ञानमसद्विलक्षणमभाव । अज्ञानस्याभावत्वेऽनु-भवं हेतुमाह—अभावतयेति । न जानामीति ज्ञानाभावत्वेनानुभूयमान-त्वादित्यर्थः । ततः किं तत्राह—द्वैतेति । यतोऽज्ञानं ज्ञानाभावः । अतस्तदज्ञानं द्वैतप्रसिद्धिकृतद्द्वैतोपादानं न भवतीत्यर्थः । नन्वभाव-स्यापि तत्त्वं किं न स्यादित्याशङ्क्याभावस्य भावतादात्म्यानुपपत्ते-रित्याह—नासदिति । अपत्यसामर्थ्यात्यन्ताभाववती बन्ध्या तथाचा-ज्ञानस्यैव भावरूपस्याभावान्न ततो ऽनिर्वचनीयसिद्धिरित्यर्थः ॥१२१॥

किञ्च वेदान्तोपि ब्रह्मण्यपरोक्षां धियमुत्पादयति उत परोक्षां-नाद्य इत्याह—

वाक्यप्रसूतमतिरिन्द्रियजन्यधीव-
न्नार्थापरोक्ष्यजननी भवितुं समर्था ।
तेनास्तु वाक्यजनितात्मपरोक्षबुद्धि-
र्भ्रान्तिः सदाऽजडतयाऽनुभवेऽपरोक्षे ॥ १२२॥

वाक्यप्रसूतेति । इन्द्रियजन्यधीवदितिव्यतिरेकोदाहरणं यथेन्द्रियजन्या धीरर्थमपरोक्षतयाऽभिव्यञ्जयति तथा तत्त्वमादिजन्या मतिरर्थापरोक्ष्यजननी भवितुमर्थस्यापरोक्ष्यं प्रमात्रभेदेनाभिव्यक्तिं जनयितुं न समर्थेत्यर्थः । इन्द्रियस्यैवापरोक्षधीजनकत्वनियमादित्यर्थः । नन्वपरोक्षानुभवरूपे आत्मनि यदि वेदान्तजन्यज्ञानमपरोक्षं न भवेत्तर्ह्यप्रामाण्यं स्यादित्याशङ्क्य का नः क्षतिरित्याह—तेनेति । येन हेतुना वाक्यस्य नापरोक्षधीजनसामर्थ्यन्तेनानुभवरूपे सदाऽजडतया स्वयंप्रकाशतया परोक्षे वाक्यजनितात्मपरोक्षबुद्धिर्भ्रान्तिरस्त्विति सम्बन्धः ॥ १२२ ॥

नन्वात्मवस्तुनो नित्यापरोक्षत्वात्तद्विषयं वेदान्तवाक्यजनितं ज्ञानमपीन्द्रियजन्यधीवदपरोक्षमेव भवेत् । न ह्ययमस्ति नियमः, इन्द्रियमेवापरोक्षां धियमुत्पादयतीति परोक्षज्ञानवत्प्रत्यक्षज्ञानस्यापि विजातीयानेककारणजन्यत्वोपपत्तेः । न चेन्द्रियद्वारानिसृतान्तःकरणवृत्त्यैव विषयस्य प्रमात्रभेदेनाभिव्यक्तिरिति वाच्यम् । ब्रह्मणः प्रमातृस्वरूपतया विषयस्य वृत्तिं विनाप्यत्यन्तसन्निहितत्वादतो न वेदान्ताप्रामाण्यमित्याशङ्कां निराकुर्वन्द्वितीयं दूषयति—

**नित्यापरोक्षमपि वस्तु परोक्षरूपं**
**वेदान्तवाक्यमवबोधयति स्वभावात् ।**
**प्रामाण्यमत्र कथमस्य वदोपपन्नं**
**न ह्यन्यदन्यदिति बोधयतः प्रमात्वम् ॥ १२३ ॥**

नित्यापरोक्षमपीति । परोक्षरूपमिति । परोक्षरूपं यथा भवति तथेत्यर्थः । स्वभावाद्वाक्यस्वभावात्तथा च यद्यपि ब्रह्मात्मवस्तुनित्यापरोक्षमेव तथापि तत्त्वमादिवाक्यं ज्योतिष्टोमादिवाक्यवत्स्वभावात्परोक्षमेव बोधयतीत्यर्थः । ततश्चाप्रामाण्यं तदवस्थमित्याह—प्रामाण्यमिति । अत्र

ब्रह्मण्यस्य वेदान्तस्यापरोक्षं ब्रह्म परोक्षं बोधयतः प्रामाण्यं कथमुपपन्नमिति वद न कथमप्युपपन्नम्। तत्र हेतुः—न ह्यन्यदन्यदिति। हि यस्मादन्यदिति अन्यप्रकारेणेत्यर्थः। रज्जुं सर्पमिति बोधयतो वाक्यस्येवापरोक्षं ब्रह्म परोक्षमिति बोधयतो न प्रामाण्यमित्यर्थः। नन्वयं हेतुरसिद्धः। न हि वेदान्ता ह्यपरोक्षं ब्रह्म परोक्षमिति बोधयन्ति। किं तर्ह्यपरोक्षमित्येव तच्च ज्ञानं प्रमाणस्वभावात्परोक्षं भवत्कथमप्रमाणं स्यादिति चेदेषा हि ब्रह्मवादिनां स्थितिः ज्ञानस्य न स्वतोऽपारोक्ष्यं सर्वेषामपि ज्ञानानामपरोक्षत्वप्रसङ्गात्। न चेन्द्रियजन्यत्वमपरोक्षत्वमनुमित्यादेरपि मनोजन्यतयाऽपरोक्षत्वप्रसङ्गात्। नापि विषयजन्यत्वमपरोक्षत्वं सर्वोत्पत्तिमन्निमित्तादृष्टादिविषयानुमितौ तत्प्रसङ्गात्। नन्विन्द्रियत्वेनेन्द्रियजन्यत्वं विषयत्वेन विषयजन्यत्वं वा परोक्षत्वमिति चेन्न—ज्ञानेऽनुगतव्यावृत्तजन्यतावच्छेदकज्ञानं विना तत्त्वेन तज्जन्यत्वस्यानुभवितुमशक्यत्वादवच्छेदकधर्मसद्भावे वा स एवापरोक्षत्वमस्तु। अपरोक्षत्वस्याप्रत्यक्षत्वप्रसङ्गाच्च। नापि ज्ञानाकरणकं ज्ञानत्वमपरोक्षत्वमीश्वरज्ञानकरणके जन्यप्रत्यक्षमात्रेऽव्याप्तेः। नन्वीश्वरज्ञानं करणं न भवतीति चेत्किमेतदभ्युपगममात्रमुत करणलक्षणविरहप्रयुक्तं नाद्यः। तस्य निर्बीजत्वात्। न द्वितीयः। व्यापारवद्धि कारणं करणं व्यापारश्च यज्जनयित्वैव यज्जनयति स तस्य ईश्वरज्ञानं च विशेषणज्ञानादिकं जनयित्वैव विशिष्टज्ञानं जनयितुमीष्टे न त्वन्यथा तदर्शनात्कारणं विना कार्यस्य भवत आकस्मिकत्वप्रसङ्गाच्च। न च जन्यज्ञानाकरणकज्ञानत्वं प्रत्यक्षत्वं प्रत्यभिज्ञायामव्याप्तेः। तत्रापि पूर्वानुभवस्य विशेषणज्ञानस्य संस्कारद्वारस्य करणत्वात्। ननु तत्र स्मृतिरेव तत्ताविषयिणी विशेषणज्ञानत्वेन कारणमिति चेन्न—मध्ये स्मृतिकल्पने प्रमाणाभावात्कल्पनागौरवाच्च। ननु विशिष्टज्ञानस्याव्यवहितविशेषणज्ञानजन्यत्वनियमान्मध्यस्मृतिः कल्पत इति गौरवन्न दोषायेति चेन्न स्मृतिवद्व्यवहितविशेषणज्ञानजन्यत्वस्योपपत्तेः। नन्वनुभवे यत्रि-

यमोनुमित्यादौ दृष्ट इति चेन्न—तत्रापि लिङ्गज्ञानव्याप्तिसंस्काराभ्यामेव तदुपपत्तेः। संस्कारव्यापारकपूर्वानुभवस्य व्यवहितत्वाच्च। अन्यथा स्मृतिं प्रत्यपि तस्य व्यवहितत्वेन करणत्वानुपपत्तेः। ननु प्रत्यभिज्ञादेः संस्कारजन्यत्वे स्मृतित्वं स्यादिति चेन्न—प्रमाकरणासहकृतसंस्कारजन्यत्वस्यैव स्मृतित्वात्। नचैवं सति स्मृतिलक्षणगौरवं मध्ये स्मृतितत्कारणत्वकल्पनादेतस्य लघुत्वात्। नचात्र किञ्चित्कल्प्यं विद्यमानस्यैव प्रमाकरणासाहित्यस्य प्रयोजकत्वमात्रकल्पनात् दुर्निरूपज्ञानकरणिकायामनुमितावतिव्याप्तेश्च। ननु ज्ञानाजन्यज्ञानत्वमेव प्रत्यक्षत्वं प्रत्यभिज्ञा तत्तांशे परोक्षैव न च विशिष्टप्रत्यक्षेऽव्याप्तिः तस्यापि विशेषणसन्निकर्षमात्रजन्यत्वेनाव्याप्त्यभावादिति चेन्न—अनुमित्यादेर्मितिमात्रांशेप्यपरोक्षत्वानुपपत्तेः। तस्माद्विषयप्रयुक्तमेव ज्ञानेऽपरोक्षत्वमिति वक्तव्यम्। अव्यवहितपदार्थविषयत्वमेव विषयप्रयुक्तत्वं परोक्षं च व्यवहितविषयमव्यवधानं च स्वतो वृत्तिद्वारा वा भवति। घटादेरिन्द्रियजन्यवृत्तिद्वाराऽत एव तस्यापरोक्ष्यममुख्यमेव धर्मादेश्च नापरोक्षत्वमिन्द्रियद्वारकवृत्त्यभावाद् ब्रह्म च वस्तुनः स्वतो निरस्तनिखिलभेदनिदानमनिर्वचनीयाविद्याशक्त्या व्यवहितवद्भवतीति। तत्र यदि वेदान्तजन्यं ज्ञानं परोक्षं भवेत्तदा ज्ञानपरोक्षत्वस्य विषयपरोक्षतानिर्वाह्यत्वाद्विषयोपि ब्रह्म व्यवहितमिति वक्तव्यं तथा च वेदान्तैर्यदि परोक्षं ब्रह्मेति परोक्षज्ञानमुत्पाद्यते तदास्पष्टमेवाप्रामाण्यं ब्रह्मणि पारोक्ष्याभावात्। न चाविद्याकल्पितं पारोक्ष्यं तत्त्वमादिवाक्यं प्रतिपादयितुमर्हति। यदि चापरोक्षमित्येव परोक्षज्ञानमुपजनयति। तदापि ज्ञानपरोक्षतानिर्वाहकतया विवक्षिततयापरोक्ष्ये ब्रह्मणि विवक्षितविषये विरुद्धाकारज्ञानजननादप्रामाण्यं तदवस्थमत्यन्तमव्यवहितविषयतया परोक्षत्वं चावश्यकमिति भावः॥ १२२॥

ननु तर्हि परोक्षत्वापरोक्षत्वयोर्विषयप्रयुक्तत्वाद्वेदान्तानामप्यपरोक्षे ब्रह्मणि अपरोक्षबुद्धिजनकत्वसंभवात् नाप्रामाण्यमिति चेत्—

भवेदेतदेवं यदि परमतमङ्गीकार्यम्, नत्वौषधवदेतदङ्गीकर्त्तव्यम्, न चास्मन्मतेऽपरोक्षत्वपरोक्षत्वयोर्दुर्निरूपत्वं जातिविशेषस्यैव तत्त्वात्, तस्माद्व्यवहितविषयं व्यवहितविषयं वा यदीन्द्रियजन्यज्ञानं तज्जातिविशेषाश्रयः सदपरोक्षम्, यत्तु लिङ्गशब्दादिजन्यं तत्परोक्षमिति ब्रह्मणोऽपरोक्षत्वेपि वेदान्तजन्यं तज्ज्ञानं परोक्षमेव तज्ज्ञानस्य परोक्षत्वेऽविद्यानिवृत्त्यनुपपत्तिः, भवद्रीत्याऽप्रामाण्यं चेत्यभिप्रेत्याह—

**वस्त्वस्तु नित्यमपरोक्षमिदं तु वाक्यं**
**तद्वस्तु वक्तुमपरोक्षमशक्तमेव ।**
**न ह्यस्ति शब्दजनिताऽत्र जगत्त्रयेपि**
**बुद्धिः करोति खलु या विषयापरोक्ष्यम् ॥१२४॥**

वस्त्वस्त्विति । अपरोक्षं वक्तुमपरोक्षं यथा भवति तथा बोधयितुमित्यर्थः । तत्रापि प्रसिद्धमेव हेतुमाह—न ह्यस्तीति । हिः प्रसिद्धौ शब्दजनिता सा बुद्धिर्नास्ति खलु या विषयापरोक्ष्यं करोतीति सम्बन्धः ॥ १२४ ॥

ननु जगति शब्दजन्यज्ञानस्यापारोक्ष्याप्रसिद्धिरसिद्धा दशमस्त्वमसीतिवाक्यजन्यज्ञाने तत्सिद्धेः । न च तत्राप्यपरोक्षज्ञानं नास्तीति वाच्यम् । अपरोक्षदशमत्वभ्रान्त्यनिवृत्तिप्रसङ्गात् । न च वाच्यं नह्ययमस्ति नियमः अपरोक्षभ्रमस्यापरोक्षमेव विज्ञानं निवर्त्तकमिति यतो विरुद्धपरिमाणलिङ्गजन्यज्ञानेन प्रदीपाभेदभ्रमो निवर्त्यत इति तत्रापि युक्त्यनुसंधानदशायामभिन्नत्वेन प्रत्यक्षदर्शनाद्दिङ्मोहस्य मार्तण्डमण्डलोदयादिना यथावद्दिगनुमानेप्यनिवृत्तेर्दर्शनाच्च । न च तत्रापीन्द्रियजन्यज्ञानेनापरोक्षभ्रमनिवृत्तिरस्त्विति वाच्यम् । इन्द्रियव्यापारे विद्यमानेपि प्राक्तस्यानुदयात् । ननु शब्दोपि सहकारीति चेन्न-स्वतन्त्रप्रमाणयोस्तत्त्वानुपपत्तेः। अन्यथा तज्जन्यज्ञाने शाब्दत्वचाक्षुषत्वादिसाङ्कर्यापातात्।

ननु शब्दजन्यं ज्ञानमिन्द्रियसहकारीति चेत्तर्हि विशेषणज्ञानत्वेन प्रत्यासत्तित्वेन वेति वक्तव्यम्। प्रकारान्तरेण ज्ञानस्येन्द्रियसहकारित्वानुपपत्तेः। अस्तु-तथैवेति चेत्तर्हि दशम इत्येतावन्मात्रशब्दजन्यज्ञानसहकृतादपीन्द्रियात्तदुत्पत्तिप्रसङ्गः। विशेषणज्ञानस्य वृत्तत्वात्। विशेषणज्ञानस्याहेतुत्वाच्च। नन्वन्वयव्यतिरेकाभ्यमिन्द्रियव्यापारोऽप्यपेक्षते व्यासङ्गदशायां श्रूयमाणादपि वाक्यात्तदनुत्पत्तेः। त्वगिन्द्रियव्यापारश्च देहविषयः सदास्तीति चेत्सत्यम् अत एव हि तद्दशायामिन्द्रियद्वारा निर्गतान्तःकरणवृत्त्या देहस्य प्रमात्रव्यवधानाच्छब्दाज्जायमानमपरोक्षमित्युच्यते। तस्माद्वाक्यवैयर्थ्यपरिहारायानिच्छद्भिरप्यपरोक्षं ज्ञानं वाक्याज्जायत इति स्वीकर्त्तव्यम्। नचैवं शाब्दत्वापरोक्षत्वयोः साङ्कर्यापातः शाब्दत्वस्यानेकत्वेनाप्युपपत्तेः। न वा साङ्कर्यमप्यस्मन्मते दोषाय। न चापरोक्षत्वमपि जातिर्भवति ज्ञाने व्यक्तिभेदाभावात्कल्पितव्यक्तिभेदस्य जात्याश्रयत्वाभावस्य गगनादौ दृष्टत्वाद् व्यञ्जकाभावाच्च। न च व्यक्तिरेव व्यञ्जिका तद्भिन्नव्यञ्जकव्यङ्ग्यत्वस्य गोत्वादौ दर्शनात्। न चेन्द्रियजन्यत्वं व्यञ्जकमपरोक्षस्यैवापरोक्षजातिव्यञ्जकत्वात्तस्माद्विषयप्रयुक्तमेव ज्ञानानामपरोक्षत्वं वक्तव्यम्। तथा च न वेदान्ताप्रामाण्यम्। न चैवमपि स्वयंप्रकाशे ब्रह्मणि वेदान्तानां न कृत्यमिति वाच्यम्। संसारनिदानाज्ञानापनयनस्यैव कृत्यत्वात्। न च भावरूपमज्ञानमेव नास्तीति वाच्यम्। श्रुतिस्मृत्योस्तस्य प्रसिद्धत्वात् न च तत्राज्ञानस्यैवासम्भवः अज्ञानस्य जन्यज्ञानेनैव विरोधात् स्वयंप्रकाशेऽप्युपपत्तेरित्यभिप्रेत्य शङ्कते—

अत्राऽऽह यद्यपि किमप्युपनेयमत्र
चैतन्यवस्तुनि न सम्भवति प्रमाणैः।
अस्त्येव तत्र भवभीतिनिदानभूत-
मज्ञानमात्रमपनेयमनन्यमाने ॥ १२५ ॥

अत्राऽऽहेति । एवं स्थिते सत्याहेत्यर्थः । मानकृत्ये विषय इति वा। अत्र चैतन्यवस्तुनि यद्यपि प्रमाणैरुपनेयमुत्पाद्यं किमपि प्रकाशाख्यं किञ्चिन्मानकृत्यं नास्ति तथाप्यनन्यमाने तत्र ब्रह्मणि भवभीतिनिदानभूतं निखिलानर्थकारणमज्ञानमात्रमपनेयं विद्यत एवेति सम्बन्धः। अज्ञाननिवृत्तेः पुरुषार्थत्वद्योतनाय भवभीतीतिविशेषणं निवृत्तेऽप्यज्ञानेऽन्यस्मात्संसारप्रसक्तिपरिहाराय मात्रेति ॥ १२५ ॥

दूषयति—

नैतत्प्रमाणमपनेतृ सतो न ताव-
न्नैतन्नियोज्यमसतोऽप्युपघातसिद्ध्यै ।
नाप्यन्यदस्ति सदसद्यदनेन हेयं
तस्मात्प्रमाणमपनेतृ न कस्यचिद्वः ॥ १२६ ॥

नैतदिति । एतत्त्वदुक्तं न कुतः किमज्ञानं सत् उतासत् । आहोस्वित्सदसदात्मकमथवोभयविलक्षणमनिर्वचनीयम् । नाद्यः । इत्याह— अपनेतृ सतो न तावदिति । तावच्छब्दः क्रमार्थः ज्ञानं सतोपनेतृ निवर्त्तकं न सत्यस्य ज्ञाननिवर्त्यत्वानुपपत्तेः । द्वितीयं दूषयति—नैतदित्यादिना । एतज्ज्ञानमसतोऽप्युपघातसिद्ध्यै निवृत्तये न नियोज्यं न व्यापारयितव्यमसतो नित्यनिवृत्तत्वात्तृतीयमसम्भवेन दूषयति— नापीति । प्रत्येकं सदसद्द्वयामन्यत् सदसत्समुदायात्मकं यदन्यत्सदसदात्मकमनेन ज्ञानेन हेयं तन्नास्तीति सम्बन्धः । विरुद्धयोरेकत्वानुपपत्तेः । चतुर्थमुपसंहारव्याजेन निराकरोति— तस्मादिति । वः युष्माकंपक्षे प्रमाणं कस्यचिदपि सत्त्वासत्त्वाभ्यां निर्वचनानर्हस्याप्यपनेतृ न भवत्युभयात्मवदुभयविलक्षणस्याप्यसम्भवादित्यर्थः ॥ १२६ ॥

ननु अज्ञानस्यानिर्वचनीयत्ववदनिर्वचनीयत्वस्याप्यनिर्वचनीयत्वान्न सदसद्विलक्षणत्वं दोषायेत्याशङ्क्य दूषणान्तरमाह—

**मानं न कारकमिति प्रथितं पृथिव्यां**
**स्याच्चेत्क्रियावदिदमुज्झितमानभावम् ।**
**जन्यं न मानफलमित्यपि युष्मदीयाः**
**सम्विद्रते न खलु जातु चिदत्तरेऽस्मिन् ॥१२७॥**

मानं न कारकमिति । प्रकाशातिरिक्तमात्रकार्यजनकमित्यर्थः । यन्मानं तत्कारकं न भवतीति चक्षुरादिजन्यज्ञाने प्रसिद्धं ततश्चेदं वेदान्तजन्यं ज्ञानं स्याच्चेद्विषयाभिव्यक्तिं विनाऽविद्यानिवृत्तिरूपां क्रियां जनयेच्चेद्गमनादिक्रियावन्मानभावं त्यजेदित्यर्थः । तथा चेदमनुमानमभिधित्सितं वेदान्तजन्यं मानं न विषयप्रकाशातिरिक्तमात्रकार्यजनकमपरोक्षप्रमाणत्वात् घटादिप्रमाणवत् । कारकत्वस्य क्रियायाममानत्वव्याप्तिदर्शनादित्यर्थः । अथवा—विमतं मानं न भवति । कारकत्वात् । क्रियावत् । न च हेत्वसिद्धिः । विषयाभिव्यक्तिमन्तरेणाविद्यानिवृत्तिजनकत्वेन तत्सिद्धेरित्यर्थः । प्रत्यक्षादिप्रमाणस्यापि घटादिसमवाय्यविद्यानिवृत्तिमात्रफलजनकत्वेनाद्यानुमाने दृष्टान्तः साध्यविकल इत्याशङ्क्याह—जन्यमिति । जन्यमविद्यानिवृत्त्याख्यं कार्यं न घटादिमानस्य फलं किन्तु विषयाभिव्यक्तिरेवाभिव्यक्त्या च सा भवति । अभिव्यक्तिं विना तस्यानुपपत्तेः । सा च नित्यचैतन्यस्वरूपत्वादजन्यैव । नन्वभिव्यक्तेर्नित्यत्वे किं प्रमाणेनेति चेदात्मानमुपालभस्वेत्याह—इत्यपि युष्मदीया इति । संविद्रते विजानते ऽतो भवद्रीत्यानुमानस्योक्तत्वात् न साध्यविकलो दृष्टान्त इति । अथवा–द्वितीयानुमाने प्रतिकूलस्तर्कोऽनेन प्रदर्श्यते । यदि वेदान्तजन्यं ज्ञानं प्रमाणं स्यात्तदाऽविद्यानिवृत्तिमात्रलक्षणं विषयाभिव्यक्तिव्यतिरिक्तं न जनयेत्तादृशजन्यस्याप्रमाणफलत्वेन भवदीयैरङ्गीकृतत्वादिति । किञ्चात्मनि मानेनाविद्यानिवृत्तिलक्षणं फलमपि न सम्भवति । अविद्यानिवृत्तेरात्माभिन्नत्वात्तद्व्यतिरेकेणासत्त्वादित्याह—न खल्विति । अस्मिन्नात्म-

न्यक्षरेऽव्यये सति जातुचित् कदाचिदप्यविद्यानिवृत्तिर्न सम्भवति खलु इति सम्बन्धः। चिदक्षर इति वा छेदः। चिद्रूपेऽक्षर इत्यर्थः। अनेनास्तु तर्हि विषयप्रकाश एवात्रापि मानकृत्यमिति शङ्का निराकृता वेदितव्या ॥ १२७ ॥

ननु घटादिज्ञानमप्यविद्यानिवृत्तिव्यतिरिक्तं न किञ्चित्कृत्यं सम्पादयति। न च विषयाभिव्यक्तिं विना तन्निवृत्त्यनुपपत्तिः। अविद्यानिवृत्तिव्यतिरिक्ताऽभिव्यक्तिशब्दार्थाभावात्कथं तर्हि सा निवर्त्तत इति चेन्न—तदाकारवृत्तिप्रतिबिम्बितचैतन्येन तदुपपत्तेः। तथा च प्रथमहेतौ दृष्टान्तः साध्यविकलः द्वितीयोपि हेतुरप्रयोजकः। अविद्यानिवृत्तिव्यतिरिक्तक्रियाजनकस्यैव कारकत्वादित्याशङ्क्य यद्यज्ञानस्यान्यस्य वा ऽनिर्वचनीयत्वमनुभवसिद्धं स्यात्तदा युक्तिविरुद्धमपि तत्स्वीक्रियेत न तु तदनुभूयते तथाहि किं तल्लोकेनुभूयते उत शास्त्रे नोभयथापीत्याह—

नाद्यापि वेद्म्यहमनिर्वचनीयभाषां
सर्वप्रवादिहृदयान्यपि गाहमानः।
तात्पर्यतो न च तथाविधमस्ति किञ्चि-
ल्लोके प्रसिद्धमपि यद्विषयेयमिष्टा ॥ १२८॥

नाद्यापीति। विचारकौशले सत्यपीत्यर्थः। सर्वप्रवादहृदयानि सर्वशास्त्रप्रतिपाद्यन्यायान् तात्पर्यतः सावधानेनावगाहमानो विचारयन्नहमद्याप्यनिर्वचनीयभाषामनिर्वचनीयमितिवार्त्तामपि न वेद्मि कुतः पुनरनिर्वचनीयत्वाख्यमर्थमित्यर्थः। यत्पुनः पूर्वमुक्तं न हि तन्त्रान्तरसिद्धमेव व्युत्पादनीयमिति तदनेन निराकृतम् तन्त्रान्तरेषु सिद्धार्थविषयन्यायानां साध्यार्थविषयन्यायानां च सिद्धत्वात्तदितरन्यायाभावादेतन्न्यायस्य तत्राव्युत्पादनादनिर्वचनीयत्वं नाम किञ्चिन्ना-

स्तीति भावः । लोकेपि तं न पश्यामीत्याह — न च तथाविधमिति । अनिर्वचनीयमित्यर्थः । यद्विषयेयमनिर्वचनीयभाषेष्टा तथाविधं लोके किञ्चिदपि प्रसिद्धं नास्तीति सम्बन्धः । यत्पुनरुक्तम् नचलोकप्रसिद्धिरेवोपजीव्येति तदपि न शास्त्रैकाविषयस्य लोकप्रसिद्धिविषयत्वनियमादिति ॥ १२८ ॥

ननु ज्ञानमज्ञानविरोधीति सकललोकवादिसम्मतं तत्र यद्यज्ञानं सद्रूपेन्न तर्हि तस्य ज्ञानेन सह विरोधो भवेदसत्त्वे च न तरामुभयात्मकत्वे सत्त्वांशस्यानपायात्स दोषस्तदवस्थः । तस्मादज्ञानस्य लोकवादिसिद्धज्ञानविरुद्धत्वनिर्वाहायैवानिर्वचनीयत्वमपि लोकवादिसम्मतमिति न तदप्रसिद्धिरित्याशङ्क्य एवमप्यविद्यानिवृत्तिजनकत्वे मानस्य कारकत्वप्रसङ्गः । नचायमस्ति नियमो विद्यानिवृत्तिव्यतिरिक्तक्रियाजनकस्यैव कारकत्वमिति क्रियामात्रजनकस्यैव तत्त्वात् । न च ज्ञानस्य व्यवहारजनकत्वेन कारकत्वमिष्टमिति वाच्यम् । तस्याज्ञाननिवृत्तिफलत्वात् । न चैवमपि संस्कारहेतुत्वं तस्यास्तीति वाच्यम् । तस्य ज्ञाननाशजन्यत्वात् । न चाविद्यानिवृत्तेरवस्तुत्वात् । न तद्धेतुमानस्य कारकत्वमिति वाच्यम् । किमिदमवस्तुत्वमसत्वमेव किं वा सदसद्विलक्षणत्वं नाद्यः—तस्य कार्यत्वानुपपत्तेः । नापि द्वितीयः—सदसद्विलक्षणप्रतियोगिकनिवृत्तेः सदसद्विलक्षणत्वानुपपत्तेः । न हि घटाभावो घटो भवति अतस्तस्या आत्ममात्रत्वेनैव तद्व्यतिरेकेणासत्त्वं वक्तव्यं तथा च न तन्मानफलं स्यादात्मनोऽजन्यत्वादित्याह—

तस्मात्प्रमाणफलमत्र निरूप्यमाणं
ब्रह्मात्मवस्तुनि न सम्भवतीह किञ्चित् ।
कृत्यं विना न च निरूपयितुं प्रमाणं
वेदान्तवाक्यमिह शक्यमनर्थकत्वात् ॥ १२९ ॥

तस्मादिति । यस्माद्विद्यानिवृत्तिः प्रमाणजन्या न भवति । तस्मादत्र ब्रह्मात्मवस्तुनि प्रमाणफलं निरूप्यमाणं किञ्चिदविद्यानिवृत्तिर्विषयप्रकाशो वा न सम्भवतीति सम्बन्धः । ननु यथा लोके प्रमाणान्तरेणाधिगतमपि प्रमाणान्तरेणावगम्यते न च तत्र मानकृत्यमस्ति द्विविधस्यापि फलस्य प्राथमिकमानेनैव सिद्धत्वात्तद्वद्वेदान्तानामपि प्रयोजनं विना ब्रह्मणि प्रामाण्यं किं न स्यादित्यशङ्कयाह—कृत्यमिति । च शब्दोऽवधारणे । कृत्यं प्रयोजनं विना इह ब्रह्मणि वेदान्तवाक्यमनर्थकत्वान्निष्प्रयोजनत्वात्प्रमाणमिति निरूपयितुमशक्यमेवेत्यर्थः । लौकिकस्य हि प्रमाणस्य निष्प्रयोजनानुवादित्वमात्रेणापि गतिर्वर्णयितुं शक्यते । न चेह तथा पुरोवादाभावादध्ययनविधिविरोधप्रसङ्गाच्चेति भावः॥ १२९ ॥

नन्वेवं सति वेदान्ताम्नायः किं निरर्थक एवेत्याशङ्क्य तस्यापि व्युत्पत्तिबलाद्भूतोपदेशत्वाच्च भव्यकार्यशेषतयार्थवत्त्वं वक्तुमादौ सर्वेषां पदानां लोके कार्यान्विते शक्तिग्रहणमाह—

**कार्यान्वयान्वयिनि वस्तुनि शब्दशक्तिं**
**श्रोतुः प्रवर्त्तकधियं परिकल्प्य बालः ।**
**चेष्टावशात्पुनरपि प्रविभज्य भागं**
**भागस्य वाचकमिति स्वयमेव वेत्ति ॥ १३० ॥**

कार्यान्वयान्वयिनि । बालो व्युत्पित्सुः चेष्टावशान्मध्यमवृद्धस्य गवादिविषयप्रवृत्तिरूपाल्लिङ्गाद् गामानयेति वाक्यश्राविणो मध्यमवृद्धस्य प्रवर्त्तकधियं प्रवर्त्तकमिदं कार्यमिति कार्यताविषयज्ञानं तद्धेतुत्वेन कार्यान्वयान्वयिनि कार्यनिरूपितसम्बन्धाश्रये शब्दशक्तिं सामान्यतः इदं वाक्यमेतत्कार्यताज्ञानसमर्थमिति वाक्यस्य सामर्थ्यं च परिकल्प्यानुमाय पुनः वाक्यस्य सामान्यतः कार्यान्वयाऽन्वि-

तेऽर्थे सामर्थ्यग्रहणानन्तरमावापोद्वापाभ्यां वाक्यं वाक्यार्थं च प्रविभज्याङ्गीकृत्य भागं विभक्तं पदं भाग्यस्य वाक्यार्थैकदेशस्य कार्यान्वितार्थस्य वाचकमिति स्वयमेवानन्यबोधितो वेत्तीत्यक्षरार्थः। एतदुक्तं भवति। लोके हि सर्वेषां पदानां वाचकशक्तिरवधार्यत इत्यविवादं तत्रापि प्रवर्त्तकवाक्ये एव प्राथमिकी व्युत्पत्तिरिति वक्तव्यम्। तत्रैव व्युत्पत्त्यनुकूलप्रवृत्तिलिङ्गस्य सत्त्वात्। तथा हि माणवक गामानयेत्याचार्यवचनेन गामानयन्तं माणवकं दृष्ट्वा व्युत्पित्सुः स्वात्मनि समधिगतव्याप्तिक एवमनुमिनोति विमता प्रवृत्तिः कार्यताज्ञानपूर्विका प्रेक्षावत्प्रवृत्तित्वान्मदीयप्रवृत्तिवदिति। अनुमानान्तरञ्च प्रवर्त्तमानश्रोतृसमवायिकार्यताज्ञाने कारणमालोचयन् वाक्यश्रवणानन्तरं तज्ज्ञानोत्पत्तेः तत्पूर्वं चानुत्पत्तेरन्वयव्यतिरेकाभ्यां वाक्यमेव तस्मिंस्कार्यताज्ञाने कारणमिति तदन्वयव्यतिरेकानुविधायित्वलिङ्गेनानुमिनोति सेयं प्राथमिकव्युत्पत्तिः। एवं गामानयेति वाक्यस्य गवानयनकार्यतायां सामर्थ्यमिति संमुग्धाकारेणावगत्य पश्चाद् गां बधान वत्समानयेति प्रयोगान्तरेषु वाक्यभागयोर्गामानयेति पदयोरुद्वापाद्, बधान वत्समिति पदयोश्चावापाद्वाक्यार्थभागस्य गां बधानेत्यत्र गोविशिष्टानयनस्य वत्समानयेत्यत्रानयविशिष्टगोव्यक्तेश्चोद्वापादानयनादिविशिष्टवत्सादिपदार्थस्य चावापादानायनादिकार्यविशेषस्य व्यभिचारेपि कार्यमात्रस्याव्यभिचारात्केवलपदार्थस्य वाक्यादनुपस्थानादुपस्थितस्य कार्यस्य परित्यागे मानाभावाद्विशिष्टार्थप्रत्यायनाय वाक्यप्रयोगात्प्रथमावगतकार्यव्युत्पत्त्यनुरोधेन सर्वपदानां कार्यान्वितस्वार्थे शक्तिरित्यध्यवस्यतीति एतादृशन्यायप्रतिपत्तिकुशलं प्रत्येव स्वयमेवेत्युक्तम्। नचैवं गवादिपदस्यैवानयनाद्यन्वितस्वार्थपरत्वे ऽऽनयनादिपदं व्यर्थमिति वाच्यम्। कार्यमात्रान्वितस्वार्थपरत्वेऽप्यानयनादिकार्यविशेषस्य तेन विनोपस्थित्यभावादिति। ननु सर्वपदानां कार्यान्वितस्वार्थपरत्वमनु-

चितं क्रियापदे व्यभिचारात्—न च क्रियापदमपि क्रियान्वितस्वार्थमभिधत्ते एकस्मिन् वाक्ये क्रियापदद्वयाभावात् क्रियाभेदे च वाक्यभेदस्यावश्यकत्वात्, न च क्रियापदव्यतिरिक्तेष्वयं नियमः क्रियापदन्तु स्वार्थपरमितरान्वितस्वार्थपरं वेति वाच्यं प्रयोजकद्वैविध्यप्रसङ्गादित्याशङ्क्योक्तं-कार्यान्वयान्वयिनीति । तथा च न प्रयोजकद्वैविध्यं कार्यसम्बन्धाश्रयत्वस्य कार्याकार्यसाधारणत्वादिति भावः ॥ १३० ॥

ननु कार्यान्वय इत्यत्रान्वये कार्यं यदि विशेषणं तदा कार्यविशिष्टान्वयाश्रये कार्ये कार्यपदस्य शक्तिरित्युक्तं स्यान्न हि तत्सम्भवति, कार्यस्य स्ववृत्तित्वप्रसङ्गात् यदि तदुपलक्षणं तदा कार्यपदस्यान्यस्याप्यन्वितस्वार्थमात्र एव शक्तिरित्युक्तं स्यात् अथ तदुपाधिरित्यभिधीयेत तदापि व्यावर्त्तकतया संबन्धं प्रत्युपसर्जनत्वं वाच्यम्, तथाच सम्बन्धं प्रत्युपसर्जनीभूतकार्यस्यैव सम्बन्धान्वयित्वेन तद्विशेषतया प्राधान्यमित्येकदैकस्यैवैकं प्रति विरुद्धरूपद्वयापत्तिरित्यपरितोषात्पक्षान्तरमाह—

**त्यक्तः कार्यान्वितार्थं वदितुमलमयं शब्द इत्येष पक्षो**
**नोक्तो योग्येतरार्थान्वितमिति तु पुनः पूर्वमप्येष पक्षः ।**
**किन्तु स्यादस्य शक्तिर्निजसहजवशादन्वितार्थाभिधाने**
**योग्यत्वादेस्तु पश्चात् स्वयमुपनिपतत्यस्य कार्यैदमर्थ्यम्**
**॥ १३१ ॥**

त्यक्त इति । कार्यान्वितशक्तिकल्पने हि प्रयोजकद्वैविध्यपरिहाराय कार्यान्वयान्वयिनीति समाश्रयणीयम् । तत उक्तदोषपरिहाराय शब्दः कार्यान्वितार्थं वदितुमलं समर्थ इत्येष पक्षस्त्यक्तः । अयं पक्षस्त्यक्तश्चेत्किं योग्येतरान्विते स्वार्थसामर्थ्यं ब्रवीषि तर्हि योग्येतरविशेषणं व्यर्थमयोग्येनानितरेण वान्वयाभावेन व्यावर्त्या

भावादित्याशङ्क्यानुक्तोपालम्भ इत्याह—नोक्त इति। अन्वययोग्यो य इतरपदार्थस्तेनान्वितं तद्विशिष्टं वदितुमलमिति सम्बन्धः। कुत्र तर्हि शक्तिरित्याकाङ्क्षापूर्वमाह—किन्त्वित्यादिना। किन्त्वस्य पदस्य निजसहजवशात्स्वभाववशादन्वितार्थाभिधाने ऽन्वितमात्रे शक्तिः स्यात् न कार्यान्विते न वा योग्येतरान्वित इत्यर्थः। शब्दार्थ-सम्बन्धस्य सांकेतिकत्वनिवारणार्थं निजसहजवशादित्युक्तम्। नन्वेवं सति सिद्धान्वितसिद्धेऽपि शक्तिः स्यात्ततः कथं व्युत्पत्तिबलात्कार्य-परो वेद इति वर्ण्यते तत्राह—योग्यत्वादेरिति। आदिपदेनाकाङ्क्षादिकं गृह्यते पश्चादन्वितव्युत्पत्त्यनन्तरमस्य पदस्य योग्यत्वादेर्हेतोः स्वयं कार्यव्युत्पत्तिं विनैव कार्यैदमर्थ्यं कार्यपरत्वमुपनिपतति प्राप्नोतीत्यर्थः। यद्धि योग्यं यच्चाकाङ्क्षितं यच्च स्वसन्निधौ पठितं तदेवान्वययोग्यं तत्र यद्यपि सान्निध्यं सर्वेषामविशिष्टं तथापि योग्यत्वमाकाङ्क्षितत्वं च न सिद्धपदानां साध्यसाधनभावशून्यतया समप्रधानानां परस्परं सम्भवति, न वा कार्यपदार्थानां परस्परं सिद्धकार्ययोस्तु साध्यसा-धनभूतयोः प्रधानगुणभावेनान्वययोग्यतादिकमस्त्येवातोन्वितमात्रेपि गृह्यमाणा पदशक्तिः स्वयमेव सिद्धपादानां कार्यान्वितस्वार्थे कार्यपदानां च सिद्धान्वितकार्ये पर्यवस्यतीति भावः ॥ १३१ ॥

नन्वस्तु लोके शब्दानां मानान्तरसिद्धधात्वर्थपरत्वं तथैव व्युत्पत्तेः, लौकिकवाक्यस्य भवन्मतेऽनुवादरूपत्वाच्च, वेदस्य तु कथं मानान्तरसिद्धकार्यपरत्वमपूर्वतयाऽपि वेदे तात्पर्याधिगम-लिङ्गत्वात्, ननु लोकवद्वेदेपि न धात्वर्थः कार्यं येन तस्यापूर्वत्वं हीयेत किन्तु तदतिरिक्तो नियोग एव स च मानान्तरागोचर इति चेन्न-धात्वर्थातिरिक्तकार्ये मानाभावात्, ननु स्वर्गकामो यजेतेत्यत्र काम्यस्वर्गविशिष्टस्य नियोज्यत्वेनान्वयः श्रूयते—काम्यं च स्वर्गादि-देशकालान्तरभावि कामी च काम्याव्यवहितसाधनमेव कर्त्तव्यतया ऽवैति, अतः क्रियायाः क्षणिकायाः कालान्तरवर्तिफलसाधनत्वा-

भावात्कामिनियोज्यान्वयोपपत्त्यर्थमेव क्रियातिरिक्तो नियोगोऽङ्गीकार्य इति चेन्न—क्रियाया एव स्थायित्वकल्पनयापि तदुपपत्तेः। धर्मिकल्पिनातो धर्मकल्पनाया लघुत्वात्। नच क्रियायाः क्षणिकत्वावगाहिमानान्तरविरोध इति वाच्यम्। फलनाश्या हि सा लोके च फलं क्रियानन्तरभाव्येवेति सा क्षणिका स्वर्गस्तु कालान्तरभावीति न यागात्मिकायाः क्रियाया क्षणिकता भवेत्। नचैहिकफलविनाश्यत्वनियमः क्रियाया इति वाच्यम्। फलमात्रस्यैव क्रियाविनाशकत्वादैहिकत्वस्याप्रयोजकत्वात् अत एव कारकावस्थफलविनाश्यत्वं क्रियाया इत्यपि नियमो निरस्तः, तस्मान्न धात्वर्थातिरिक्ते स्थायिकार्ये मानमस्तीति चेदुच्यते—यागक्रियाया देवताद्रव्याद्याश्रयायास्तन्नाशेऽवस्थानानुपपत्तेः नच द्विरवत्तदेवताद्रव्यादिनाशेपि नित्यपरमाण्वाश्रया सेति वाच्यम्। कारकसमवेतक्रियाया एव यागत्वादन्याश्रितायाः क्रियाया अन्यसमवायानुपपत्तेः। तस्याश्चान्यत्वे ऽपूर्वान्न विशेषः। अनन्तक्रियाकल्पनागौरवप्रसङ्गश्च। क्रिया ह्युत्तरसंयोगेन नियमेन नश्यति इष्वादिक्रियायां तथादर्शनात्। एतेन कर्मशक्तिरेव स्थायिनीति मतमपि प्रत्युक्तम् कर्मणोऽभावे तदाश्रितशक्त्यवस्थानानुपपत्तेः। ननु यथाशास्त्रप्रामाण्यबलात्स्वर्गसुखस्य प्रत्यक्षादिविरुद्धमपि दुःखासंभिन्नत्वादिकं कल्प्यते। एवमेव शास्त्रप्रामाण्यबलात् क्रियाया अप्याश्रयं विना प्रमाणविरुद्धमपि बहुकालावस्थानं कल्प्यतामिति चेन्न—यत्र हि येन विना शास्त्रप्रामाण्यमनुपपन्नं तत्रैव तत्प्रमाणविरुद्धमपि कल्पनीयं यथा सुखस्य दुःखासंभिन्नत्वादि अत्र स्थायिनियोगेनापि शास्त्रप्रामाण्योपपत्तौ न प्रमाणविरुद्धं बहु कल्पनीयं प्रमाणविरुद्धकल्पनातोऽ प्रतिपन्नकल्पनाया लघुत्वात्। न च स्थायिनियोगे मानान्तरविरोधोऽस्ति। तस्य चोदनैकगम्यत्वात्। नन्वेतादृशनियोगस्य किं लक्षणं किं कालत्रयानन्वितया प्रतीयमानत्वं किंवा प्रवर्त्तकत्वमुत कृतिसाध्यत्वं, नाद्यः अर्हाद्यर्थेतिव्याप्तेः।

न द्वितीयः। इष्टसाधनत्वेऽतिव्याप्तेः। तस्यापि ज्ञायमानतया प्रवर्त्तकत्वात्। न तृतीयः। धात्वर्थेऽतिव्याप्तेः। नच स्थायिनियोगे प्रमाणमपि पश्यामः। प्रत्यक्षं तावन्न संभवति। तस्य तद्विषयत्वात्। नाप्यनुमानादि। अपूर्वत्वहानेः। आगमस्य च लोके धात्वर्थकार्ये गृहीतसंगतिकस्य तद्व्यतिरिक्तनियोगे व्युत्पत्त्यभावेन तद्बोधकत्वानुपपत्तेः। न च स्वर्गकामनियोज्यसमभिव्याहारान्यथानुपपत्तिकल्पिते तस्मिन् व्युत्पत्तिरिति वाच्यम्। अर्थापत्तिप्रमाणत्वेऽपूर्वत्वक्षतेरित्याशङ्क्यादौ तल्लक्षणमाह—

**प्रवृत्त्यभावस्य विरोधि कार्यं**
**कालत्रयानन्वितमाहुरेके।**
**स्वगोचरस्येप्सितसाधनत्वं**
**विज्ञापयत्प्रेरकमाहुरन्ये॥ १३२॥**

प्रवृत्तीति। ममेदं कर्त्तव्यमिति कार्ये हि प्रतिपन्ने नियोज्यस्यौदासीन्यलक्षणप्रवृत्त्यभावो न भवतीति कार्यप्रवृत्त्यभावविरोधीत्युच्यते। कालत्रयानन्वितं। भूतभविष्यद्वर्त्तमानकालानवच्छिन्नं साध्यावस्थमित्यर्थः। कार्यं हि लिङादिशब्दैः साध्यतया प्रतीयमानं प्रवर्त्तकं तथाच कालत्रयानन्वितत्वेन प्रतीयमानं यत्प्रवृत्त्यभावविरोधि तत्कार्यमिति तल्लक्षणं प्रवृत्त्यभावविरोधीत्युच्यमाने रागादावतिव्याप्तिस्तत उक्तं कालत्रयेति। रागस्तु निष्पन्न एव प्रवर्त्तक इति वर्त्तमानकालान्वित एव स प्रवृत्त्यभावविरोधीभवति तद्व्यावृत्तिः। तावत्युक्ते साध्यावस्थघटादावतिव्याप्तिः। तदर्थं प्रवृत्तीति। नियोगो ह्यसिद्ध एव स्वसिद्धये प्रवर्त्तयति न च तथा घटादिरिति तद्व्यवच्छेदः। नन्वेष्टसाधनत्वे ऽतिव्याप्तिः, साधनत्वस्य सिद्धावस्थत्वादिति,भावः। नन्वेतल्लक्षणं धात्वर्थकार्ये ऽतिव्यापकं तस्यापि साध्यतया ज्ञायमानत्वेन प्रवर्त्तकत्वात्। न च तदपि

लक्ष्यमिति वाच्यम्। धात्वर्थव्यतिरिक्तकार्यस्वरूपस्यैव विप्रतिपन्नतया लक्ष्यत्वाद् अन्यथा लौकिककार्यव्यतिरिक्तकार्यस्यानेनासिद्धेर्लक्षणकथनवैयर्थ्यप्रसङ्गात्। न चैतत्सामान्यलक्षणं विशेषलक्षणं तु स्वगोचरस्येत्यादीति तेनैव तत्सिद्धिरिति वाच्यम्। तथात्वे धात्वर्थ कार्यस्यापि विशेषलक्षणकरणप्रसङ्गाद् विशेषलक्षणं विना सामान्यलक्षणवैयर्थ्यप्रसङ्गात्। न चैतल्लौकिकस्यैव लक्षणमिति वाच्यम्। तस्यानिरूप्यत्वाद् वैदिककार्ये ऽतिव्याप्तेश्चेत्यरुच्या लक्षणान्तरमाह—

स्वगोचरस्येति। एषा हि गुरुमतानुसारिणां प्रक्रिया दर्शपूर्णिमासाभ्यां स्वर्गकामो यजेतेत्यत्र लिङा नियोगः प्रतीयते। एष एव स्वविषये धात्वर्थे पुरुषं नियुञ्जानो नियोग इति नियोज्यकृतिसाध्यतया कार्यमिति मानान्तरागोचरत्वादपूर्वमिति चाख्यां लभते। स स्वर्गस्य साधनान्तरमेव स्वर्गनिष्पत्तेः। यागश्च न स्वर्गसाधनं यदनन्तरमेव यन्निष्पद्यते तत्तस्य साधनमिति हि वृद्धाः सङ्गिरन्ते। लोकेपि तथैव दृश्यते। यागस्तु परमापूर्वव्यवहितः अतः स्वर्गकामपदसमर्पितः काम्यमानस्वर्गविशिष्टो नियोज्योपि नियोगमेव कृतिसाध्यतयावैति न यागं कामी काम्याव्यवहितसाधनमेव कर्त्तव्यतया जानातीति नियमान्नियोगं प्रति तु यागः साधनत्वेनान्विताभिधायिशब्देन बोध्यते। नन्वाग्नेयादियागस्यावान्तरापूर्वव्यवहितत्वात् कथं परमापूर्वसाधनत्वमिति चेन्न—अपूर्वतयावान्तरापूर्ववत्क्रियाव्यवहितानन्तरकाले भवितुं योग्यत्वात् स्वर्गस्यापि फलत्वेन तथात्वेपि स्वर्गत्वेनोपस्थितस्य तस्य कालान्तरभावित्वनियमात्। न च परमापूर्वत्वेनास्यापि कालान्तरभावित्वनियम इति वाच्यम्। परमापूर्वस्यापि दुरितापूर्वस्य क्रियानन्तरमेव दर्शनात् तदुक्तं गुरुमाग्नेयादेः परमापूर्वसाधनत्वं परमापूर्वस्यापूर्वतयावान्तरापूर्ववत्क्रियानन्तरभावित्वार्हत्वात्। ततो योग्यतया परमापूर्वसाधनत्वेन शक्यते शब्देन बोधयितुमिति न त्वत्रान्विताभिधानानुपपत्तिरिति। एवं यागस्य अपूर्वं

प्रति स्वर्गकामिनियोज्यस्य यागे नियोग इति विषयत्वेनाप्यन्वयः शब्देन बोध्यते । विषयत्वं च ज्ञप्तिप्रतिबन्धित्वम् । न च परमापूर्वस्य स्वर्गसाधनत्वे तच्छेषतया प्राधान्यं भज्येतेति वाच्यम् । तदुपस्थितौ हि स्वर्गसाधनत्वमपेक्षते लिङादिवाच्यत्वं तु कार्यत्वेनैव स्वर्गमपि स्वप्राधान्यार्थमेव गर्भदासपोषणमिव स्वामी करोतीति न प्राधान्यप्रच्युतिः । यागश्च कर्तृव्यापारगोचरतया स्वर्गं प्रति करणमेव । तच्च करणं नियोगेन आक्षिप्यते । फलकरणीभूतस्यैव नियोगविषयत्वादेतदेव चौपादानिकमित्युच्यते । एवं नियोगविषयत्वसिद्ध्यर्थमेव तत्करणत्वमप्युपादानेन लभ्यते । ननु यागस्य स्वर्गसाधनत्वायोग्यत्वे कथं स्वर्गं प्रति करणत्वमपि तदभावे च कथं अपूर्वविषयत्वं फलकरणीभूतस्यैव अपूर्वविषयत्वात् अपूर्वविषयत्वाभावे च कथमपूर्वकरणत्वं विषयत्वनिर्वाहायैव तत्करणत्वाङ्गीकारादिति भवेदेवं यद्यपूर्वं कल्प्यं स्याल्लिङादिना च प्रत्येकमवगमिते विषयाद्यन्वितेऽपूर्वे तद्व्यवहिततया यागस्य फलसाधनत्वायोग्यत्वात् । ज्वालाव्यवहितकाष्ठादेरिवौदनं प्रति स्वर्गकरणत्वं युज्यत एवातो विषयत्वाद्यन्वयोपि सुलभ एव । ननु फलकरणत्वे ज्ञाते करणीभूतधात्वर्थावच्छिन्नतया लिङ्गादिना नियोगो बोधनीयः । बोधिते च तस्मिन्ननुपपत्तिलक्षणोपादानेन यागस्य करणत्वबोध इत्यन्योन्याश्रय इति चेन्न–अन्विताभिधानाभिधेयापर्यवसानाधीनकल्पनारूपोपादानतः फलकरणत्वसिद्धेः लिङादिर्हि विषयान्वितमेव नियोगमभिधत्ते विषयत्वप्रतीतिश्च प्रति संहितकरणत्वस्य यागादेरेव भवति । अतो न अन्योन्याश्रयः । नन्वेवमपि कथं नित्यापूर्वस्य नियोज्यकार्यत्वं तस्याफलसाधनत्वात्कथं वा यागस्य नियोगविषयत्वं फलकरणत्वाभावादिति चेन्न—काम्यवाक्ये लिङादिवाक्यस्य तस्य कृतिसाध्यत्वेन धात्वर्थविषयत्वेन च व्युत्पन्नत्वेन अन्यत्रापि तथात्वादिति तदेतदाह–स्वगोचरस्येप्सितसाधनत्वमिति । **स्वस्य गोचरो विषयो यो धात्वर्थः तस्येष्ट-**

स्वर्गकरणत्वं विज्ञापयदाक्षिपद्यत्प्रेरकं प्रवर्त्तकं तत्कार्यमित्यर्थः । प्रसह्य प्रवर्त्तकवाद्यादावतिव्याप्तिवारणाय आद्यविशेषणं स्वविषयेष्टसाधनत्वबोधकप्रमाणेऽतिव्याप्तिवारणाय प्रवर्तकमिति । न चैतास्मिँल्लक्षणे धात्वर्थेऽतिव्याप्तिः तस्य स्वस्यैव हितकरणत्वेन स्वगोचरेप्सितसाधनत्वाभावादिति ॥ १३२ ॥

एवं नियोगाकारेण तल्लक्षणमभिधाय कार्याकारेणापि तल्लक्षणमाह—

**याऽनन्यमुद्दिश्य कृतिः प्रवृत्ता**
**तयैव यद्व्याप्यतया प्रतीतम् ।**
**तदेव कार्यं कथयन्ति केचि-**
**द्विचक्षणाः कार्यनिरूपणायाम् ॥ १३३ ॥**

यानन्यामिति । अन्यो न भवतीत्यनन्यस्तं स्वमुद्दिश्य या कृतिस्तयैव व्याप्यतया विशिष्टतया विषयतया यत्प्रतीयते तदेव कार्यमिति विचक्षणाः कथयन्तीत्यर्थः । अनन्योद्दिष्टकृतिव्याप्यं कार्यमिति लक्षणार्थः । धात्वर्थव्यावृत्त्यर्थमनन्येति । धात्वर्थो हि नियोगोद्देश्येन प्रवृत्तकृतिव्याप्यः नियोगस्यैव फलसाधनतया प्रथमं कृतिसाध्यतयावगमादवगते च तथा तस्मिन् तस्याभावार्थतया साक्षात्कृतिसाध्यत्वायोगात्तद्विषयं धात्वर्थं तदर्थं साधयतीति धात्वर्थोन्योद्दिष्टकृतिव्याप्य एवेति भवति तद्व्यावृत्तिः ॥ १३३ ॥

ननु कार्यमपि प्रवर्त्तकत्वात्कृतेः पूर्वं सिद्धमेव रागादिवत्प्रवर्त्तकं वक्तव्यम् । तथाच कृतिव्याप्यत्वमेव नास्ति कुतोऽनन्योद्दिष्टकृतिव्याप्यत्वं तत्राह

**भूत्वा रागः कारणं पुंप्रवृत्ते-**
**र्नैवं कार्यं कार्यरूपं विहाय ।**

रूपेणान्येनेष्यते ऽस्या निमित्तं
भिन्दन्त्येवं रागकार्ये बहुज्ञाः ॥ १३४ ॥

भूत्वेति । यथा रागो भूत्वा जनित्वा पुंप्रवृत्तेः कारणमेवं कार्यं कार्यरूपं साध्यत्वाकारं विहायान्येन सिद्धेन रूपेणास्याः प्रवृत्ते-र्निमित्तमिति नेष्यते इति बहुज्ञाः प्रवर्त्तकत्वविषये एवं कार्यं रागं च भिन्दन्ति पृथक्कुर्वन्तीत्यर्थः। रागो हि सिद्ध एवान्यार्थं प्रवर्त्तक इतिसर्वसंमतं कार्यं तु नैवम्, तद्धि स्वसिद्धये पुरुषं प्रवर्त्तयति नान्यार्थं स्वयं सिद्धं चेत्किमिति पुरुषं प्रवर्त्तयेत् पुरुषो वा किमिति प्रवर्त्तेत । अतस्तस्य कार्याकारेणैव प्रवर्त्तकत्वमित्य-स्त्येवानन्योद्दिष्टकृतिव्याप्यत्वं प्रवर्त्तकत्वं सामान्यतोदृष्टं च लिङ्ग-युक्तिविरुद्धमिति भावः ॥ १३४ ॥

नन्वस्तु विधिविभक्तिमद्वेदान्तवाक्यानां सोऽन्वेष्टव्य इत्येवमा-दीनां कार्यशेषतया प्रामाण्यं तद्विकलसत्यादिवाक्यानां तु कथं कार्यशेषो भवति। न हि व्युत्पत्तिरविद्यमानमप्यर्थमानीय प्रयच्छति। न वाऽ पौरुषेयवेदस्याप्रामाण्यमुचितमित्याशङ्क्य तस्यापि व्युत्पत्त्यनुरोधेन विधिविषयज्ञानविषयसमर्पकतया कर्त्रात्मस्तावकतया वा कार्यपरत्वं वक्तव्यमिति व्युत्पत्तिसिद्धार्थानुवादपूर्वकमाह—

आवापोद्वापहेतोः पदमिदमुकस्याभिधाने समर्थं
स्वोत्पत्त्यैवेति शक्तिप्रतिनियममिमं पार्श्ववर्त्ती तटस्थः।
जानात्यालोच्य भूयो नयनिपुणमतिर्भागशः कार्ययुक्ते
वस्तुन्येतस्य हेतोरुपनिषदखिला कार्यशेषे प्रमाणम्।१३५।

आवापेति । आवापः-पदान्तरप्रक्षेपः, उद्वापः-प्रयुक्तपदस्योद्धारः, नयनिपुणमतिः पूर्वोक्तन्यायानुसंधानधीरः समीपवर्त्ती तटस्थो

व्युत्पित्सुः गामानयाश्वमानयेत्यादिप्रयोगेषु पदानामावापोद्वापाभ्यां भूयो भूय आलोच्य परामृश्येदं गवादिपदममुकस्य कार्यान्वितस्य गवार्थस्याभिधाने स्वोत्पत्त्यैव पुरुषेच्छां विना स्वभावत एव समर्थमिति भागशः प्रतिपदं कार्ययुक्ते वस्तुनि गवादौ शक्तिप्रतिनियमं प्रतिनियतशक्तिं जानाति यत् एतस्य हेतोरेतस्माद्धेतोरखिलोपनिषद् कार्यशेषे प्रमाणमिति सम्बन्धः ॥ १३५ ॥

ननु नियोगाख्यकार्यस्य मानान्तराप्रसिद्धत्वात्कथं तत्र लिङादि पदव्युत्पत्तिः । तां विना च कथं तस्य शब्दबोध्यत्वं ततः कथमुपनिषदां कार्यशेषत्वमित्याशङ्क्यादौ वृद्धप्रभाकरमतानुसारेण व्युत्पत्तिं दर्शयति—

**आज्ञादिभेदेऽप्यनुवर्तमाने**
**प्रवृत्त्यभावस्य विरोधिमात्रे ।**
**लिङादिशब्दस्य स वेत्ति शक्तिं**
**प्रवर्त्तकाख्याविषयत्वयोग्ये ॥ १३६ ॥**

आज्ञादीति । उत्कृष्टस्य निकृष्टं प्रति प्रेषणमाज्ञा । आदिपदेन याच्ञादिकं नियोगश्च गृह्यते । स व्युत्पित्सुः आज्ञादिरूपेण परस्य व्यावृत्तेष्वर्थेष्वनुवर्त्तमानेनुस्यूते प्रवर्त्तकाख्याविषयत्वयोग्ये प्रवर्त्तकशब्दवाच्यप्रवृत्त्यभावस्य विरोधिमात्रे प्रवर्त्तकत्वसामान्याकारे लिङादिशब्दस्य शक्तिं वेत्तीति सम्बन्धः । एवं किल वृद्धप्राभाकरा वदन्ति लोके आज्ञादयः प्रवर्त्तका दृश्यन्ते वेदे तु नियोगः, तेषु चानुगतप्रवर्त्तकत्वसामान्ये लिङादीनां व्युत्पत्तिर्गृह्यते सामान्यशक्तेन च शब्देन व्यक्तय आज्ञादयो नियोगश्चापर्यवसानेन लभ्यन्ते । विशेषं विना सामान्यापर्यवसानादतो नियोगस्यापूर्वत्वेपि न शब्दार्थत्वानुपपत्तिरिति ॥ १३६ ॥

नन्वाज्ञादीनां परस्परव्यवृत्तानामनुगतप्रवृत्तिहेतुत्वमनुचितम्, न ह्याज्ञादिष्वनुगतेष्वनुगतप्रवृत्तिप्रयोजकमनुगतानतिप्रसक्तं किञ्चिद् दृश्यते। लिङादिबोधितत्वमनुगतमस्तीति चेन्न—अर्हाद्यर्थेऽपि तस्य गतत्वाद्तस्तेषु प्रवर्त्तकत्वाभावात्कथं तत्र व्युत्पत्तिरित्यरुच्या प्रकारान्तरेण व्युत्पत्तिं वक्तुं केचिल्लोकवेदयोरुभयत्रापि नियोगमङ्गीकुर्वन्तीत्याह—

**अन्ये वदन्ति निरुपाधिनियोगरूपं**
**वेदे भवत्यपुरुषप्रभवे स्वतन्त्रम्।**
**लोके पुनः पुरुषधीरचितेषु कार्यं**
**सोपाधिकं तदिति कारणतो वचःसु ॥ १३७ ॥**

अन्ये वदन्तीति। अन्ये वेदे नियोगस्वरूपं निरुपाधि आज्ञाद्युपाधिशून्यमत एव स्वतन्त्रमनवच्छिन्नमिति वदन्तीति सम्बन्धः। अत्र हेतुत्वेन वेदं विशिनष्टि अपुरुषप्रभव इति। अपौरुषेयत्वाद्वेदस्य वक्तृपुरुषधर्मा आज्ञादयो न सन्तीत्यर्थः। लोके पुनः कथं भूतं नियोगस्वरूपमित्यत आह—लोके पुनरिति। लोके पुनर्वचःसु तत्कार्यं सोपाधिकमिति सम्बन्धः। पुनःशब्दो विशेषद्योतकः लौकिकनियोगस्य सोपाधिकत्वे हेतुमाह—कारणत इति। पौरुषेयत्वादित्यर्थः। न चायं हेतुरसिद्ध इत्याह-पुरुषधीरचितेष्विति। उपलभ्यविरचितत्वस्यैव पौरुषेयत्वाल्लोके पुरुषधर्म उपाधिः संभवतीत्यर्थः ॥ १३७ ॥

ननु लोके कोऽसावुपाधिः कथं वा तत्र लिङादीनां शक्तिग्रह इत्याकाङ्क्षायामाह—

**आज्ञा याच्ञाद्युपाधिप्रणिपतितवपुः साधनेहानुबद्धं**
**विज्ञातोपायभावं विषयमनुसरत्पौरुषेयीषु वाक्षु।**

**वेदे कर्तृस्थरागाद्युपाधिविरहितं कर्तृशून्ये ततोऽस्मि-
न्सर्वत्रैकस्वभावस्थितवपुषि भवेल्लब्धशक्तिर्लिङादिः १३८**

आज्ञेति। कार्यं पौरुषेयीषु वाक्षु आज्ञायाच्ञाद्युपाधिप्रणिपतितवपुः साधनेहानुबद्धम्। आज्ञा—पूर्वोक्तैव। याच्ञाऽप्रकृष्टस्य उत्कृष्टं प्रति स्वाभिलषितप्रार्थना। आदिपदेन निमन्त्रणादिकं गृह्यते। त एव चोपाधयस्तत्प्रणिपतितं तदवच्छिन्नं वपुः स्वरूपं यस्य तादृशंयत्साधनं तद्रूपा या ईहा आनयनादिचेष्टा सानुबन्धो विषयो यस्य तत् तथोक्तम् आज्ञाद्युपहितानयनादिविषयकमित्यर्थः। अथवेहाशब्देनेच्छोच्यते पदद्वयं चैतदाज्ञाद्यवच्छिन्नस्वरूपं ममेदं कर्त्तव्यमिति साधनेच्छाविषयश्चेत्यर्थः। विज्ञातोपायभावमवगतहितसाधनताकं विषयं धात्वर्थमनुसरद्विषयीकुर्वत् कर्तृशून्ये वेदे कर्त्तुरभावात् कर्तृस्थरागाद्युपाधिरहितं रागो याच्ञा आदिपदेनाज्ञादिकं गृह्यते। तल्लक्षणोपाधिविरहितं यतः अतोऽस्मिन्नियोगे सर्वत्र लोकवेदयोरेकस्वभावेनैकाकारेण स्थितं वपुर्यस्य तस्मिन्नियोगत्वावच्छिन्ननियोगे लिङादिः लब्धशक्तिर्ज्ञातशक्तिर्भवेदित्यर्थः। लोकेऽपि हि क्रियातिरिक्तो नियोगो वाच्यः। अन्यथा पचतीत्युक्ते यावत्प्रतीयते तावदेव पचेदित्यत्रापि प्रतीयेत। नच तत्राज्ञाद्यतिरिक्तः प्रतीयत इति वाच्यम्। व्यावृत्तस्य तस्य लिङर्थत्वानुपपत्तेः। स च नियोगो न केवलधात्वर्थविषयः आज्ञाद्युपहितानयनादिधात्वर्थविषयकः कर्तृचिकीर्षाविषयश्च तथैवानुभवादेवमपि न केवलमाज्ञाद्युपहितधात्वर्थविषयक। किन्तु मानान्तरेण अवगतेष्टसाधनमेव धात्वर्थमनुसरति तदभावे तत्र नियोगानवगमादतो लोके आज्ञाद्युपहितेनावगतेष्टसाधनभावविषयेण नियोगोऽवच्छिद्यते। अपौरुषेयवेदे आज्ञादेरभावात् धात्वर्थस्य पूर्वमिष्टसाधनत्वानवगमाच्च। न तद्विशिष्टधात्वर्थावच्छिन्नो नियोगः किन्तु केवलधात्वर्थावच्छिन्न एव। तथाचोभयत्रापि नियोगसत्त्वात् एषु नियोगे

ष्वनुस्यूतनियोगत्वसामान्याकारेण उपस्थितेषु लिङादिशक्तिषु ज्ञातासु तत्र शक्तिर्गृह्यते सकलव्यक्तिज्ञानस्य शब्दं विनाऽसंभवात् किन्तु कासु चिद्व्यक्तिषु ज्ञातासु तत्र सामान्याकारेण शक्तिर्गृह्यते इत्येवं सम्मतं तच्च प्रकृतेपि सम्भवति। अस्तु वात्रापि गोत्रादाविवानुगतनियोगत्व एव व्युत्पत्तिः। व्यक्तिस्तु पूर्ववदपर्यवसानलभ्येति भावः ॥ १३८ ॥

नन्वेतदनुपपन्नं यल्लोकेपि धात्वर्थातिरिक्तो नियोग इति तत्र प्रमाणाभावात् प्रयोजनाभावाच्च। नचैवं सति पचति पचेत् इत्यनयोरर्थभेदानुभवो न स्यादिति वाच्यम्। एकत्र पाकादेः कृतिसाधनत्वावगमादपरत्र तदभावात्। न च पाकादेः कृतिसाधनत्वप्रत्ययो नियोगविषयः वेद इव कालान्तरभाविफलविशिष्टनियोज्यसमभिव्याहाराभावेन धात्वर्थस्यैवात्र कृतिसाध्यत्वप्रत्ययोपपत्तेः। तस्मादियं व्युत्पत्तिर्न सम्भवतीत्यरुच्या गुरुसम्मतमाह—

**अन्ये भिन्नस्वभावं विविधमभिदधत्यानुरूप्येण कार्यं**
**लोके धात्वर्थरूपं श्रुतिवचसि पुनस्तन्नियोगाख्यमेव।**
**संमुग्धे तत्र शक्तिं शिशुरयमवगम्याऽऽदितो न्यायचक्षुः**
**पश्चाद्वेदैकवेद्यं वदति लिङिति च प्रेक्षते निश्चयेन ॥१३९॥**

अन्य इति। अन्ये ऽनुरूपेण तत्तत्फलानुगुण्येन द्विविधं भिन्नस्वभावं कार्यमभिदधति कथयन्तीति सम्बन्धः। द्वैविध्यमेवाह—लोके इति। गवानयनादिवाक्ये धात्वर्थरूपमेव तदतिरिक्ते प्रमाणप्रयोजनयोरभावाच्छ्रुतिवचस्सु तत्कार्यं नियोगाख्यमेव स्थायिनियोग एव न धात्वर्थः। तस्य कामिनियोज्यकर्त्तव्यत्वानुपपत्तेरित्यर्थः। एवं लोके धात्वर्थ एव कार्यं वेदे तु तदतिरिक्तमिति अभिधाय तत्र व्युत्पत्तिग्रहप्रकारमाह—संमुग्ध इति। अयं शिशुः व्युत्पित्सुः सम्मुग्धे तत्राविवक्षि-

त्वविशेषे कार्यत्वेनोपस्थिते कार्ये। एतच्चाभिमतनियोगैकव्युत्पत्तेः प्राथमिकव्युत्पत्तिविरोधपरिहारायोक्तं लिङादिपदस्य शक्तिमवगम्य पश्चान्न्यायचक्षुर्वक्ष्यमाणन्यायं पश्यन् वेदैकवेद्यं वैदिकनियोगमेव लिङ् इति वदति। लौकिकं तु कार्यलक्षणया बोधयतीति निश्चयेन जानातीत्यर्थः ॥ १३९ ॥

ननु कोऽसौ न्यायो यद्बलात् प्रथमावगतधात्वर्थविशेषं विहाय अलौकिककार्यं लिङर्थ इति निश्चीयते कथं वानुपस्थिते नियोगे शक्तिरपि गृह्यत इत्याशङ्क्याह—

**धात्वर्थाख्यानशक्तो यदि भवति गुणाद्वर्तितुं वैदिकेऽयं**
**संबन्धाज्ञानहेतोरनलमथ पुनर्वैदिके शक्तिमान् स्यात्।**
**तत्संबन्धात्क्रियामप्यभिवदितुमलं लक्षणावृत्तितोऽयं**
**लिङ्शब्दस्तेन कार्ये श्रुतिवचनगते शक्त इत्यध्यवस्येत्**
**॥ १४० ॥**

धात्वर्थेति। गुणादमुख्यया वृत्त्या लक्षणया अयं लिङ्शब्दः अनलम- समर्थः। यदि पुनरयं धात्वर्थाख्यानशक्तो भवति तर्हि वैदिकनियोगे गुणाद्वर्त्तितुमनलमिति सम्बन्धः। तत्र हेतुः—सम्बन्धाज्ञानहेतोरिति। वैदिक- नियोगस्य मानान्तरागोचरतया वाच्यार्थसम्बन्धित्वेनापरिज्ञा- नादित्यर्थः। अथ यदि पुनरयं वैदिके शक्तिमान् स्यात् तदा तस्य नियोगस्य सम्बन्धाल्लक्षणावृत्तितः क्रियां धात्वर्थमप्यभिवदितुमलं नियोगसम्बन्धित्वेन धात्वर्थस्य ज्ञातत्वाद् धात्वर्थं लक्षणया वदेदित्यर्थः। अयम्भावः। यदि हि प्रथमावगतसामान्यव्युत्पत्तिप- र्यवसानाय लौकिकमेव कार्यं लिङाद्यर्थो मुख्यो भवेत् तदा वैदिक- मपि कार्यं लिङादिवाच्यम् उत लक्ष्यम्। नाद्यः—एकस्य शब्दस्या- नेकार्थत्वानुपपत्तेः। न द्वितीयः—वैदिककार्यस्य मानान्तराप्रसिद्धस्य

वाच्यार्थसंबन्धज्ञानाभावात् । यदि च प्रथमं कार्यमात्रावगतव्युत्पत्ति-लिङादिशब्दो वैदिककार्यमभिदध्यात्तदा नायं दोषः । धात्वर्थस्य वाच्यार्थनियोगसम्बन्धितया शब्देनावगतत्वात् । न च यागादिक्रियाविशेषस्यैतस्यापि कार्यसम्बन्धित्वेन शब्दादवगतेः कथं स्नानभुज्यादिक्रिया तेन लक्ष्यत इति वाच्यम् । अपूर्वं हि यागादिक्रियया सम्बध्यमानं क्रियात्वेन सम्बध्यते । क्रियात्वं च स्नानादिक्रियायामप्यतः परम्परासम्बन्धात् स्नानभुज्यादिक्रियायामपि लक्षणा अतो वैदिकमेव कार्यं लिङर्थ इत्यर्थः । यत्तूक्तमनुपस्थितत्वात् कथं तत्र व्युत्पत्तिरिति तदुपसंहारव्याजेन पराकरोति तेनेति । वैदिके वाच्यार्थसम्बन्धापरिज्ञानमितरत्रवत्तज्ज्ञानं तच्छब्दार्थः कामिनियोज्यसमभिव्याहाराख्यतर्केणोपस्थिते वैदिकनियोगे शक्तिरित्यध्यवस्येत् तर्कस्य चाप्रमाणत्वात् न तस्य मानान्तरगम्यत्वमिति भावः ॥ १४० ॥

ननु लोके येषां लिङादियुक्तानां शब्दानां कार्यपरत्वं निरधारि तेषां तत्परत्वेपि न सर्वेषामपि तत्परत्वं लिङादिशून्यानामपि 'राजाऽऽयाति महारथ' इत्यादिप्रयोगाणां दर्शनात् इत्याशङ्क्योक्तं न्यायं सर्वत्राप्यतिदिशति—

**एवं शब्दान्तराणां नयनिपुणमतिः शक्तिवित्स क्रमेण**
**प्रक्षेपोद्धारदर्शी भवति कतिपयैर्वासरैस्तत्र तत्र ।**
**तस्मात्कार्यान्विताथे सकलमपि पदं शक्तिमद्बुध्यमानो**
**भूताद्यर्थप्रतीतिं प्रति विमुखमनाः शास्त्रतः स्यान्मनुष्यः**
**॥ १४१ ॥**

एवमिति । नयनिपुणमतिर्व्युत्पित्सुर्मनुष्यस्तत्र तत्र तस्मिन् तस्मिन् प्रयोगे प्रक्षेपोद्धारदर्शी सन् कतिपयैर्वासरैर्लिङादिसमभिव्याहाररहितशब्दान्तराणामपि कार्यपदमध्याहृत्य एवं कार्यान्वि-

तार्थे शक्तिविद्भवतीति सम्बन्धः फलितमाह—तस्मादिति। यस्माल् लोके सर्वाण्यपि पदानि कार्य एव व्युत्पन्नानि तस्मात् सकलमपि पदं कार्यान्वितार्थे शक्तिमदिति बुध्यमानः सन् शास्त्रतो वेदात् भूतार्थप्रतीतिं प्रतिविमुखमना निराशो भवेदित्यर्थः। अयमर्थः। लोके हि कार्यपदयुक्तान्येव वाक्यानि व्युत्पत्तिकाले भूयांसि दृश्यन्ते। इतराणि त्वल्पानि। कार्यपदयुक्तवाक्ये च गामानयेत्यादौ च यदा गवादिपदानामुद्धारोऽश्वादिपदानां चावापस्तद्वा कार्यविशिष्टगवादेरुद्धारं तद्विशिष्टाश्वादेश्चावापं पश्यति तदायं व्युत्पित्सुर्भूयसामनुग्राह्यत्वं प्रयोजकैक्यन्यायं चानुस्मरन् क्रियापदासहचरितानामपि पदानां तद्युक्तपदानामिव क्रियापदमध्याहृत्य कार्यान्वितार्थे शक्तिविद् भवतीति शास्त्रतः स्वातन्त्र्येण भूतार्थप्रतीतिं प्रति निरासो भवतीति ॥ १४१ ॥

एवं कार्यान्विते व्युत्पत्तिबलात् सर्वेषामपि पदानां क्रियापदाध्याहारेणापि कार्यपरत्वं वक्तव्यमित्युक्तं सम्प्रति केवलभूतार्थे व्युत्पत्तिग्राहकमानाभावादपि कार्यपरत्वं वक्तुं तत्र पदानां व्युत्पत्त्यसम्भवमाह—

**वाक्याद्भूतार्थनिष्ठाद्भवति न तु नृणां शब्दशक्तिप्रतीति-**
**लिङ्गं श्रोतृस्थबुद्धेर्न हि किमपि भवेदत्र बालोपलभ्यम् ।**
**न ह्येतत्पुत्रजन्माद्यवगतिनियतं नित्यवन्निश्चितं नो**
**यद्वक्त्रादिप्रसादक्षितितललुठनादीक्ष्यते श्रोतृदेहे ॥ १४२ ॥**

वाक्यादिति। भूतार्थमात्रविषयाद्वाक्याद् नृणां शक्तिर्न तु भवति नैव भवतीत्यर्थः। तत्र हेतुः—लिङ्गमित्यादि। हि शब्दो हेतौ यस्मात् यत्र भूतार्थवाक्यप्रयोगस्थले श्रोत्रगतवाक्यार्थबुद्धेर्बालोपलम्भनार्हं किमपि लिङ्गं न भवेन्न दृश्यते तस्मादिति सम्बन्धः। अवगते हि मध्यमवृद्धवाक्यार्थज्ञाने तत्र बालस्य व्युत्पत्तिर्भवति । अनुपस्थिते

ऽर्थे व्युत्पत्तिग्रहणानुपपत्तेः । न च 'राजाऽऽयाति महारथ' इत्यादि-वाक्यं श्रुतवतः काचित् प्रवृत्तिर्निवृत्तिर्वा सम्भवति । न चोदासीन-नरसमवायिवाक्यार्थज्ञाननियतं किञ्चिल्लिङ्गमस्ति । न च वाक्यं स्वश्रोतरि वाक्यार्थज्ञानमुत्पादयति वाक्यत्वात् मया श्रूयमाण-वाक्यान्तरवत् इति तज्ज्ञानमनुमेयमिति वाच्यम् । अव्युत्पन्नश्रुत-वाक्ये व्यभिचारात् बुद्धेर्विषयविशेषानिश्चयाच्च । न च राजाऽऽया-तीति वाक्यं श्रुत्वा राजदर्शने प्रवर्तमाना दृश्यन्ते अतः प्रवृत्त्या वाक्यार्थविशेषज्ञानमनुमेयमिति वाच्यम् प्रवृत्तिर्हि कार्यताज्ञाना-दिष्टसाधनत्वावगमाद्वा भवन्ती तदेवानुमापयेत् । न च राजागम-नज्ञानं तयोरन्यतरत् । न च राजागमनस्येष्टसाधनत्वं ज्ञायत इति कल्प्यमिति वाच्यम् । तत्कल्पनेपि तस्य वाक्यस्य तत्र सामर्थ्य-कल्पनानुपपत्तेः । लिङादिसमभिव्याहृतस्यैव कार्यतावगमे श्रेयः—साधनत्वावगतौ च समर्थत्वात् । किञ्च यथा क्रियावाक्यश्रवणसम-नन्तरमेव प्रवृत्तिर्नैवं सिद्धबोधिवाक्यश्रवणाद् भवति । अतो विल-म्बितायां प्रवृत्तौ मानान्तरादर्थोपस्थितिशङ्का सम्भवान्न सिद्धबोधि-वाक्यस्य प्रवर्त्तकज्ञाने हेतुता शक्यग्रहा । तस्माल् लिङ्गाभावाद्वाक्ये-तरकारणपरिशेषाभावाच्च न सिद्धार्थमात्रे व्युत्पत्तिरिति भावः ।

ननु सिद्धार्थज्ञानमात्रे लिङ्गाभावेपि क्वचित् तत्सम्भवति दृश्यते खलु पुत्रस्ते जातः पुत्रस्ते मृत इत्यादि वाक्यं श्रुतवतो मुखविकासक्षिति-तललुण्ठनादिपुत्रजन्मतन्मरणवाक्यार्थज्ञानलिङ्गमिति चेत् तत्राह—नह्येतदिति । पुत्रादिबोधकवाक्यश्रोतृदेहे वक्त्रादिप्रसादक्षितितल-लुण्ठनादि यदीक्ष्यते एतन्नो ऽस्माकं नित्यवन्नित्यमव्यभिचारेण पुत्रजन्ममरणाद्यवगतिनियतं सहचरितमिति निश्चितं न हीति सम्बन्धः । वक्त्रादीत्यत्रादिपदेन देहावयवान्तरं गृह्यते प्रसादः प्रसन्नता विशिष्ट-पुलकोद्गमश्च क्षितितललुण्ठनादीत्यादिपदेन रोदनादिर्गृह्यते । यद्यपि पुत्रस्ते जात इत्यादि वाक्यश्रवणानन्तरम् पितुर्मुख-

विकासादिकं दृश्यते तथापि न तत्पुत्रजन्मादिज्ञानैकजन्यसुखादि-नियतं क्षेत्रादिप्राप्तिपरिहारादिनिमित्तसुखदुःखयोरपि तत्सत्त्वादतः सुखहेतुपरिशेषासंभवान्न पुत्रादिपदव्युत्पत्ति रिति भावः ॥ १४२ ॥

ननु यथा भवन्मते प्रथमं लिङादेर्धात्वर्थकार्यमात्रपरत्वेपि वेदे नियोगपरत्वं कल्प्यते एवमस्मन्मते पि लौकिकसिद्धबोधि-वाक्यानां कार्यान्वितव्युत्पत्तावपि वेदान्तानां स्वप्रधानब्रह्मपरता किं न स्यादित्याशङ्कामुपसंहारव्याजेन परिहरति—

**तस्मादाध्वं निराशाः श्रुतिशिरसि न तस्यास्ति निष्पन्नरूपे**
**प्रामाण्यं कार्यशून्ये कथमपि च परब्रह्मणि स्वप्रधाने ।**
**भूतं भव्यप्रधानं भवति न हि पुनः स्वप्रधानं कदाचि**
**च्छास्त्रस्थाः शब्दशक्तिस्थितिनिपुणधियो विस्तरादेवमाहुः**
**॥ १४३ ॥**

तस्मादाध्वमिति । तस्माच्छ्रुतिशिरसि निराशाः श्रुतिशिरांसि ब्रह्मणि स्वप्रधाने प्रमाणमित्यर्थे निराशाः सन्त आध्वं वर्त्तध्वमित्यर्थः । कुत इति चेत्तत्राह—न तस्येति । तु शब्दो यस्मादर्थे यस्मात्तस्य श्रुतिशिरसः निष्पन्ने ब्रह्मणि न प्रामाण्यं तस्मादिति संबन्धः । कार्य-शेषे ब्रह्मण्यप्यप्रामाण्यशङ्कां निराचष्टे—कार्येति । कार्यशून्ये कार्यलु संसर्गिण्यत एव स्वप्रधाने स्वयमेव प्रधानं तस्मिन्वर्णितः खो-लिङादिपदस्य नियोगवाचकत्वे हेतुः । नचात्र कश्चित्तादृशो हेतुः कार्य-शेषतयापि वेदान्तप्रमाण्योपपत्तेः । अतोऽत्र न क्लृप्तव्युत्पत्तिपरित्यागः कर्त्तव्य इति भावः । किञ्च भूतोपदेशत्वादपि वेदान्तगोचरब्रह्मणो भव्यकार्यपरत्वमेवोचितं तथैव खलु शबरस्वामिप्रभृतयो वदन्ति भूतभव्यसमुच्चारणे भूतं भव्यायेति तदाह—भूतं भव्यप्रधानमिति हि । यस्मा-च्छब्दशक्तिस्थितिर्मर्यादा तस्या निपुणधियः अस्य शब्दस्यै-

तावत्येव शक्तिरिति शक्तिमर्यादानिर्णये निपुणमतयः शास्त्रस्थाः शास्त्रार्थनिष्णाता विस्तरात्सप्रपञ्चमेवाहुः। तस्मादिति पूर्वेण सम्बन्धः। एवंशब्दार्थमाह—भूतं भव्येति। तस्मान्न वेदान्तानां स्वप्रधानब्रह्मपरत्वमिति भावः॥ १४३॥

इदानीं पूर्वपक्षमुपसंहरति—

**तस्मादसंगतमिदं प्रतिभाति यन्मे**
**वाक्यप्रमाणकमुदीरितमद्वयत्वम्।**
**इत्येवमेष मम बुद्धिपथं विरोधः**
**प्राप्तः प्रभो परिहरैनमनुग्रहाय॥ १४४॥**

तस्मादिति। यस्मात्पूर्वोक्तैर्हेतुभिर्वाक्यं न सिद्धब्रह्मपरं यस्माच्च कार्यपरं यतश्चान्यपरत्वात् भेदादिग्राहकप्रत्यक्षादेर्न बाधको वेदान्तः तस्मादिदमसङ्गतं प्रमाणयुक्तिशून्यमिव मे भातीत्यर्थः। इदंशब्दार्थमाह—यदित्यादिना। अद्वयत्वं जीवपरयोरैक्यं तच्च वाक्यप्रमाणकमिति पक्षे त्वच्छ्रीमद्भिरुदीरितमिदमसङ्गतमिति सम्बन्धः। इतिशब्दः पूर्वपक्षसमाप्तिं द्योतयति। स्वस्यैतादृशपूर्वपक्षकरणेनाचार्यस्य व्युत्थितत्वबुद्धिर्माभूदित्याह—एवमिति। उक्तप्रकारेणैष विरोधो ममबुद्धिपथं प्राप्तः बुद्धौ प्रतिभाति हे प्रभो स्वामिन् ममानुग्रहाय एनं विरोधं परिहर इत्यर्थः। अनायासेन परिहारसामर्थ्यं गुरोः प्रभो इत्यनेन द्योतयति॥ १४४॥

उच्यते—अस्ति तावत्सदेव सोम्येदमग्रमासीदेकमेवाद्वितीयं तत्सत्यं स आत्मा तत्त्वमसीत्यद्वैतोपक्रमोपसंहारादिसहिता श्रुतिरस्ति च येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ इतिन्यायः। न च प्रत्याक्षादिविरोधादद्वैतोपक्रमादिरेव बाध्यत इति वाच्यम्। तस्य द्वितीयाध्याये निरसिष्यमाणत्वात्। किञ्च वाच्ययोरवैक्यं

बाध्यते न लक्ष्ययोरित्यभिप्रेत्य करतलस्थबिल्वफलवत्साक्षात्कृतत्रय्यन्तराद्धान्त आचार्यः प्रश्नक्रमेण प्रतिवचनं संदित्सुरखण्डवाक्यार्थं निरस्तनिखिलोपसर्गं मन्वानः पदद्वयवाच्यार्थयोस्तादात्म्यरूपवाक्यार्थे तदुक्तं दूषणं तन्मनः परितोषायाङ्गीकरोति—

सत्यं यदाह गुरुमान्यदिवाक्यगम्यं
संसर्गरूपमिह वेदशिरःस्वभीष्टम् ।
अस्त्येव तत्र पदयोरुभयोर्विरोधः
पारोक्ष्यसद्वयविरोधकृतस्तदानीम् ॥ १४५ ॥

सत्यमिति । गुरुमान् शिक्षितबुद्धिर्भवान् यद् दूषणमाह तत्सत्यं तथैव नचैतत्त्वन्मनः परितोषार्थैवासत्यमपि सत्यमिति ब्रवीमि किंतु विद्यमानमेव विद्यत इति वदामीत्यभिप्रेत्यायं दोषो नास्माकमखण्डार्थवादिनामित्यङ्गीकारफलमेव दर्शयति—यदित्यादिना । संसर्गरूपं वाच्यार्थयोर्जीवपरयोस्तादात्म्यम्, इह-वेदशिरःसु, संसर्गरूपं वाक्यगम्यं वाक्यप्रमेयमस्माकं यदीष्टं स्यात्तदानीं तत्र संसर्गवाक्यार्थपक्षे पदार्थयोः पारोक्ष्यापारोक्ष्यसद्वयत्वाद्वयत्वयोः परस्परविरोधकृतस्तत्त्वं पदयोर्विरोधोऽयोग्यतास्त्येव न त्वेतदस्ति अखण्डवाक्यार्थस्यैवास्माभिरङ्गीकृतत्वादिति भावः ॥ १४५ ॥

ननु पदार्थानां संसर्गः संसृष्टाः पदार्था वा वाक्यार्थ इति वाक्यार्थलक्षणमवादि तच्चोभयलक्षणमखण्डवाक्यार्थे न संभवति, ततः कथं वाक्यार्थलक्षणशून्यमखण्डं ब्रह्म वाक्यार्थः स्यादन्यथा तल्लक्षणस्याव्याप्तिप्रसङ्गादित्याशङ्क्याह—

यत्कर्मकाण्डनिपुणैरुदितं पुरस्ता-
द्वाक्यार्थलक्षणमदः पुनरत्र नेष्टम् ।

भेदादिवर्जितमखण्डमुशन्ति यस्मा-

च्छ्रीवादरायणमतानुगता महान्तः ॥ १४६ ॥

यत्कर्मकाण्डेति। पुरस्तात्पूर्वतन्त्रे कर्मकाण्डे निपुणैर्वार्तिककार-प्रभृतिभिर्यद्वाक्यार्थलक्षणं भेदगर्भितमुक्तमदस्तल्लक्षणमत्र वेदान्ते नेष्टं कुतः यस्माच्छ्रीवादरायणस्य भगवतो व्यासस्य यन्मतमद्वैतं तदनु-गता तदनुसारिणो महान्तो भगवत्पादादयः भेदादिवर्जितमत्यन्त-भेदघटितसंसर्गं यद्भेदघटिततादात्म्यवर्जितमतएवाखण्डं संसर्गादि-शून्यमुशन्ति वाञ्छन्तीत्यर्थः। आचार्या हि—"संसर्गो वा विशिष्टोवा वाक्यार्थो नात्र संमतः। अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत" इति अखण्डमेव वाक्यार्थं मेनिरेऽतो भेदघटितं वाक्यार्थलक्षणमत्र नेष्यते। न चैवं सति तल्लक्षणस्य तत्राव्याप्तिः। तस्य विशेषलक्षणत्वादस्य च विशे-षान्तरत्वात्। न हि विशेषलक्षणं विशेषान्तरमनाप्नुवद् दुष्यति सामान्य-लक्षणस्यैव यावद्विशेषव्यापित्वनियमात्सामान्यलक्षणन्तु वाक्यप्रमेय-त्वमत्राप्यस्त्येव। नचाखण्डवाक्यार्थस्य विशेषलक्षणाभावः। अपर्या-यानेकपदैकप्रतिपादिकार्थमात्रस्यैव तल्लक्षणत्वादिति भावः ॥ १४६ ॥

नन्वविशेषेणोक्तमेतल्लक्षणं कथं त्वदिच्छामात्रेण विशेषपरतया नियम्यत इत्याशङ्क्य किं तत्र नियमनकारणमात्रं चोद्यते किंवा नियमेन कारणाभावात्सर्वोपि वाक्यार्थः संसर्गादिरूप एवेति तेषा-मभिप्राय इति विकल्प्याद्यस्योत्तरमाह—

भेदादिरूपमवबोधयितुं समर्थं

यद्वाक्यमस्ति तदखण्डविलक्षणार्थम्।

तल्लौकिकं भवतु वैदिकमेव वाऽस्तु

नास्माकमत्र विषये विमतिः कदाचित् ॥ १४७॥

भेदादिरूपमिति । अत्र विषये संसर्गादिरेव वाक्यार्थ इत्यस्मिन्नर्थे विमतिर्विप्रतिपत्तिः । यद्धि वाक्यं भेदगर्भं पदार्थसंसर्गादिकमवबोधयितुं शक्नोति पदार्थभेदश्च प्रमाणसिद्धः, तेन विना च विवक्षितार्थसिद्धिर्न भवति तद्गवानयनादिवाक्यं ज्योतिष्टोमादिवाक्यं चाखण्डवाक्यार्थविलक्षणं भेदगर्भमिति संसर्गादिपरमेवास्तु । यत्र तु न पदार्थभेदः । प्रमाणसिद्धो न वा वाक्यस्य तद्बोधसामर्थ्यं न वा भेदं विनानुपपत्तिस्तद्वाक्यमखण्डार्थमेव । अतः पदार्थभेदप्रमाणादिसत्त्वासत्त्वादेरेव नियामकत्वान्नियामकाभावोऽसिद्ध इति भावः । अथ वा—भवन्मतेऽपि वाक्यं सर्वमेवाखण्डार्थनिष्ठमुत यत्किञ्चित् । नाद्यः—क्वचिदपि प्रवृत्त्याद्यभावप्रसङ्गात् । न द्वितीयः—विनिगमाभावेन सर्वस्यापि संसर्गबोधकत्वप्रसङ्गादित्याशङ्क्याद्यमनङ्गीकारेण दूषयति—भेदादीति । ॥ १४७ ॥

पदार्थभेदप्रमाणादिसत्त्वतदभावादेरेव नियामकप्रमाणस्य सत्त्वान्न द्वितीयपक्षोक्तदोष इत्याह—

यद्वाक्यजातमथ वेदशिरोनिविष्टं
यद्वापि लौकिकमखण्डमपास्य नान्यत् ।
शक्नोति वस्तु वदितुं तदशेषमेव
ब्रूयादखण्डमिति तु प्रतिपादयामः ॥ १४८ ॥

यद्वाक्यजातमिति । इह लौकिकवैदिकवाक्येषु मध्ये यद्वेदशिरोनिविष्टं तत्त्वमादिवाक्यं यच्चापि लौकिकं सोऽयं देवदत्त इत्यादिवाक्यमखण्डमर्थं विहाय पदार्थभेदप्रमाणाभावादन्यद्वस्तु संसर्गादि वक्तुं न शक्नोति अखण्डमेव मुख्यसामानाधिकरण्यबलाद्वक्तुं शक्नोति तदशेषं वाक्यमखण्डमेव ब्रूयादिति तु वयं प्रतिपादयाम इति सम्बन्धः । अतस्त्वदुक्तलक्षणं विशेषपरमेवेति भावः ॥ १४८ ॥

नन्वेतदेवानुपपन्नं यद्वाक्यस्याखण्डार्थत्वं तस्य क्वचिदप्यदर्शनादित्याशङ्क्यादौ सोऽयमित्यादिवाक्ये तदुपपादयितुं तस्य प्रकारान्तरेण प्रमितिजनकत्वं निराकरोति—

सोऽयं पुमानिति हि मुख्यपदार्थयुक्त-
वाक्यार्थबुद्धिजननस्य न वाक्यमेतत् ।
ईशीत वाच्यशबलस्थपदद्वयेन
संसृष्टबुद्धिजनने पदयोर्विरोधात् ॥ १४६ ॥

सोयमिति । सोयं पुमानित्येतद्वाक्यं मुख्यपदार्थौ यौ तदेतद्देशकालविशिष्टपिण्डौ तयोर्युक्तं योगस्तादात्म्यं तद्रूपो यो वाक्यार्थः तद्विषयबुद्धिजननस्य नेशीत न समर्थं भवति कुत इतिचेत्तत्राह—वाच्येति । वाच्यौ यौ शबलौ तदेतद्देशकालविशिष्टौ पिण्डौ तत्स्थं तद्विषयं यत्पदद्वयं तदिदमात्मकं तेन संसृष्टबुद्धिजनने विरोधाद्विरुद्धार्थयोस्तादात्म्यानुपपत्तेरयोग्यत्वाद्वाक्यस्येत्यर्थः । अस्ति हि लोके सोऽयं देवदत्त इतिवाक्यं बृद्धैः प्रयुज्यमानं तत्र न तावत्पदार्थानां वैयधिकरण्येनान्वयः । प्रथमामात्रविभक्त्यन्तपदवाच्यत्वात् । नापि नीलमुत्पलमितिवद्विशेषणविशेष्यभावेन तदेतद्देशकालविशिष्टयोः पिण्डयोः गुणगुण्यादिभावाभावात् । किञ्च तत्पदार्थोपि विशेषणं विपरीतं वा । नोभयथापि पदार्थयोर्विरुद्धविशेषणद्वयविशिष्टयोस्तादात्म्यबोधानुपपत्तेः । न हि यद्विरुद्धधर्मावच्छेदेन यदुपस्थितं तत्रैव तद्वैशिष्ट्यं वाक्यसहस्रेणापि बोधयितुं शक्यं न हि रक्तोत्पलं नोलोत्पलमिति वाक्यप्रत्ययो भवति । तस्मात्सोऽयमिति वाक्यं न वाच्यार्थयोः संसर्गमवबोधयतीति भावः ॥ १४६ ॥

ननु मासूद्वैयधिकरण्येन तदेतत्पदार्थान्वयः, मा च भूद्विशेषणविशेष्यभावेन तथापि नाखण्डार्थता सिद्धति, एकस्मिन् द्वयमितिवद्

देवदत्ते तदेतत्कालद्वयवैशिष्ट्यमिति वैशिष्ट्यबोधसम्भवात्। न च तदेतत्पदाभ्यां तदेतद्देशकालयोर्देवदत्तविशेषणतयोपस्थितयोर्न देवदत्तविशेष्यत्वेनान्वय इति वाच्यम्। देवदत्ते दण्ड इति ज्ञानानन्तरं दण्डी देवदत्त इति ज्ञानवदुपपत्तेरित्याशङ्क्याह—

**एतद्धि सोऽयमितिवाक्यमखण्डनिष्ठं**
**वक्तव्यमत्र गतिरस्ति न काचिदन्या।**
**तद्देशकालमनुकृष्य स इत्यनेन**
**नायं पदार्थमुपढौकयते हि नैतत्॥ १५०॥**

एतद्धीति। हि शब्दो हेतौ यस्मादत्र वाक्येऽन्या काचिद् गतिर्नास्ति तस्मात्सोऽयमित्येतद्वाक्यमखण्डार्थनिष्ठं वक्तव्यमिति सम्बन्धः। अयम्भावः। जनकज्ञाने हि येन रूपेण पदार्थोपस्थितिस्तेनैव रूपेण तद्विशिष्टबोधो भवति दण्डविशेषणतया प्रतीतदण्डत्वस्य तद्विशिष्टदण्डिज्ञानेपि तथैव दर्शनात्। न च पुरुषे दण्ड इति पुरुषविशेष्यतया प्रतीतस्य दण्डस्य दण्डी पुरुष इति पुरुषविशेषणतया भानान्नायं नियम इति वाच्यम्। यद्विषयावच्छेदेन यस्य ज्ञानस्य यज्ज्ञानजनकत्वं तत्र जनकज्ञाने यद्विशेषणं तस्य तज्जन्यविशिष्टज्ञानेपि तथैव प्रतीतिनियमात्। न हि पुरुषे दण्ड इति ज्ञानं पुरुषावच्छेदेनापि दण्डी पुरुष इति ज्ञानजनकं विशेष्यज्ञानस्य हेतुत्वात्। अत एवानुमानदर्शननिष्णाताः पक्षविशेष्यकः परामर्शोनुमितिकारणमित्यङ्गीकुर्वते। अस्तु वान्यत्र यथा तथा शब्दे त्वयमनियम आवश्यकः। अन्यथा—कुण्डलिनं देवदत्तमानयेति प्रयोगे देवदत्तविशेषणतया कुण्डलिपदेनोपस्थितस्य कुण्डलस्य देवदत्तकुण्डलमानयेत्यपि प्रतीत्यापातात्। तथा चानेतापि कदाचित्कुण्डलमेवानीय निरपराधी भवेत्तस्माच्छब्दोपस्थितप्रकारेणैव शाब्दान्वयो वक्तव्य इति न समानाधिकरणवाक्यादेक-

स्मिन्द्वयमितिवदन्वयबोधः सम्भवतीति । ननु यद्यपि पदद्वयवाच्यस्य विरोधान्नाभेदो बोधयितुं शक्यते तथाप्येकपदलक्षणया विरोधोपशमसम्भवान्नानुपपत्तिः, न वाखण्डवाक्यार्थसिद्धरिति चेत्तत्र किं लक्षितेदंपदार्थेन तत्पदवाच्यार्थस्याभेदो बोध्यते, किं वा वैपरीत्येन तत्राद्यं दूषयति—तद्देशेति । सोऽयमिति वाक्यं स इत्यनेन पदेन तौ देशकालौ यस्य विशेषणं तद्देशकालमनुकृष्याभिधावृत्त्यानीयायं पदार्थमयमितिपदलक्ष्यार्थमेतद्देशकालोपलक्षितं नोपढौकयते ह्यभेदेन न प्रतिपादयतीत्यर्थः । एतद्देशकालोपलक्षितो हि वस्तुगत्येदानींतनः पूर्वकालीनश्च भवति । तस्याप्येतद्वृत्तिधर्माश्रयतया वाच्यार्थसम्बन्धित्वात्तत्र किमेतद्देशकालोपलक्षितेन तदानींतनेन तद्देशकालविशिष्टस्यैक्यं बोध्यते । उतेदानींतनेन । नाद्यः । एतस्य स्थायित्वासिद्धिप्रसङ्गात्तस्यैतत्कालीनाभेदबोधस्यैव स्थायित्वसिद्धित्वात् । न द्वितीयः । तद्देशकालयोरिदानीमभावेन तद्विशिष्टस्याप्यभावात्तदभेदबोधानुपपत्तेः । न च सामान्येन देवदत्ते तत्कालविशिष्टाभेदो बोध्यत इति वाच्यं—सामान्यस्य विशेषं विनाऽपर्यवसानादित्यर्थः । अत एव न द्वितीयोपि सम्भवतीत्याह—नैतदिति । एतत्पदमेतद्देशकालविशिष्टमनुकृष्य तत्कालोपलक्षिततत्पदार्थं नोपढौयते हीति सम्बन्धः । किञ्चान्यतरपदोपलक्षितस्यान्यतरपदार्थाभेदबोधने यदा यदा लक्ष्यपदार्थस्तदा तदा तद्विशिष्टपदार्थोपि स्यादिति तदेतद्देशकालयोः सर्वदावस्थानप्रसङ्गः । ननु यथा मृद्घट इति प्रयोगेण विद्यमानघटस्य मृदभेदबोधनेपि यदा यदा मृत् तदा तदा घट इति न नियमः एवमिहापि स्यादिति चेन्न—तत्र हि सामानाधिकरण्यममुख्यं कार्यकारणयोर्भेदस्यावश्यकत्वेनैकार्थावृत्तित्वस्य मुख्यस्याभावात्ततस्तद्वाक्येन तयोरात्यन्तिकाभेदासिद्धेः । विद्यमानदशायामेव घटस्याभेदो बोधयितुं शक्यतेः न चेह तद्देशकालविशिष्टदेवदत्त एतद्देशकालोपलक्षितस्य कार्यं भवति एतद्देशकालविशिष्टो वा तद्देशकालोपलक्षितस्य

कार्यम्। न वानयोर्गुणगुण्यादिभावः सम्भवति। अत औत्सर्गिकमुख्यत्वस्याबाधात्सामानाधिकरण्यं मुख्यमेव सोऽयमित्यादौ भवतीति पदार्थयोरत्यन्तमैक्यमेव वक्तव्यं तत उपलक्षितकालेपि विशिष्टस्यावस्थानमापतेदेव तस्मात्प्रत्यभिज्ञावाक्यं गत्यन्तराभावात्पदद्वयलक्षणयाऽखण्डार्थमित्यनिच्छताप्यच्छमतिनाभ्युपेयम्। न चैवं सोऽयमिति वाक्यस्य देवदत्तस्वरूपमात्रपरत्वे कथं भेदभ्रमनिवृत्तिः, न हि स्वरूपाज्ञानाद्भेदभ्रमः, किन्त्वैक्याज्ञानादिति वाच्यम्। वाक्यस्यैक्यबोधकतया ऐक्यज्ञानस्यापि सम्भवात्। नचैक्यस्य देवदत्तस्वरूपादतिरेके देवदत्तस्तदैक्यं तद्वैशिष्ट्यं चेत्यनेकार्थगोचरतयाऽखण्डार्थत्वक्षतिः, तस्य तत्स्वरूपमात्रत्वे च ज्ञायमानेपि देवदत्ते कथं तदपरिज्ञानं कथं वायं देवदत्त इतिवाक्यीयज्ञानादपि भ्रमस्यानिवृत्तिः स्वरूपज्ञानस्याविशेषादिति वाच्यम्। तत्र न तावदज्ञाततानुपपत्तिः स्वरूपमात्रस्यापि तस्यापर्यायशब्दवाच्यत्वेन तस्योपपादितत्वात्। नाप्ययं देवदत्त इति स्वरूपमात्रज्ञानात्तन्निवृत्तिरविशेषादिति युक्तम्। विषयविशेषाभावेपि सोऽयमिति वाक्ये पदद्वयसामानाधिकारण्यं तस्य च तदेतद्देशकालीनदेवदत्तैकार्थविषयत्वं विशेषणमात्रप्रयुक्तपदार्थद्वयाभेदविरोधश्चानुसंदधानस्य तद्विरोधोपशमनाय भागत्यागेनोपजायमानदेवदत्तस्वरूपमात्रगोचरैक्यज्ञानस्यैतादृशानुसंधानविरहेणोत्पद्यमानादयं देवदत्त इति ज्ञानाद्विलक्षणकारणतया कारणविशेषस्य सत्वान्न हि विषयविशेषं विना कारणविशेषमात्राज्ज्ञानमविद्यानिवर्त्तकं न भवतीति वाच्यम्। न ह्यात्मविषयानुमितिर्देहात्मभ्रमं न निवर्त्तयतीति तद्विषयसाक्षात्कारोपि तन्न निवर्त्तयति। तस्मात्सोऽयमिति वाक्यस्याखण्डार्थत्वमेव युक्तमिति भावः॥ १५०॥

एवं लोके वाक्यस्य कस्यचिदखण्डार्थत्वं प्रसाध्य तद्वत्तत्त्वमादिवाक्यस्याप्यखण्डार्थत्वमाह—

एवं सतीदमपि तत्त्वमसीति वाक्य-
माश्रित्य लाक्षणिकवृत्तिमखण्डनिष्ठम् ।
सोऽयं पुमानिति यथा वचनं तथाऽस्तु
नो चेत्समं हि तदलाबुनिमज्जनोक्त्या ॥ १५१ ॥

एवंसतीति । वाक्यस्य संसर्गबोधजनकत्वनियमाभावे सति मुख्य-समानाधिकरणवाक्यस्याखण्डार्थत्वनियमे सतीति वा यथा सोऽयं पुमानिति वाक्यमखण्डार्थनिष्ठं तथेदं तत्त्वमसीति वाक्यमपि लक्षणा-वृत्तिमाश्रित्याखण्डार्थनिष्ठमस्त्वित्यन्वयः । ननु कोऽयं नियमः । न हि बाधकबलात्कचित्संसर्गबोधकत्वासंभवेनाखण्डार्थत्वे समाश्रिते तत्त्वमादिवाक्येपि तत्स्वीकर्त्तव्यमित्याशङ्क्य समानाधिकरणपौरु-षेयवाक्यस्य प्रकारान्तरेणान्वयबोधानुपपत्तेः । अखण्डार्थत्वस्या-प्यनङ्गीकारे पदद्वयवाच्ययोस्तादात्म्यबोधो वक्तव्यः । स चानुपपन्नः । किञ्चिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयोस्तदनुपपत्तेरिति वाक्यप्रामाण्य-निर्वाहायैव लक्षणयाऽखण्डार्थत्वं स्वीकर्त्तव्यमित्याह—नो चेदिति । तत्तत्वमादिवाक्यं शुष्कमब्रणमलाबुनिमज्जतीत्युक्तिरलाबुनिमज्जनोक्तिः प्रत्यक्षबाधितं स्यादित्यर्थः ॥ १५१ ॥

ननु सोऽयमिति वाक्यस्य लक्षणयाऽखण्डार्थत्ववर्णनमुचितं वाच्यार्थसम्बन्धित्वेन लक्ष्यस्य मानान्तरसिद्धत्वात् । न चाद्वितीयं ब्रह्म तद्वन्मानान्तरेण सिध्यति । ननु लक्ष्यस्य मुग्धतापरिहाराय मानान्तरं मृग्यते । स च स्वप्रकाशस्य ब्रह्मणोविनैव मानान्तरमिति चेद्भवेदेवं यदि मुग्धतापरिहारायैव मानान्तराभ्यर्थनं स्यात् किन्तु लक्षणावृत्तिप्रयोजकत्वेनापि तदपेक्ष्यते । ननु लक्षणायां लक्ष्यस्य वाच्यार्थसम्बन्धस्तत्संबन्धित्वेनाधिगतिरप्यपेक्षते नतु मानान्तरेण तदधिगतिरपीति चेन्न । प्रमाणेन प्रयोज्यप्रयोजकभाववर्णनम् । न च मानान्तराधिगततीरादावेव लक्षणां विषयीकरोति न तु वाच्यार्थ-

सम्बन्धमात्रे न वाधिगतमात्र इति मानान्तराधिगतिरपि लक्षणायां प्रयोजिकैव । अतस्तदभावान्न ब्रह्मणि लक्षणेति चेत्तत्राह—

**मानान्तराधिगतगोचरगामिनी स्या-**
**च्छब्दस्य लाक्षणिकवृत्तिरिति प्रलापः ।**
**सिद्धत्वमात्रमिति लाक्षणिकप्रवृत्ते-**
**र्निर्वाहकारणमनङ्गमतोऽन्यदस्याः ॥ १५२ ॥**

मानान्तरेति । शब्दस्य लाक्षणिकी प्रवृत्तिर्मानान्तरेणाधिगतो यो गोचरविषयस्तद्गामिनी तद्विषयिणीत्येतत्प्रलापो निरर्थकवचनमित्यर्थः । प्रमाणं हि व्यतिरेकमनपेक्ष्य न प्रयोज्यप्रयोजकभावं कल्पयति किन्तु मानमपेक्ष्यैवान्यथारासभादेरपि हेतुत्वप्रसङ्गात् । न चात्र मानान्तराधिगतिविरहे लक्षणाविरहः । ननु तीरादौ प्रवाहसम्बन्धित्वेनापरिज्ञानदशायां न लक्षणा स्यादिति वाच्यार्थसम्बन्धित्वेनाधिगतिरप्यपेक्ष्यत इति चेत्तर्हि यस्य व्यतिरेकोस्ति तदपेक्ष्यतां न तु मानान्तराधिगतेरेतावता व्यतिरेकः । वाच्यार्थसम्बन्धित्वेनाधिगतौ सत्यां तद्व्यतिरेकाभावादित्यभिप्रेत्याह—सिद्धत्वमात्रमिति । वाच्यार्थसम्बन्धितया ज्ञातत्वमात्रमतोऽन्यत्सिद्धत्वादन्यन्मानान्तरसिद्धत्वमनङ्गमप्रयोजकमस्या लक्षणावृत्तेरित्यर्थः । अधिगतमात्रं च स्वयंप्रकाशे ब्रह्मणि मानं विनापि सुलभमिति भावः ॥ १५२ ॥

ननु यावत्प्रयोज्यसमानाश्रयस्यैव प्रयोजकत्वं धूमादिं प्रति वह्न्यादौ दृश्यते । न चैवं व्यतिरेकान्वेषणमर्थवत्तद्व्यतिरेकाभावादस्ति चात्रापि यावल्लक्षणाविषयत्वसमानाश्रयत्वं मानान्तराधिगतिविषयत्वस्येति कथं न तल्लक्षणायां प्रयोजकमिति चेत्तत्राह—

**मानान्तराधिगतता हि न लक्षणायां**
**किञ्चित्करी भवति पिङ्गलतावदग्नेः ।**

धूमस्य जन्मनि हि पिङ्गलता न हेतु-
र्यद्यप्यवस्थितवती हुतभुक्शरीरे ॥ १५३ ॥

मानान्तराधिगततेति । किञ्चित्करी सहकारिणी पिङ्गलता रूपविशेषः। न च यावत्प्रयोजनसमानाश्रयत्वमात्रेण कारणत्वमनन्यथासिद्धस्यैव तस्य कारणत्वात् । न च यावत्प्रयोज्यसमानाश्रयत्वमेवानन्यथा-सिद्धिरपीति वाच्यम् । धूमादिं प्रति वह्निरूपादेरनन्यथासिद्धि-कारणत्वयोरापातान्मानान्तरं च लोके लक्ष्याधिगतिसम्पादकतया कुलालपितृवदन्यथासिद्धमिति न तल्लक्षणायां प्रयोजकमित्यर्थः । वह्निरूपस्य धूमं प्रत्यकारणत्वं वादिप्रसिद्ध्योपपादयति—धूमस्येति ॥१५३॥

नन्वस्तु वेदान्तानां ब्रह्मणि लक्षणावृत्तिस्तथापि नाखण्डार्थत्वं सम्भवति। तथा हि किं तत्त्वमादिवाक्ये जहल्लक्षणा । उताजह-ल्लक्षणा। नाद्यः । जीवब्रह्मणोर्वाक्यार्थानन्वयप्रसङ्गात् । न द्वितीयः। जीवब्रह्मणोर्लक्ष्यमाणार्थान्तरयोश्च वाक्यार्थप्रवेशेऽखण्डार्थत्वहानेः । विरुद्धधर्मयोः परित्यागं विना भेदबोधानुपपत्तेश्च । नचैतदुभयलक्षणा-विलक्षणा लक्षणा काचिद्वादिभिरिष्यते। अत एव सोऽयं देवदत्त इति वाक्येऽपि नाखण्डार्थत्वसिद्धिरित्याशङ्क्य लक्षणावृत्त्यन्तरमप्यस्तीति साधयति—

शब्दस्य लाक्षणिकवृत्तिरपि त्रिधेष्टा
काचिज्जहाति न जहाति च वाच्यमन्या ।
भागं जहाति न जहाति च भागमन्या
सोऽयं त्रिधा भवति लाक्षणिकप्रकारः ॥१५४॥

शब्दस्येति । त्रिधैवेष्टा न द्विविधेत्यर्थः। त्रिप्रकारानेवाह—काचिदित्यादिना। जहाति स्वार्थं परित्यजति जहल्लक्षणेत्यर्थः । न जहाति स्वार्थं न परित्यजति । अजहल्लक्षणेत्यर्थः। भागं वाच्यार्थैकदेशं जहाति न

जहाति च जहदजहल्लक्षणेत्यर्थः । तथा च जहल्लक्षणावदजहल्लक्षणा-वच्च जहदजहल्लक्षणापि काचित्स्वीकर्त्तव्या । अन्यथा सोऽयमित्यादौ वाक्यस्याबोधकत्वापत्तेः । न हि तद्वाक्यं मुख्यया वृत्त्या बोधयतीत्युक्तम् नापि जहल्लक्षणया बोधयितुमीष्टे । देवदत्ताभेदासिद्धिप्रसङ्गात् । नाप्यजहल्लक्षणयार्थान्तरस्याप्रतीतेस्तस्मात्प्रतीत्यनुरोधेन भागत्यागलक्षणैव तत्र स्वीकर्त्तव्येति तत्त्वमादिवाक्येपि सैव लक्षणेत्यखण्डार्थत्वमित्यर्थः । अथवा—कया लक्षणया तत्त्वमादि वाक्यं स्वार्थं लक्षयतीत्याकङ्क्षायां स्वाभिमतलक्षणां दर्शयितुमादौ लक्षणात्रैविध्यं विभज्य दर्शयति—शब्दस्येति ॥ १५४ ॥

लक्षणालक्षणं चोपरिष्टाद्वक्ष्यति—तत्र लोके तावत्तिसृणामपि लक्षणानां लक्षणकथनपूर्वकं विभागक्रमेणोदाहरणमाह—

**गङ्गापदं हि निजमर्थमपास्य तीरे**
**यद्वर्त्तते भवति सा जहती प्रसिद्धा ।**
**शोणः स्थितो बहिरितीह तु लक्षणाया-**
**मादाय शोणिमगुणं तुरगे प्रवृत्तिः ॥ १५५ ॥**

गङ्गापदमिति । शब्दस्य निजमर्थं सर्वात्मनाऽपास्यार्थान्तरे तीरादौ यद्वर्त्तनं सा जहल्लक्षणा सा च गङ्गादिपदे प्रसिद्धेत्यर्थः । अजहल्लक्षणाभागलक्षणापरिहाराय वाच्यं सर्वात्मना परित्यज्येति विशेषणम् । भ्रान्तवाक्येऽतिव्याप्तिपरिहाराय-अर्थान्तर इति । अस्ति हि गङ्गायां घोष इतिवृद्धप्रयोगः । तत्र च गङ्गापदं न प्रवाहपरं तस्य घोषान्वयायोग्यत्वादत एव न प्रवाहविशिष्टतीरपरं नापि निरर्थकं वृद्धैः प्रयुक्तत्वादतो वस्तुगत्या यद्गङ्गासम्बन्धितीरं तत्परं तत्पदमिति सा जहल्लक्षणा तत्र प्रसिद्धेत्यर्थः । अजहल्लक्षणालक्षणोदाहरणे दर्शयति—शोणः स्थितइति । शोणोऽश्वत्वावान्तरजातिनियतः शोणिमगुणः शोणो धावति शोणो

द्वारि तिष्ठतीति हि प्रयोगे शोणपदं न शोणिमगुणपरं तस्य धावनादि-नान्वयानुपपत्तेः । नापि केवलाश्वपरं तथाऽप्रतीतेः, अश्वविशेषपरिज्ञानायैव वाक्यप्रयोगाच्च किन्तु स्वार्थमविहायैव तुरगेपि वर्त्तते तथा च स्वार्थं शोणिमादिगुणमादायार्थान्तरे तुरगादौ शब्दस्य या वृत्तिः सा अजहल्लक्षणा सा च शोणादिपदे प्रसिद्धेत्यर्थः । जहल्लक्षणायामतिव्याप्तिपरिहाराय वाच्यार्थमादायेति शोणः स्थितो बहिरित्येवंरूपे इह वाक्ये या लक्षणा तस्यां तु शोणपदस्य शोणिमगुणमादायैव तुरगे प्रवृत्तिः प्रसिद्धेति सम्बन्धः ॥ १५५ ॥

तृतीयलक्षणाया लक्षणोदाहरणे दर्शयति—

**सोऽयं पुमानिति वचस्युभयप्रकारा**
**देशादिभागपरिवर्जनतः प्रसिद्धा ।**
**पुंसस्तु केवलमुपात्ततया पदाभ्या-**
**मेवं त्रिधा भवति लाक्षणिकी प्रवृत्तिः ॥ १५६ ॥**

सोऽयं पुमानिति । उभयप्रकारा जहदजहल्लक्षणेत्यर्थः । तत्र हेयांशमाह—देशादिभागपरिवर्जनत इति । तदेतद्देशकालवैशिष्ट्यपरिवर्जनादुपादेयांशमाह—पुंसस्त्विति । केवलं स्वरूपमात्रेणेत्यर्थः । वाच्यैकदेशं परित्यज्य तदेकदेशे शब्दस्य या वृत्तिस्सा जहदजहल्लक्षणा सोऽयमित्यादौ प्रसिद्धेत्यर्थः । सोयं पुमानिति वाक्ये तदिदंपदाभ्यां पुंसो देशादिभागपरिर्जनतः केवलमुपात्ततयोभयप्रकारलक्षणा प्रसिद्धेति सम्बन्धः । लोके लक्षणात्रैविध्यं निगमयति एवमिति । ॥ १५६ ॥

इदानीं वेदेप्युक्तलक्षणानां क्रमेणोदाहरणं दर्शयति—

**वेदेऽपि लाक्षणिकप्रवृत्तिरियं त्रिधेष्टा**
**यज्ञायुधीति वचने तु जहत्प्रवृत्तिः ।**

वैश्वानरादिवचनेष्वजहत्प्रवृत्ति-
स्तत्त्वङ्गिरोरुभयरूपतया प्रवृत्तिः ॥ १५७॥

वेदेपीति। यज्ञायुधी यजमानः स्वर्गं लोकमेतीत्यत्र यज्ञायुधिशब्दो यजमाने लक्षणया प्रवर्त्तते। यज्ञायुधेन सह यजमानस्य स्वर्गलोकगमनाभावात्। ननु नेदं लक्षणायामुदाहरणं यजमानपदेनैव तस्योपस्थितत्वाद् भूतपूर्वगत्या तदानीमपि यजमाने यज्ञायुधिशब्दप्रवृत्त्युपपत्तेश्चेति चेन्न—यजमानपदस्यान्यत्रापि कर्तृमात्रपरस्य यागकर्त्तुरुपस्थापकत्वानुपपत्तेः। नच भूतपूर्वगत्या स तमुपस्थापयतीति वाच्यम्। ऋत्विजामपि कदाचिद्यज्ञायुधत्वात्तस्माद्यज्ञायुधिपदं तत्साध्यसुकृतवत्परमिति भावः। वैश्वानरादिवचने यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त इत्यस्मिन्वैश्वानरोपासनपरे वाक्ये वैश्वानरशब्दस्य जाठरानलादिवाचिनस्तदवच्छिन्नब्रह्मण्यप्यजहल्लक्षणयावृत्तिः। केवलजाठरवृत्तावात्मानं वैश्वानरं तस्य ह वा एतस्यात्मनो वैश्वानरस्येति श्रूयमाणसामानाधिकरण्यानुपपत्तेः। केवलमात्मवृत्तौ च तस्योपास्यत्वानुपपत्तेरित्यर्थः। जहदजहल्लक्षणोदाहरणं प्रकृतमेव महावाक्यमित्याह—तत्त्वंगिरोरिति। तत्त्वंशब्दोभयरूपतया जहदजहद्रूपया लक्षणया स्वार्थे प्रवृत्तिरित्यर्थः। अथवा—तत्त्वंगिरोरिति सप्तमी तत्र लक्षणयोभयरूपतया प्रवृत्तिर्वर्तनमित्यर्थः ॥ १५७ ॥

एवं तत्त्वमादिवाक्यस्य भागलक्षणयाऽखण्डार्थत्वमुक्तं भागत्यागलक्षणा चोपपादिता। इदानीं पदार्थयोर्हेयोपादेयांशं विभज्य दर्शयितुमादौ तत्पदवाच्यं शबलं दर्शयति—

ब्रह्माज्ञाने ह्यद्वितीयत्वमेकं
ब्रह्मण्यन्यच्चाद्वितीयत्वमस्ति।

तत्संपर्कात्तत्र चाद्वैतताऽन्या
व्युत्पन्नोऽयं ब्रह्मशब्दस्तु तत्र ॥१५८॥

ब्रह्माज्ञानइति। अज्ञानं हि निखिलजगदुपादानं ब्रह्मण्यध्यस्तं तदभिन्नमेव एवं स्वविकाराद्प्यभिन्नं विकारस्य विकारिणोऽनन्यत्वाद्यद्यपि जीवब्रह्मविभागादिरनादितया नाज्ञानविकारः, तथापि तत्सत्त्वस्याप्यज्ञानाधीनत्वात् न सोऽज्ञानादतिरिच्यते। अत आध्यासिकमद्वितीयत्वमज्ञाने विद्यते। ब्रह्मणि तु सत्यज्ञानानन्दानन्तात्मके अज्ञानाद्वितीयत्वादन्यन्मुख्यं त्रिविधभेदाभावोपलक्षितस्वरूपात्मकं विद्यते। ब्रह्मव्यतिरेकेण कस्याप्यभावात्ततः किं न हि अज्ञानं न वा केवलं ब्रह्माद्वितीयादिपदवाच्यमज्ञानमात्रस्य वाच्यत्वे भागत्यागलक्षणानुपपत्तिरुपादेयांशाभावाद् ब्रह्ममात्रस्यापि वाच्यत्वानुपपत्तिर्हेयांशाभावादुक्तदोषानुषङ्गश्चेति तत्राह—तत्संपर्कादिति। तयोर्ब्रह्माज्ञानयोः संपर्कात्परस्परतादात्म्यात्तत्राज्ञानब्रह्मोभयात्मके शबलेऽन्या केवला द्वितीयत्वादन्याद्वितीयत्वद्वयात्मिकाद्वैतता विद्यते ततोपि किमित्यत आह—व्युत्पन्नइति। ब्रह्मवाचकब्रह्माद्वितीयतदादिशब्दः अद्वितीयद्वयात्मके तत्र शबले व्युत्पन्नो गृहीतसम्बन्ध इत्यर्थः। ब्रह्मपदार्थस्यानवच्छिन्नमहत्त्वादद्वितीयपदार्थस्यापि तद्रूपत्वात्तत्पदस्याप्यद्वयसद्वस्तुप्रकृत्यास्मिन् प्रयोगादद्वितीयादिशब्दा अपि ब्रह्मवाचका इति भावः। एतदुक्तं भवति। यद्यपि ब्रह्मैव त्रिविधपरिच्छेदशून्यतया मुख्यमद्वितीयं तथापि तस्य सकलव्यवहारातीततया शब्दवाच्यत्वानुपपत्तेः। केनचिदवच्छिन्नस्यैव तथात्वं वाच्यं तत्र यदि सद्वितीयोपाध्यवच्छिन्नं ब्रह्म भवति तदा तदुपहितस्यापि सद्वितीयत्वान्नाद्वितीयपदवाच्यं तद्भवेदतोऽज्ञानस्याद्वितीयतया तदुपहितं ब्रह्माप्यद्वितीयमिति तत्रैवाद्वितीयादिपदव्युत्पत्तिरेतदर्थमेवाज्ञानस्याद्वितीयत्वं वर्णितम्। नचैवं केवल एवाज्ञानेऽद्वितीये ब्रह्मादिपदानां व्युत्पत्तिः किं न स्यादिति वाच्यम्। ब्रह्मण्येव वेदान्तेषु नियमेन ब्रह्मादिपदप्रयोगात।

न चाज्ञानस्य ब्रह्मशब्दवाच्यत्वोपाधित्वे इतिहरिशब्दप्रवृत्तिनिमित्तपशुत्ववत्ताटस्थ्यमेव स्यादिति वाच्यम् । न ह्यज्ञानस्यात्र तादृशमुपाधित्वं वर्ण्यते । किन्तु केवलस्य ब्रह्मणोऽव्यवहार्यत्वेनाज्ञानशबलस्यैव तस्य तत्त्वमित्येतावतैवाज्ञानस्य तत्त्वमुच्यते । न च प्रसिद्धोपाधित्वमेव किं न स्यादिति वाच्यम् । तस्य व्युत्पत्तिकाले ताटस्थ्येनोपस्थित्यभावादिति निःसन्धिबन्धनमित्यादिना वक्ष्यमाणत्वादिति ॥ १५८ ॥

इदानीं त्वंपदवाच्यं शबलं दर्शयति—

प्रत्यग्भावस्तावदेकोऽस्ति बुद्धौ
प्रत्यग्भावः कश्चिदन्यः प्रतीचि ।
प्रत्यग्भावस्तत्कृतस्तत्र चान्यो
व्युत्पन्नोऽयं तत्र चाऽऽत्मेति शब्दः ॥ १५९ ॥

प्रत्यग्भाव इति । अत्राप्युपाधेः प्रत्यग्वर्णनस्य पूर्वोक्त एवाभिप्रायः। बुद्धावान्तःकरणेऽहंकारस्यापि घटादिव्यापृतताप्रतीतेः । आपेक्षिकं प्रत्यक्त्वं पराग्व्यावृत्तत्वलक्षणं प्रतीचि तु तन्मुख्यं तस्य सर्वान्तरात्मत्वादित्यर्थः । अन्यत्तूक्तार्थमत्रापि शबले व्युत्पत्तिरुक्ताभिप्रायेण वर्णनीया। न च केवलान्तःकरणमेव प्रत्यग्वाचकत्वमहमादिशब्दशक्यं किं न स्यादिति वाच्यम्। वृद्धव्यवहारानुरोधेन हि व्युत्पत्तिः । तद्व्यवहारश्चाहमुपलभे कुर्वे इत्यादौ चिदचिदात्मके तस्मिन्नेव दृश्यते न केवल इति ॥ १५९ ॥

नन्वेवं सति लक्षणा व्यर्था । वाच्ययोरेवैक्योपपत्तेः । अन्तःकरणस्याविद्याविलसिततया तदभिन्नत्वेन तदुभयावच्छिन्नचैतन्ययोरप्यभेदादित्याशङ्क्य वाच्यार्थयोरुपाधिकृतविरोधाभावेपि तदन्तर्गतपारोक्ष्यापरोक्ष्यादिधर्मप्रयुक्तविरोधस्य तदवस्थत्वादुपाध्योरप्यतो

भेदानुपपत्तेः। तदुपहितयोरपि तदयोगात्तं विना च सामानाधिकरण्यायोगान्न भागलक्षणां विना वाक्यार्थप्रतिपत्तिरिति तत्प्रतिपत्तये आदेयभागं दर्शयति।

**तच्छब्दवाच्यगतमद्वयभागमेकं**
**प्रत्यक्त्वमात्रमविरोधमपेक्षमाणः।**
**त्वंशब्दवाच्यशबलस्थमुपाददानो**
**वाक्यादखण्डमथ तत्त्वमसीति विद्यात् ॥१६०॥**

तच्छब्दवाच्येति—पदार्थयोरविधमपेक्षमाणः पुरुषो लक्षणया सत्यमिथ्याद्वितीयद्वयात्मके तत्प्रतिपाद्ये शबलेऽसत्यं विहायापरोक्षचैतन्यात्मकसद्ब्रह्मस्वरूपमद्वयभागमेवं तथाविधप्रत्यगद्वयात्मकत्वं पदवाच्यशबलगतं वितथं परित्यज्यावितथाद्वयं प्रत्यक्त्वं चोपाददानस्तत्त्वमसीति वाक्यादखण्डमात्मानं जानीयादित्यर्थः। अत्रोपाधिपरित्यागे तत्प्रयुक्तविरुद्धधर्मोऽपि परित्यक्त इति न विरोध इति भावः॥ १६०॥

नन्वेवमप्यखण्डार्थत्वमनुपपन्नं पदद्वयलक्ष्यस्य भिन्नत्वात्तदभेदे वा पदयोः पर्यायत्वप्रसङ्गात्। न च प्रवृत्तिनिमित्तभेदादपर्यायत्वमिति वाच्यम्। तद्वैशिष्ट्यस्यापि वाक्यजन्यप्रतीतिविषयत्वेनाखण्डत्वहानिप्रसङ्गाच्छाब्दबोधस्य प्रवृत्तिनिमित्तवैशिष्ट्यविषयत्वनियमात्। न चेदं पशुत्वादिवत्तटस्थतया प्रवृत्तिनिमित्तमिति स्वीक्रियते। ननु वाच्यार्थवैशिष्ट्यबोध एवायं नियमस्तत्रैव तत्पुरस्कारेण तदुपस्थितेः लक्षणायां तु न प्रवृत्तिनिमित्तापेक्षाऽतो न तद्वैशिष्ट्यमत्र विषय इति चेन्न। एवमप्येकार्थोद्देशेन पदद्वयप्रयोगप्रयोजनाभावान्न हि गङ्गायां तीरे घोष इति प्रयोगोऽर्थवान्भवति। लक्ष्यपदार्थेऽपि लक्ष्यतावच्छेदकवैशिष्ट्यज्ञानस्यावश्यकत्वान्नाखण्डार्थत्वसिद्धिरित्याशङ्क्याह—

आदेयांशे नाणुमात्रोऽपि भेदो
यद्यप्येवं भिन्नमादाय शब्दौ ।
वर्तेते त्वय्यद्वयात्मप्रकाशे
बाह्यं हेतुं जामिता नास्ति तस्मात् ॥ १६१ ॥

आदेयांश इति । आदेये वाक्यार्थत्वेनोपादेये भागेऽणुमात्रोऽल्पोपि भेदो यद्यपि नास्ति अनेन पदार्थभेदप्रयुक्तो दोषो निरस्तः। अभेदप्रयुक्तदोषं निराकरोति—एवमित्यादिना। एवमपि जामिता पर्यायता नास्तीति सम्बन्धः। तत्र हेतुः—शब्दाविति । तत्त्वंशब्दौ भिन्नं बाह्यं-स्वरूपाद्बहिर्भूतं हेतुं प्रवृत्तिनिमित्तमादायाद्वयात्मप्रकाशे त्वयि वर्त्तेते यस्मात्तस्माज्जामिता नास्तीत्यर्थः। यदत्रोक्तमेकस्मिन्नर्थे पदद्वयप्रयोगो निष्प्रयोजन इति तदसत् अविद्यानिवृत्तिफलकवाक्यार्थप्रमितेरेव तत्प्रयोजनत्वात् दृश्यते हि परमतेप्येतादृशप्रयोजनायैकस्मिन्नप्यर्थे पदद्वयप्रयोगः। प्रमेयत्वं प्रमेयं प्रमेयत्वे प्रमेयत्वमित्यादि। न चेयं प्रतीतिरन्यथाप्युपपन्ना पदमात्रस्याप्रमापकत्वादेतदभिप्रेत्योक्तमद्वयात्मप्रकाश इति। वाक्यार्थभूते त्वयीत्यर्थः । ननु भवन्मते पदमपि प्रमापकं भवतु न हि पदार्थातिरिक्तस्तत्र वाक्यार्थोऽस्ति मतान्तरे तु संसर्गस्य पदागोचरत्वात् न तत्प्रमापकमिति चेन्न । यथा समानार्थकत्वेपि मनस्त्वेन मनोजन्यं ज्ञानं परोक्षमिन्द्रियत्वेन तज्जन्यं त्वपरोक्षं यथा वा शब्दज्ञानत्वेन तज्जन्यमर्थज्ञानं शाब्दं लिङ्गज्ञानत्वेन शब्दज्ञानजन्यं त्वनुमितिरिति विभागः। तथास्मन्मतेऽप्यर्थभेदाभावेपि पदत्वेन तज्जन्यं तु ज्ञानं न प्रमा पदसमूहवाक्यत्वेन तज्जन्यं तु प्रमेति व्यवस्थोपपत्तेः। किं च सर्वेषामपि वादिनां पदजन्यं पदार्थज्ञानं किमिति न प्रमेति चोदितेऽर्थस्य तथात्वेपि पदत्वेन पदजन्यत्वादित्येव वक्तव्यमिदं त्वन्यदेव स एव पदार्थोऽन्येनापि भवन्मते प्रतीयते। अस्मन्मते त्वन्य एवेति। यच्चोक्तं लक्ष्यतावच्छेदकवैशिष्ट्यप्रतीतिनियमा-

न्नाखण्डार्थत्वमिति तदपि न साधु न ह्ययं कुलधर्मः लक्ष्ये लक्ष्यतावच्छेदकवैशिष्ट्येन भवितव्यमिति । स धर्मः किंलक्ष्यपदार्थानुगमाय स्वीक्रियते किं वा शाब्दबोधस्य विशिष्टवैशिष्ट्यनिर्वाहायाद्योऽनुचितः प्रकृते लक्ष्यस्यैकत्वेन स्वतोऽनुगतत्वान्न द्वितीयोपि विशिष्टवैशिष्ट्यस्य प्रकृतेऽविषयत्वात् । ननु सर्वोपि शाब्दबोधो विशिष्टवैशिष्ट्यविषय एवेति चेन्न । यत्र हि पदार्थानां भेदस्तदवच्छेदकधर्मश्च प्रमाणाविरुद्धस्तत्रैवायं नियमः । अन्यथा शाब्दान्वयप्रतियोगिनोरन्योन्यप्रतियोगिकभेदाश्रयत्वनियमाच्छब्दात्केवलान्वयिधर्मे तद्वैशिष्ट्यबोधानुदयप्रसङ्गादत्र च लक्ष्यभेदे तदवच्छेदके च प्रमाणाभावात्प्रत्युत एकधैवानुद्रष्टव्यमिति वाक्यार्थस्यैकरस्यश्रुतेश्चाखण्ड एव शाब्दबोधविषय इति ॥ १६१ ॥

ननु प्रत्यग्ब्रह्मणोर्लक्ष्यार्थयोरेकत्वेप्यतिरेको वक्तव्यः । प्रत्यक्त्वाद्वितीयत्वयोर्विलक्षणप्रतियोगिकयोर्विरुद्धत्वेन तदाश्रयस्यात्यन्तमभेदानुपपत्तेरतो नाखण्डार्थत्वसिद्धिरित्याशङ्कते—

अद्वैतेऽर्थे प्रत्यगर्थोऽस्ति तद्व-
त्प्रत्यक्तत्वे चाद्वयस्यापि भावः ।
यद्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे तत्त्वमर्थोपपत्तेः ॥ १६२ ॥

अद्वैतेऽर्थ इति । अद्वैतेऽर्थे तत्पदार्थब्रह्मस्वरूपे प्रत्यगर्थः प्रत्यक्स्वरूपमपरोक्षचैतन्यं विद्यते । प्रत्यक्तत्त्वे जीवस्वरूपे चाद्वयस्य ब्रह्मस्वरूपस्य भावोस्तित्वं प्रत्यगेव ब्रह्म ब्रह्मैव प्रत्यगिति यद्यपि भवति एवमप्यतिरेकस्याभेदतावन्मात्रविरोधिनो धर्मस्येषद्भेदस्यावकाशः सत्वभावो वक्तव्यः । अन्यथा पराग्व्यावृत्तत्वलक्षणतया पराग्घटितप्रत्यक्त्वस्य तदभावघटिताद्वयत्वस्य चैकत्र वृत्त्यनुपपत्तेरित्यर्थः ।

दूषयति—नेति । अतिरेको न वक्तव्य इत्यर्थः । तत्र हेतुः पूर्णइति । ईषद्भेदेनापि रहिते एकरसे सत्येव तत्त्वे ब्रह्मात्मैक्ये तत्त्वमर्थोपपत्तेस्तत्त्वंपदलक्ष्याद्वितीयत्वप्रत्यक्त्वयोरुपपत्तेरित्यर्थः । यदि ह्यद्वितीयस्वरूपात्प्रत्यगतिरिक्तं स्यात्तदा तस्याद्वितीयत्वं निरङ्कुशं न स्यादेवमेव यदि प्रतीचोद्वयमतिरिक्तं स्यात्तर्हि प्रतीचः सर्वान्तरत्वलक्षणं प्रत्यक्त्वं न स्याद्रूपान्तरस्यापि सत्त्वादतस्तत्त्वमर्थोपपत्त्यर्थमेव ब्रह्मात्मैक्यस्यैकरसत्वं वक्तव्यमित्यर्थः । अयम्भावः । यदि प्रत्यक्त्वमद्वितीयत्वं वाऽऽत्मनो धर्मो भवेत्तदा तयोर्विरुद्धयोरेकवृत्तित्वानुपपत्तिः । न चैवमस्ति चैतन्यैकरसस्यैव पराग्व्यावृत्तत्वाकारेण द्वितीयाभाववत्त्वेन च प्रत्यक्त्वाद्वितीयत्वादिरूपेण व्यवह्रियमाणत्वाद्यथैक एव देवदत्तः पितृपुत्राद्यनेकापेक्षया पुत्रपित्रादिव्यवहारवान् ततोऽतिरेको न वक्तव्य इति ॥ १६२ ॥

नन्वेकपदलक्षणयापि वाक्यार्थविरोधपरिहारोपपत्तौ किं पदद्वयलक्षणया न हि स्वाभिमतवाक्यार्थसिद्धय एव मुख्यार्थात्पदं प्रच्यावयितुं शक्यते लक्षणाया अन्याय्यत्वात्तथा च नाखण्डार्थत्वसिद्धिरित्यत आह—

**न च विनिगमनायां कारणं किञ्चिदस्ति**
**स्फुटमुभयपदस्था लक्षणा शस्यतेऽतः**
**न हि विनिगमनायां हेत्वभावे कदाचि-**
**त्क्वचिदियमुपलब्धा सोऽयमित्यादिवाक्ये ॥ १६३ ॥**

न च विनिगमनायामिति । अत्रैवेदं नान्यत्रेति विशेषे निगमनमुपसंहारो विनिगमना तस्यां यतोऽस्मिन्नेव पदे लक्षणा नान्यत्रेति विनिगमने स्फुटं प्रसिद्धं कारणं किञ्चिदपि नास्त्यत उभयपदस्य लक्षणा शस्यते प्रशस्यत इत्यर्थः । ननु किं विनिगमनहेतुना तं विनाप्यन्यतरलक्षणया

विवक्षितार्थोपपत्तेरित्याशङ्क्याह—न हीति। कदाचित्क्वचिदपीयमेकपद-लक्षणा न तथा चैकपदलक्षणाया एवानुपपन्नत्वान्न तया विरोधपरि-हार इत्यर्थः॥ १६३॥

ननु विनिगमनहेत्वभावोऽसिद्धः- तथा हि यत्पदं प्रथमं पठ्यते तदसंजातविरोधितया मुख्यार्थं तद्विरोधेन द्वितीयपदे लक्षणाऽस्त्वि-त्याशङ्क्याह—

**प्रथमचरमभावो निर्णये कारणं चे-**
**द्यमपि नियमो न ह्यन्यथाऽप्यस्य दृष्टेः।**
**प्रथमपठितमासीत्तत्पदं सामवेदे**
**चरमपठितमेतद्दृष्टमध्वर्युवेदे॥ १६४॥**

प्रथमेति। प्रथमपठितत्वं च चरमपठितत्वं च मुख्यलक्षणावृत्ति-निर्णये कारणमिति चेद्भवेदेवं यदि पदयोः प्रथमचरमभावो नियतः स्यान्न चायं नियमोऽस्ति व्यभिचारादित्याह—अयमपि नियमइति। प्रथम-चरमभावोपि न हीत्यर्थः। तत्र हेतुः— अन्यथेति। वैपरीत्येनापि पदयोः प्रथमचरमभावस्य दृष्टेरित्यर्थः। कुत्र वैपरीत्यं दृष्टमित्यत आह— प्रथमपठितमिति। तत्त्वमसीत्यत्र तत्पदं प्रथमं पठ्यते एतदेव पदमर्थतोऽ ध्वर्युवेदे यजुः शाखायामयमात्मा ब्रह्माहं ब्रह्मास्मीत्यादौ पश्चात्पठ्यते अतो नायं नियमहेतुरित्यर्थः। ननु यस्यां शाखायां यत्पदं प्रथमं श्रूयते तस्य तच्छाखिनो मुख्यार्थ एवाङ्गीकर्त्तव्यः प्रतिपत्तुरिच्छया वा व्यवस्था। अतः पुरुषभेदेन वाक्यार्थनियमो भविष्यतीति चेन्न— मुक्तिसाधनात्मज्ञानस्य सर्वत्रैकरूप्यनियमान्न हि कस्य चिद्द्वितीया-त्मज्ञानं मुक्तिसाधनं कस्य चित्कर्त्रात्मज्ञानमित्युपपद्यते। फलवैषम्या-पाताद्वस्तुतत्त्वस्यैकरूपतया पुरुषभेदेन विषयज्ञानद्वयस्य प्रामाण्या-नुपपत्तेः न हि स्तम्भे स्तम्भकुम्भोभयज्ञानमपि पुरुषभेदेन प्रमाणं भवति।

न च वाग्धेनुत्वादिज्ञानवद्विनैव प्रामाण्यं पुरुषसमीहितसाधनमिति वाच्यम्। अविद्यानिवृत्तेः प्रमाणैकफलत्वात् वाग्धेनुत्वादिज्ञानं तु चोदितत्वेन यागादिवत्क्रियात्वाकारेणैव पुरुषसमीहितं साधयति। ततः पदद्वयलक्षणां विना वाक्यार्थव्यवस्थितेस्तद्व्यवस्थां विना तज्ज्ञानस्य प्रामाण्यायोगात्तद्विना चाविद्यानिवृत्त्यभावापातात्पदद्वयलक्षणावश्यकीति ॥ १६४ ॥

लोके चोभयपदलक्षणावश्यं वक्तव्या अन्यथा विरोधप्रतीतेरनिवृत्तेरिति स्थितेप्युक्तहेतुनापि तत्रोभयपदलक्षणया भाव्यमित्याह—

**सोऽयं पुमानयमसाविति पौरुषेये**
**वाक्ये तथा व्यतिहतेऽत्र विशेषहेतुः।**
**पूर्वापरत्वमिति शक्यमिदं न वक्तुं**
**मुख्यत्वलाक्षणिकते प्रति शब्दवृत्त्योः॥ १६५॥**

सोऽयमिति। यथा वेदे तथा सोऽयं पुमानित्यत्र वाक्ये शब्दवृत्त्योर्मुख्यत्वलाक्षणिकते प्रतीदं पूर्वापरत्वविशेषहेतुर्विनिगमनहेतुरिति वक्तुं न शक्यमित्यर्थः। अत्र हेतुत्वेन वाक्यं विशिनष्टि—व्यतिहतइति। व्यत्यासमभिनीयाऽऽह—अयमसाविति। ननु वेद इव लोके श्रूयमाणक्रमनियमाभावात्क्वचिद्दर्शनानुरोधेन व्यत्यासेप्यसौ शब्दस्य प्राथमिकत्वमभिप्रेत्य तस्य मुख्यवृत्तिरुपादीयतामित्याशङ्क्य तन्नियमस्याभावाद्दर्शनस्य तत्रापि सत्त्वादित्यभिप्रायेणाह—पौरुषेय इति। पुरुषेच्छया निष्पाद्य इत्यर्थः। तथा च लोकेपि पुरुषेच्छया क्रमव्यत्ययसम्भवान्न प्रथमचरमभावो (१) मुख्यलक्षणा-वृत्त्योर्हेतुरित्यर्थः॥ १६५॥

(१) शब्दवृत्त्योर्मुख्यत्वलाक्षणिकत्वे प्रतीदं पूर्वापरत्वविशेषहेतुर्विशेष एव विनिगमनहेतुरिति वक्तुं न शक्यमिति सम्बन्धः। अत्रापि वाक्यप्रयोक्तॄणामुच्चारणे पूर्वापरत्वनियमाऽदर्शनादिति भावः।

ननु किं वेदे लक्षणया वाक्यार्थयोरैक्यं बोध्यतां न ह्यस्ति वचनस्यातिभारः। न च मानान्तरबाधान्न वाक्यमैक्यं बोधयतीति वाच्यम्, अबाधितविषयत्वस्यानुमितिसामग्र्यामेव प्रविष्टतया शाब्दसामग्र्यां तदननुप्रवेशादत्रैव तदपेक्षायां च वेदस्य सापेक्षत्वप्रसङ्गादित्याशङ्क्य माभूदबाधितत्वस्य शाब्दसामग्र्यामनुप्रवेशः। तथैव योग्यता वापेक्षणीयैव तस्याः शाब्दज्ञानैकसामग्रीनिविष्टत्वात्सा च वाक्यार्थाबाधलक्षणा न लक्षणां विनेति सावश्यमङ्गीकर्त्तव्येत्याह—

**न च भवति विरोधस्योत्थितस्यापनीतिः**
**पदयुगलनिविष्टां लक्षणामन्तरेण।**
**न हि भवति कदाचित्सद्वयस्याद्वयत्वं**
**न च भवति परोक्षः प्रत्यगर्थोऽपि तद्वत् ॥१६६॥**

न च भवतीति। विरोधशमनाय लक्षणा वक्तव्या। सा च विनिगमनाभावात्पदद्वयेपीत्यभिप्रेत्योक्तं पदयुगलेति। ननु माभूदेकपदलक्षणापि (१) तथापि विरोधपरिहारः सम्भवति त्वंपदार्थं हि मानान्तरप्रसिद्धमुद्दिश्य तस्याज्ञाततत्पदार्थब्रह्मभावोऽभिधीयते, उद्देश्यगतविशेषणानि च न विवक्षितानि भवन्ति ग्रहैकत्ववदिति मीमांसामर्यादा, तथा च त्वंपदार्थविशेषणसद्वयत्वकिञ्चिज्ज्ञत्वादीनां सर्वज्ञत्वादिना विरुद्धार्थानां विनापि लक्षणां वाक्यजन्यबुद्ध्या अविषयीकरणादिति चेत्सत्यं तथापि यथा सद्वयस्य त्वंपदार्थस्याद्वयत्वं विरुद्धम् एवं सद्वयत्वादिविशेषणानामविवक्षायामपि त्वंपदार्थप्रत्यक्स्वरूपापरोक्षताया अविवक्षानुपपत्तेः। परोक्षस्य ब्रह्मणः तदात्मत्वं विरुद्धमित—न हीति। अपि शब्दो यथार्थे, च शब्दः शङ्कानिवृत्तये, यथा कदाचिदपि सद्वयस्याद्वयत्वं न भवति तद्वत्परोक्षः परमेश्वरोपि

(१) लक्षणापीति। अनुक्तसमुच्चयार्थोऽपिशब्दस्तेन द्विपदलक्षणापि माभूदिति तात्पर्यम्।

प्रत्यगपरोक्षप्रत्यगात्मा न भवतीत्यर्थः। अथ वैकपदलक्षणायामपि न विरोधपरिहारः अपरोक्षानुभवैकरूपप्रतीचः सत्याद्येकरसब्रह्मणो वा परोक्षत्वादिविशिष्टब्रह्मणाऽनृतदेहादिविशिष्टप्रतीचा वाऽभेदानुपपत्तेः। न च तत्पदलक्षणया परोक्षत्वादिपरित्यागात्त्वंपदार्थस्य चोद्देश्यतयाऽविवक्षितविशेषणत्वादुभयपदलक्षणां विनापि विरोधपरिहार इति वाच्यम्, त्वंपदार्थधर्मकिञ्चिज्ज्ञत्वादिपरित्यागेपि तत्स्वरूपशबलस्य सद्वयस्य परित्यागानुपपत्तेः। न चाहंकारावच्छिन्नस्य ब्रह्मणात्यन्तिकाभेदः सम्भवति। न च काल्पनिकं तादात्म्यं श्रुत्या प्रतिपाद्यम्। न च त्वंपदार्थ एवोद्देश्य इति नियमः श्रुतिसिद्धतत्पदार्थस्यापि तत्सम्भवात्तथा च श्रुतिः 'तत्त्वमेव त्वमेव तदि'ति तस्मात्पदयुगलक्षणया भवतिव्यमित्यभिप्रेत्याह—न च भवतीति ॥ १६६ ॥

ननु जीवेश्वरयोर्विरुद्धधर्मयोरपि वस्तुतो भेदाभेदाद्वाक्ययोरैक्यं बोध्यतां किं लक्षणयेत्याशङ्क्य किं सद्वयत्वाद्वयत्वाकारेणापि तयोरैक्यं वाक्येन बोध्यते किं वा चैतन्याकारेण नाद्य इत्याह—

**अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः।**
**घटते न यदैकता तदा नितरां तद्विपरीतरूपयोः॥ १६७॥**

अविरुद्धेति। यदा एकधर्मिवृत्तियोग्यदण्डकुण्डलादिविशेषणद्वयप्रयुक्तयोर्दण्डिकुण्डलिनोर्न दण्डित्वकुण्डलित्वाकारेणैकत्वं युज्यते। न हि दण्ड्येव कुण्डली कुण्डली वा दण्डी भवति दण्डादौ कुण्डलादिसम्बन्धाभावात्किन्तु पुरुष एवोभयविशिष्टो भवति तदा किमु वक्तव्यं विरुद्धविशेषणद्वयकिञ्चिज्ज्ञत्वादिविशिष्टयोरभेदो न युज्यत इत्यत्रेत्यर्थः॥ १६७॥

द्वितीयमनूद्य निराकरोति—

**अथ केन चिदात्मनैकता वचनेन प्रतिपाद्यते तयोः।**
**तदसुन्दरमस्तमेति हि स्फुटमेवं त्रिविधाऽपि लक्षणा।१६८।**

अथेति। अथेति चोद्ये तत्त्वमादिवचनेन तयोर्जीवपरयोः केन चिदात्मना चैतन्याकारेणाभेदः प्रतिपाद्यत इति यदि ब्रूषे इत्यर्थः। दूषयति—तदसुन्दरमिति। त्वदुक्तमसमीचीनमित्यर्थः। तत्र हेतुः अस्तमेति। हिशब्दो हेतौ। यस्मादेवं सति त्रिविधापि लक्षणा नश्यति तस्मात्तदसुन्दरमिति सम्बन्धः। चैतन्यस्य जीवपरयोर्धर्मत्वेन तेनापि रूपेण तदभेदः सम्भवति। तस्य तत्स्वरूपत्वेपि तदेकत्वे तत्रैकस्मिन्विरुद्धयोः सर्वज्ञत्वकिञ्चिज्ज्ञत्वयोः समावेशोऽनुपपन्नः। न च तदाश्रयस्य चैतन्यस्य भिन्नाभिन्नत्वाददोष इति वाच्यम्। किं तयोश्चैतन्याकारेणैव भेदं वक्तुमुद्यतोऽसि। तथा सति चैतन्याकारेणाभेदस्तेनैव भेद इति च महदसमञ्जसमापद्येत। चैतन्याकारेणाभेदः किञ्चिज्ज्ञत्वसर्वज्ञत्वाद्याकारेण भेद इति चेत्किं भेदाकारप्रयोजको धर्मश्चैतन्यमात्रे उत स्वावच्छिन्ने। नाऽन्त्यः। स्ववृत्तिविरोधात्। न प्रथमः। निरंशचैतन्यस्यैकत्वे विरुद्धधर्मसमावेशानुपपत्तेरुक्तत्वाच्चैतन्यस्य भेदे वा कथं तदभेदबोधः समुदीयात्। अस्तु वा यथा कथञ्चित्त्वन्मतं येन केनापि प्रकारेण विरोधः परिहर्त्तुं शक्यत इति तावता न लक्षणाक्षेपमर्हति। प्रसिद्धलक्षणाया अप्युच्छेदप्रसङ्गाद् गङ्गायां घोष इत्यत्रापि गङ्गापदस्य प्रयोगभेदे तीरादावपि शक्तिः सलभ्या वा सामीप्यमपि मुख्योऽर्थ इति लक्षणोच्छेदप्रसङ्गात्सोमेन यजेतेत्यत्रापि सोमकरणकेनेत्यर्थकल्पनायां मत्वर्थलक्षणा पीड्येत तस्माद्यथाशक्तिभेदादिदोषवशाल्लोके वेदे च लक्षणा कल्प्यते। एवमत्राप्येकधैवानुद्रष्टव्यमिति श्रुतिबलादुक्तन्यायाच्च तत्त्वमादिवाक्यविवक्षितान्वयसिद्ध्यर्थमेव पदद्वयलक्षणा वाच्येति भावः॥ १६८॥

एवं शबले व्युत्पत्तिमुपपाद्य भागलक्षणया वाक्यार्थ उपपादितः।

इदानीं केवल एवात्माध्यस्तेऽज्ञानेऽहंकारे च ब्रह्मात्मपदयोर्व्युत्पत्तिरात्मनोऽव्यवहार्यत्वेन तत्र व्युत्पत्त्यनुपपत्तेः। ननु शवले व्युत्पत्तिर्न विरुद्ध्यत इति चेन्न। विचारात्पूर्वं शबलपरिज्ञानाभावादुभयत्र शक्तिकल्पनागौरवाच्च। न च ब्रह्मणि तत्प्रयोगानुपपत्तिः। लक्षणयापि तदुपपत्तेः। ततो जहल्लक्षणयाऽखण्डवाक्यार्थबोध इत्याह—

**साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाहं-**
**शब्दोऽहंकारवाची भवति तु जहती लक्षणा तत्र पक्षे।**
**नौरेषा रौति लोहं दहति विषधरो रज्जुरग्रे तवासा-**
**वित्यत्रेवाऽऽत्मवस्तुन्यपि भवतु जहल्लक्षणा को विरोधः ॥ १६९ ॥**

साभासेति। आभासेन सहितमज्ञानं साभासाज्ञानं आभासो नामात्मनो ज्ञानादिनिष्ठत्वं नाम धर्मः। जहल्लक्षणया वाक्यार्थबोधे दृष्टान्तमाह—नौरित्यादिना। विषधरः सर्पः। अत्र पक्षे यदीत्यनेननास्वारस्यं दर्शितं तत्र च निमित्तं लोके वेदे क्वचिदप्यहंकारमात्रेऽज्ञाने च तत्त्वंपदप्रयोगाभाव एव। न हि प्रयोगं विनापि तत्र व्युत्पत्तिः सम्भवति केवलात्मनो व्यवहार्यत्वेपि शबले व्युत्पत्तिः सम्भवत्येव शाबल्यपक्षोक्तदोषश्चोपरिष्टान्निराकरिष्यत इति ॥ १६९ ॥

एवं व्युत्पत्तिपक्षे गौण्यापि वृत्त्या वाक्यार्थमखण्डमाह—

**प्रत्यक्त्वादिगुणान्वयेन यदि वा गौण्यस्तु वृत्तिस्तयो-**
**र्ब्रह्माहंपदयोः परेतरदृशोर्मुख्ये विरोधो यतः।**
**मुख्यार्थानुपपत्तिहेतुकतया गौण्यस्ति वृत्तिर्यतो**
**लोके माणवको विभावसुरसौ सिंहः पुमानित्यपि॥१७०॥**

प्रत्यक्त्वादिति। यदि वा यद्वा ब्रह्माहंपदयोरज्ञानाहंकारमात्रव्युत्पन्नयोर्यतो मुख्ये मुख्यार्थभेदे विरोधः। अद्वितीयब्रह्मप्रतिपत्त्यनुपपत्तिः ततः परेतरदृशोर्जीवपरयोः प्रत्यक्त्वाद्वितीयत्वगुणन्यायेन गौणी वृत्तिरस्त्विति सम्बन्धः। परेतरदृशोरिति। सप्तमी अत्र यद्यपि प्रत्यक्त्वाद्वितीयत्वे जीवपरयोः स्वरूपमेव तथाप्यारोपितभेदेन गुणत्वोक्तिरविरुद्धेति भावः। ननु वृत्तिद्वयव्यतिरेकेण तृतीया वृत्तिर्नास्तीत्यत्राह—मुख्यार्थानुपपत्तीति। यतो लोके मुख्यार्थानुपपत्तौ सत्यां मुख्यार्थगुणयोगविवक्षायां गौणी वृत्तिरस्ति ततो वेदेपि सा अविरुद्धेत्यर्थः। लोके कुत्र प्रसिद्धिरित्यत आह—माणवके विभावसुरिति। अग्निर्माणवकः सिंहो देवदत्त इत्यादौ चाग्न्यादिभावस्य माणवकादावनुपपत्तेस्तद्गुणशुचित्वशौर्यादिनिमित्तोयं प्रयोग इत्यर्थः॥ १७०॥

ननु लक्षणागौणयोः को भेदः, परत्र परशब्दवृत्तेरुभयत्रापितुल्यत्वात्सत्यमस्त्युभयत्रापि परत्र परशब्दवृत्तित्वम् अत एवोभयत्रापि वृत्तेरुपचारव्यवहारः। अत एव केषांचित् तयोरेकवृत्तित्वाभिमानः। तथाप्यनुमानत्रैविध्यवदवान्तरलक्षणभेदाद्भेद इत्याह—

परशब्दवृत्तिरपरत्र भवेदिति
यद्यपीदमुभयोः सदृशम्।
अनयोस्तथाऽपि तु विभागकरं
स्फुटमस्ति लक्षणमवान्तरकम्॥ १७१॥

परशब्देति। उभयोर्लक्षणागुणवृत्त्योः परत्र माणवकतीरादौ परशब्दस्य गङ्गाग्न्यादिशब्दस्य वृत्तिरिति। इदन्तु लक्षणं सदृशं यद्यपि तथाप्यनयोर्वृत्त्योर्विभागकरं परस्परभेदप्रयोजकमवान्तरकं लक्षणं स्फुटमस्तीति सम्बन्धः॥ १७१॥

किं तद्विशेषलक्षणमित्यत्राह—

गुणतो गुणवृत्तिरिष्यते
ह्यपरा लाक्षणिकी तु संगतेः ।
इति भेदकमस्ति लक्षणा
गुणवृत्त्योरिति वेदवादिनः ॥ १७२ ॥

गुणत इति । वाच्यार्थगुणयोगादित्यर्थः । सङ्गतो वाच्यार्थसम्बन्धादित्यर्थः । वाच्यार्थगुणयोगादन्यत्र शब्दवृत्तिः गौणी वाच्यार्थसम्बन्धमात्रादन्यत्र शब्दवृत्तिर्लक्षणेति भेद इत्यर्थः । तदुक्तम्-'अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगे वृत्तेरिष्टा तु गौणतेति' । एतदुभयं च मुख्यार्थानुपपत्तावेव स्वीक्रियते इति नातिप्रसङ्ग इति भावः । अग्निर्माणवक इत्यादावग्निशब्दस्य स्ववाच्याग्निगतशुचित्वादिसम्बन्धेनैव माणवके वृत्तिः न तु सम्बन्धिमात्रे तद्वैशिष्ट्यस्यैव ततोऽवगमाल्लक्षणायां च तस्य गुणत्वेनाऽपुरस्करणीयत्वात्सम्बन्धित्वमात्रस्यैव तीरादेरपेक्षितत्वादिति वृत्तिद्वैविध्यमिति भावः ॥१७२॥

एवं तत्वमस्यादिवाक्यस्य भागलक्षणया जहल्लक्षणया गौण्या वा वृत्त्या सर्वत्राप्यखण्डैकरसब्रह्मण्येव तात्पर्यमिति वर्णितम् । इदानीं लक्ष्यपदार्थद्वयस्वरूपमवान्तरवाक्यैर्निर्द्धारयिष्यन्निर्धारितस्वरूपमादाय महावाक्यार्थं दर्शयति—

नित्यः शुद्धो बुद्धमुक्तस्वभावः
सत्यः सूक्ष्मः सन्विभुश्चाद्वितीयः ।
आनन्दाब्धिर्यः परः सोऽहमस्मि
प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ १७३ ॥

नित्यःशुद्ध इति । प्रत्यग्धातुरहं यः परो नित्यशुद्धत्वादिदशविशेषणात्मकः सोऽस्मि अत्र संशीतिर्नास्तीति सम्बन्धः । प्रत्यगिति

त्वंपदलक्ष्यनिर्देशः । पर इति तत्पदलक्षणविशेष्यब्रह्मनिर्देशः । परमात्मेत्यर्थः । तस्यैव स्वरूपभूतानि नित्यशुद्धत्वादीनि दशविशेषणानि तस्यार्थः—नित्यो विनाशाभावोपलक्षितस्वरूपः, अनेन कालपरिच्छेदो निराकृतः—अनन्तभावस्यानादित्वनियमात् । अथवा नित्यपदेनैवोभयकालावधिशून्योपलक्षितं स्वरूपमुच्यते—तादृगूप एवात्मादौ नित्यपदप्रयोगात् । शुद्धः मालिन्याभावोपलक्षितस्वरूपः, तन्मालिन्यस्य रागादेर्पङ्कादेर्वा तत्राभावाच्छुद्ध एव परमेश्वरः । अथवा—शुद्धपदेन शब्दस्पर्शादिजन्यशुद्ध्यभावोपलक्षितस्वरूपमभिधीयते । बुद्धस्वभावः चैतन्यस्वरूपः । मुक्तस्वभावः पारतन्त्र्यविरोधिस्वातन्त्र्यस्वरूपः । सत्यः त्रैकालिकबाधाभावोपलक्षितस्वरूपः । सूक्ष्मः महत्त्वरूपवत्त्वादिधर्मराहित्योपलक्षितस्वरूपः । सन् अस्ति धातुप्रकृत्यर्थभावस्वरूपः । अतो न सत्यपदेन पुनरुक्तिः । विभुः देशपरिच्छेदाभावोपलक्षितस्वरूपः । अद्वितीयः वस्तुपरिच्छेदाभावोपक्षितस्वरूपः । आनन्दाब्धिर्निरतिशयानन्दस्वरूपः । सोहमस्मीत्युक्तविशेषणात्मकब्रह्मणश्चैतन्यात्मकप्रतीचश्चाभेदलक्षणं वाक्यार्थमनुभूय वाक्यार्थे शिष्यविश्वासार्थमाह—नास्तीति । अत्र वाक्यार्थे संशीतिः संशयो मम नास्त्यतस्त्वयापि संशयो न कर्त्तव्य इति भावः ॥ १७३ ॥

एवं स्वाभिमतं तत्पदार्थस्वरूपं प्रदर्श्य पराभिमतमपि द्वेधा दर्शयति—

> सच्चित्सुखाद्वयवपुः कथयन्ति केचि-
> त्सच्चित्सुखात्मकमिति प्रथयन्ति केचित् ।
> ब्रह्मेतराणि किल नास्य वपूंषि तेषां
> बुद्धौ स्फुरन्त्यपररूपनिवृत्तिभावात् ॥ १७४ ॥

सच्चिदिति । ब्रह्म सच्चित्सुखाद्वयवपुः सत्यज्ञानानन्दानन्तात्मक-

मिति केचित्कथयन्ति । केचिच्च सच्चित्सुखात्मकमिति प्रथयन्ति प्रकाशयन्तीति सम्बन्धः । नन्वन्यान्यपि नित्यत्वादिविशेषणानि सन्ति तत्कथं सच्चित्सुखाद्वयरूपमेव ब्रह्मेति तत्राह—इतराणीति । नित्यत्वादिविशेषणान्यस्य ब्रह्मणो वपूंषि सन्ति बुद्धौ न परिस्फुरन्ति किल ब्रह्मस्वरूपत्वेन न प्रतीयन्ते किल। तत्र हेतुः—तेषामपररूपनिवृत्तिभावादिति। नित्यत्वादीनामनित्यत्वाद्यभावरूपत्वाद्भावाभावयोश्चैक्यानुपपत्तेरित्यर्थः। अत्रेदं किलशब्दसूचितास्वारस्यबीजं किं तत् । नित्यं विभुं सर्वगतं सुसूक्ष्मम्, अजरामरं शुद्धमपापविद्धं, विज्ञानमानन्दं ब्रह्म, विमुक्तश्च विमुच्यते, सत्यस्य सत्यं, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि,त्यादिश्रुतिभिर्नित्यत्वादीनामप्यविशेषेण स्वरूपत्वेनावधारणम् । न च तेषामभावरूपत्वात्तदनुपपत्तिर्व्याख्यातप्रकारेण तेषामपि भावरूपत्वान्नित्यत्वानीनां स्वरूपबहिर्भावे स्वरूपस्यानित्यत्वादिदोषप्रसङ्गश्च । तस्मात्तेषामपि तत्स्वरूपत्वमिति भावः ॥ १७४ ॥

ननु ब्रह्मणः सत्यादिवाक्यैः सत्याद्यात्मकत्वं न सिद्ध्यति । सत्यादिपदानां ब्रह्मस्वरूपपरत्वे समप्रधानत्वेन ब्रह्मपदेनान्वयानुपपत्तेः न च तेषां तदन्वयं विना ब्रह्मणः सत्याद्यात्मकता सिद्ध्यतीत्याशङ्क्य समप्रधान्यमसिद्धमित्याह—

ब्रह्मेति शेषिपदमत्र हि लक्ष्यमेकं
शेषाणि लक्षणसमर्पणमस्य कुर्युः ।
लक्ष्यार्पणेन सह लक्षणवाचि सर्वं
संगच्छतेऽरुणपदं क्रयवाचिनैव ॥ १७५ ॥

ब्रह्मेतीति । अत्र सत्यज्ञानमनन्तमिति वाक्ये ब्रह्मेति पदं शेषि विशेष्यवाचकतया प्रधानम् । अत्र हेतुर्हीति यत एकस्मिन्वाक्ये एकमेव लक्ष्यं लक्ष्यवाचकं नानेकमुद्देश्यविधेयभेदेन वाक्यभेदप्रस

ङ्गात्। लक्ष्यं च प्रधानम्, तच्चात्र ब्रह्मैव तस्यैव ब्रह्मविदाप्नोति परमिति मुमुक्षुविज्ञेयत्वेन प्रकृतत्वात्। यद्यपि सत्यादिकमपि स्वरूपमेव तथापि तत्प्रधानत्वेन तज्ज्ञानं पुरुषार्थो न भवतीति वाक्यप्रक्रमबलेन ज्ञायते ततो ब्रह्मपदमेवात्र प्रधानं सत्यादिपदानि त्वस्य ब्रह्मणो लक्षणं समर्पयन्तीत्यर्थः। ननु ब्रह्मणो विशेष्यत्वेन प्रधानत्वेपि सत्यादीनां तदुपसर्जनत्वे प्रमाणाभावात्कथं तेषामन्वयः। न च तेषां तल्लक्षणसमर्पकत्वात्तदुपसर्जनत्वमिति वाच्यम्। तन्नियमासिद्धेरित्याशङ्क्याह— लक्ष्यार्पणेनेति। लक्षणं हि लक्ष्यपरिज्ञानायैव लक्षणपदानि समर्पयन्ति न विपरीततया यद्धि यदर्थं तत्तच्छेषमिति प्रसिद्धं ततो लक्षणानां लक्ष्यशेषत्वात्तद्वाचकपदेनेतरेषां सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्मेत्यन्वयः सिद्ध्यतीत्यर्थः। अथवा-सत्यादिपदानां ब्रह्मपदेनैव प्रत्येकमन्वयः। किं वा परस्परान्वयोपि। नाद्यः। व्यवहितेन तेनैव सम्बन्धे प्रमाणाभावाद् ब्रह्मपदस्यैकान्वयानन्तरमाकाङ्क्षोपरमाच्च। न द्वितीयः। सत्यादिपदानां ब्रह्मपदेनान्वयेनैवाकाङ्क्षोपशमनादित्याशङ्क्य प्रथमं ब्रह्मपदेनैव सर्वेषामन्वयो भवति। न चात्र प्रमाणाभावः। लक्ष्यलक्षणपदतया शेषशेषित्वस्यैव प्रमाणत्वात्। न च ब्रह्मपदस्याकाङ्क्षाभावः। सत्यं ब्रह्म पुनः कीदृग्विधं ज्ञानं पुनः कीदृशमनन्तमितिरूपेणोत्थाप्याकाङ्क्षोपपत्तेरित्याह—ब्रह्मेति। उपसर्जनपदानां सर्वेषां प्रधानपदेनैवान्वये दृष्टान्तमाह—अरुणापदमिति। यथाऽरुणया पिङ्गाक्ष्येत्यारुणयादिगुणवाचकानां पदानां प्रधानेन क्रीणातिना ऽरुणया क्रीणाति पिङ्गाक्ष्या क्रीणाति एकहायन्या क्रीणाति गवा क्रीणातीति प्रत्येकमन्वयस्तद्वदित्यर्थः॥ १७५॥

ननु यदि सत्यादिपदानि प्रत्येकं ब्रह्मपदेनान्वीयुः तदा सत्यादिपदानां परस्परान्वयाभावान्न सत्यादीनां परस्परात्मतेति परस्परं भिन्नानि सन्त्येव सत्यादीनि विशेषणानि स्युः ततो वाक्यार्थ एकरसो न भवेत्तत्राह—

पृष्ठात्परस्परयुजा प्रतिपत्तिरेषा-
मेवंविधत्वमुपपादयितुं समर्था ।
लक्ष्यस्य तस्य महतः क्रयवस्तुवत्स्यात्
सर्वस्य कारकपदस्य परस्परेण ॥ १७६ ॥

पृष्ठादिति । एषां सत्यादिपदानां पृष्ठात्पश्चात्परस्परयुजा प्रतिपत्तिः अन्योऽन्यान्वयावगमः तस्य महतो लक्ष्यस्य ब्रह्मण एवंविधत्वमनवच्छिन्नमहत्त्वं सत्याद्येकरसत्वमुपपादयितुं समर्था भवतीत्यर्थः। सत्यादिपदानि ह्यादौ ब्रह्मपदेनान्वीयमानानि ब्रह्मणो ब्रह्मपदात्प्रतीयमानानवच्छिन्नमहत्त्वाख्यसत्याद्येकरसत्वनिर्वाहायोत्था-प्याकाङ्क्षया पश्चात्परस्परान्वयमपि प्राप्नुवन्ति सत्यं ज्ञानमनन्तं ब्रह्मेति सत्यादिपदार्थानामपि परस्परात्मत्वं बोधयन्तीति नाखण्डार्थ त्वक्षतिरिति भावः। वस्तुतस्तु-सत्यादिपदार्थानां परस्परात्मत्वसम्भवेन तेषां पदानां परस्परान्वयोपि संभवतीत्येतावता ब्रह्मपदावृत्त्या वाक्याभेदशङ्कानिराकरणार्थं वा पार्ष्ठिकान्वयः स्वीक्रियते। सत्यादीनां परस्परान्वयप्रतीतिस्तु ब्रह्मणोऽनवच्छिन्नमहत्त्वबोधकब्रह्मपदादेव भवतीति द्रष्टव्यम्। पदानां पार्ष्ठिकान्वये दृष्टान्तमाह क्रयवस्तुवदिति। क्रयवस्तुनः कारकपदानामिवेत्यर्थः। तदेव विवृणोति सर्वस्येति। यथा क्रयवस्तुनः क्रयणस्य यत्कारकवाचकारुणादिपदं तस्य सर्वस्यादौ क्रीणातिपदेनान्वितस्य पश्चात्स्वार्थगुणानामवच्छेद्यावच्छेदकभावावगमसिद्धयर्थं परस्परेणान्वयस्तथेत्यर्थः। यद्यप्यारुण्यादीनि श्रुत्या प्रत्येकमेव क्रयणं प्रति साधनत्वेन विधीयन्ते तथापि तान्यन्योन्यमवच्छिन्नान्येव साधनं भवन्ति। अन्यथा कयाचिदरुणयाऽन्यया कयाचित्पिङ्गाक्ष्या क्रयणप्रसङ्गादवच्छेद्यावच्छेदकभावप्रतीतिश्च न तेषां परस्परान्वयं विना सम्भवतीति भावः ॥ १७६ ॥

ननु सत्यादिपदार्थानामत्यन्तं भिन्नत्वान्न तदात्मत्वं ब्रह्मणः

सम्भवति लक्ष्याणां तेषामभेद इति चेन्न—वचनविशेषादौ व्युत्पन्नस्य सत्यादिपदस्य ब्रह्मणा संबन्धाभावादित्याशङ्क्याह—

तत्त्वं पदार्थविषयो नय एव योज्यः
सत्यादिवस्तुषु न तत्र विशेषकल्पः ।
सत्यादिशब्दविषयाः शबलास्तदर्थ-
भागेषु लाक्षणिकवृत्तिरपीह तुल्या ॥ १७७ ॥

तत्त्वंपदार्थेति—तत्त्वंपदार्थावधिकृत्य यो न्यायः पूर्वमभिहितः वाच्यस्य शबलत्वं लक्षणया भागत्यागेन वाक्यार्थानुप्रवेशश्चेति स न्यायः सत्यादिपदार्थेष्वपि योज्यः । अतः शबले ब्रह्मण्येव तेषां व्युत्पन्नत्वान्न लक्ष्यसम्बन्धाभाव इत्यर्थः । ननु तादात्म्यवाक्यतदव-यवावान्तरवाक्यार्थयोः कथमेकन्यायविषयत्वं स्वतन्त्रपरतन्त्रवाक्यार्थ-रूपेण तयोर्विलक्षणत्वात्तत्राह—न तत्रेति । अवान्तरवाक्यपदार्थे विशेष-कल्पः विशेषक्लृप्तिरित्यर्थः । यद्यपि महावाक्यं स्वतन्त्रं सत्यादिवाक्यं तु तदपेक्षितार्थसमर्पकत्वात्परतन्त्रं तथापि न तदर्थयोः स्वतन्त्रपरतन्त्र-भावोस्ति । उभयत्राप्यर्थस्यैकत्वादवान्तरवाक्येन पदार्थपरि-शोधनं विना महावाक्यार्थप्रतीतिर्न भवतीत्येतावतैव तस्य तच्छेषत्वं ततो न न्यायविशेष इत्यर्थः । अथवा—महावाक्यस्य जीवपरतादा-त्म्यबोधकत्वात्तत्र च लक्षणां विनानुपपत्तेर्लक्षणान्तरकल्पनायां च दोषस्य सत्त्वात्केवलाज्ञानाहंकारादौ ब्रह्मादिपदानां प्रयोगाभावाच्च । शबले व्युत्पत्तिर्भागत्यागलक्षणा च स्वीक्रियते । न चात्र जीवपर-तादात्म्यं बोध्यते । न वा केवले प्रयोगाभावः सत्यो घटः घटज्ञान-मित्यादौ केवले प्रयोगदर्शनादित्याशङ्क्य जीवपरतादात्म्यबोधकत्वा-भावेपि सत्यादीनां परस्परं सामानाधिकरण्यप्रतीतेस्तादात्म्या-वगमात्तस्य च गुणगुण्यादिभावाभावेनामुख्यस्यानुपपत्तेर्वक्ष्य-माणत्वादत्यन्ताभेदस्य लक्षणां विनाऽयोगाल्लक्षणान्तरपरिग्रहे च

ब्रह्मणः सत्याद्यात्मकत्वानुपपत्तेर्जहल्लक्षणायामसत्यत्वाद्यापत्तेश्च । पटादेरध्यस्ततया स्वातन्त्र्येण प्रतीत्यनुपपत्तेश्च । केवले तस्मिन् प्रयोगस्याप्यसिद्धेस्तुल्य एव न्याय इत्याह—न तत्रेति । तौल्यमेवाह—सत्यादिशब्दविषया इति । तदर्थभागेषु—सत्यादिपदवाच्यार्थभागेषु, इह—सत्यादिवाक्ये ॥ १७७ ॥

तत्र तावत्सत्यादिपदवाच्यं शबलं दर्शयति—

आकाशादौ सत्यता तावदेका<br>
प्रत्यङ्मात्रे सत्यता काचिदन्या ।<br>
तत्सम्पर्कात्सत्यता तत्र चान्या<br>
व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥ १७८ ॥

आकाशादाविति । आकाशवाय्वादौ काचित्सत्यता विद्यते तस्यापि व्यवहारकाले प्रमाणाबाधितत्वादबाधितस्यैव सत्यादिपदार्थत्वात्प्रत्यङ्मात्रे चान्या त्रैकालिकबाधाभावोपलक्षितस्वरूपलक्षणा काचित्सत्यता विद्यते । अन्यथा तदध्यस्तगगनादेर्यावद्बाधं सत्यतानुपलम्भप्रसङ्गात्तयोराकाशाद्यात्मनोः परस्पराध्यासात्तत्र शबलेऽन्या सत्यत्वद्वयात्मिका सत्यतास्ति । तत्र शबलेऽयं सत्यशब्दो व्युत्पन्न इत्यर्थः ॥ १७८ ॥

ज्ञानपदवाच्यं शबलं दर्शयति—

बुद्धेर्वृत्तौ ज्ञानता तावदेका<br>
प्रत्यग्बोधे ज्ञानता काचिदन्या ।<br>
तत्सम्पर्कोज्ज्ञानता तत्र चान्या<br>
व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र ॥ १७९ ॥

बुद्धेर्वृतौ ज्ञानतेति । घटाद्याकारबुद्धिवृत्तिरपि हि स्वच्छतया चैतन्याभिव्यञ्जनयोग्यत्वेनाविद्याविरोधितया ज्ञानतां भजते । प्रती-

वस्तु मुख्यमेव ज्ञानात्मत्वं तस्याप्रकाशात्मत्वे विश्वस्यानवभासप्रसङ्गा-त्ततस्तदुभयात्मकं शबलमपि विज्ञानमिति तत्र ज्ञानशब्दो व्युत्पन्न इत्यर्थः ॥ १७९ ॥

आनन्दपदवाच्यं शबलमाह—

बुद्धेर्वृत्तौ तावदानन्दतैका
प्रत्यङ्मात्रे काचिदानन्दतान्या ।
तत्सम्पर्कात्तत्र चाऽऽनन्दताऽन्या
व्युत्पन्नोऽयं तत्र चाऽऽनन्दशब्दः ॥ १८० ॥

बुद्धेर्वृताविति । शुभकर्मोपार्जितान्तःकरणवृत्तेरात्मस्वरूपानन्द व्यञ्जकत्वादानन्दत्वं प्रतीचि तु सा स्वरूपभूता मुख्या । अन्यथा तस्य परमप्रेमास्पदत्वानुपपत्तेः ॥ १८० ॥

नित्यपदार्थमाह—

आकाशादौ नित्यता तावदेका
प्रत्यङ्मात्रे नित्यता काचिदन्या ।
तत्सम्पर्कान्नित्यता तत्र चान्या
व्युत्पन्नोऽयं नित्यशब्दस्तु तत्र ॥ १८१ ॥

आकाशादाविति । वस्तुतो विनाशिन आकाशस्यापि प्रलयपर्यन्त-मविनाशित्वाद्विनाशाप्रतियोगित्वलक्षणं नित्यत्वममुख्यमाकाशका-लादौ विद्यते । प्रतीचि तन्मुख्यमेव विद्यते तस्य सर्वदा विनाशाभा-वोपलक्षितस्वरूपत्वादन्यथा जगच्छून्यतापत्तेरित्यर्थः ॥ १८१ ॥

इदानीं शुद्धपदार्थमाह—

आकाशादौ शुद्धता तावदेका
प्रत्यङ्मात्रे शुद्धता काचिदन्या ।
तत्सम्पर्काच्छुद्धता तत्र चान्या
व्युत्पन्नोऽयं शुद्धशब्दस्तु तत्र ॥ १८२ ॥

आकाशादाविति । पङ्कप्रक्षेपादिप्रयुक्तमालिन्यराहित्याख्यं शुद्धत्वमाकाशे विद्यते। तच्चामुख्यमेवाकाशस्याप्यविद्याकार्यत्वेन मलिनत्वात् । आत्मनि तु रागाद्यभावोपलक्षितस्वरूपे मुख्यैव शुद्धता तस्यासङ्गत्वेन कथमप्यशुद्धेरभावादित्यर्थः ॥ १८२ ॥

मुक्तपदार्थमाह—

गोवत्सादौ मुक्तता तावदेका
प्रत्यङ्मात्रे मुक्तता काचिदन्या ।
तत्सम्पर्कान्मुक्तता तत्र चान्या
व्युत्पन्नोऽयं मुक्तशब्दस्तु तत्र ॥ १८३ ॥

गोवत्सादाविति । गोवत्सादेरपि कदाचिद्रज्जुबन्धनाभावेनाबद्धत्वलक्षणं मुक्तत्वं विद्यते आत्मनि तु सर्वदा पारतन्त्र्याभावोपलक्षितस्वरूपे मुक्तता मुख्यैव विद्यते इत्यर्थः ॥ १८३ ॥

सच्छब्दार्थमाह—

आकाशादावस्तिता तावदेका
प्रत्यक्तत्त्वे चास्तिता काचिदन्या ।
तत्सम्पर्कादस्तिता तत्र चान्या
व्युत्पन्नोऽयं तत्र चास्तीति शब्दः ॥ १८४ ॥

आकाशादाविति । अस्तिता अस्तिप्रत्ययवेद्यत्वं भावत्वममुख्य-

माकाशादेरपि विद्यते वस्तुतस्तस्यानिर्वचनीयत्वात् । प्रतीचि तु भावस्वरूपता सा मुख्यैव इत्यर्थः । एतच्च सूक्ष्मतादेरप्युपलक्षणं तत्राकाशादाविन्द्रियाग्राह्यत्वलक्षणा सूक्ष्मता सा चामुख्या तस्यापि कार्यतया च धर्मवत्तया च स्थूलत्वात् । प्रतीचि तु सा चामुख्या तस्य सर्वधर्मरहितत्वात् 'सूक्ष्मात्सूक्ष्मतरमि'ति श्रुतेः । तच्छबले च सूक्ष्मशब्दव्युत्पत्तिः । एवमाकाशादौ काचिद्विभुता सा चापेक्षिकी तस्यापि कार्यतया परिच्छिन्नत्वादात्मनि तु सा देशपरिच्छेदाभावोपलक्षितस्वरूपभूता मुख्यैव 'विभुं सर्वगतमि'त्यादि श्रुतेः । तच्छबले विभुशब्दव्युत्पत्तिः । अद्वितीयशब्दव्युत्पत्तिस्तु प्रागेववर्णितेति भावः ॥ १८४ ॥

एवं सत्यादिपदानां वाच्यं दर्शयित्वा लक्ष्यं दर्शयति तत्रेयमाशङ्का ननु सत्यादिपदानां वियदादि शबले व्युत्पन्नानां भागलक्षणया स्वार्थबोधकत्वे आकाशादिसत्यादिभागस्यैव लक्ष्यत्वं किं न स्यात् । नचैवं सामानाधिकरण्यविरोधः । तस्यान्यथाप्युपपत्तेरिति तत्राह—

**यो यः शब्दो यत्कृतेऽर्थे निरूढ-**
**स्तत्रैवार्थे लक्षणा वृत्तिरस्य ।**
**वक्तव्या स्यात्पण्डितैरेवमेतत्**
**प्रत्यक्पूर्णं ब्रह्म वेदान्तवेद्यम् ॥ १८५ ॥**

यो यः शब्द इति । यत्कृते यदर्थप्रतिपत्तिप्रयोजनायार्थेऽभिधेये यः शब्दो निरूढः प्रसिद्धः प्रयुज्यते तस्य शब्दस्य तस्मिन्नर्थ एव लक्षणा वृत्तिः पण्डितैर्वक्तव्या नान्यत्र । तथैव सर्वत्र लक्षणायां नियमात् । अन्यथा भ्रान्तवाक्येपि लक्षणाकल्पनाप्रसङ्गादित्यर्थः । फलितमाह—एवमिति । एवं सति प्रत्यक्प्रतिपत्तृस्वरूपमत एव पूर्णं ब्रह्मैव वेदान्तवेद्यं न वियदादि सत्यादिवाक्यप्रतिपाद्यब्रह्मपरिज्ञानायैव

वियदादिपरिज्ञानार्थं वाक्यप्रयोगाभावादित्यर्थः । अथवा **येन कृतो** यत्कृतस्तस्मिन्नर्थ इति समानाधिकरणसप्तमी सत्यादिपदवाच्य सत्यादिशबलं हि सत्याद्यात्मकब्रह्मणैव कृतं संपन्नं ब्रह्मसत्यतयैव वियदादीनामपि सत्यवत्प्रतीतेः । अतः सत्याद्यात्मकवियदादि-ब्रह्मसमुदायात्मकं शबलं ब्रह्म कृतमेवेति तत्रैव सत्यादिपदस्य लक्षणा युज्यते न वियदादौ तस्य स्वतः सत्ताभावादेतादृशविवेकदशायामेव लक्षणाङ्गीकारादत एव पण्डितैरित्युक्तम् । ततो न वियदादीनां वाक्यार्थत्वमित्यर्थः ॥ १८५ ॥

ननु सत्यादिपदलक्ष्यस्याभेदतावन्मात्रत्वमनुपपन्नं सत्यादिपदानां सहप्रयोगानुपपत्तेः । न हि घटो घट इति सहप्रयोगोऽर्थवान्भवति । अतोऽवश्यमतिरेको वक्तव्य इति नाखण्डार्थत्वमित्यत आह –

**सत्येऽप्यस्ति ज्ञानता ज्ञानतायां**
**सत्यत्वं च स्पष्टमस्त्येव तद्वत् ।**
**सत्यप्येवं नातिरेकावकाशः**
**पूर्णे तत्त्वे ज्ञानसत्योपपत्तेः ॥ १८६ ॥**

सत्येऽप्यस्तीति । यथा सत्ये सत्यपदलक्ष्ये ज्ञानता ज्ञानपदलक्ष्यं विद्यते । तद्वत् ज्ञानतायां च सत्यत्वं स्पष्टं निसन्दिग्धं विद्यते । सत्यज्ञानयोः परस्परमभेदो यद्यप्येवं सत्यप्यतिरेकावकाश इति चेन्न कुतस्तत्राह—पूर्णे तत्त्वे ज्ञानसत्योपपत्तेरिति । अथवा—यद्यपीति नानुपञ्जनीयं ज्ञानं सत्यात्मकं सत्यं च ज्ञानात्मकमिति सत्यज्ञानयोरेवमत्यन्ताभेदे सत्यप्यारोपितभेदनिराकरणाय सहप्रयोगोपपत्तेर्नातिरेकावकाश इत्यर्थः । अतिरेकाङ्गीकारे च बाधकमाह—पूर्णे तत्त्व इति । **तत्त्वे पूर्णे** ऽत्यन्ताभेदे सत्येव ज्ञानस्य ज्ञातत्वं सत्यस्य सत्यत्वमुपपद्यत इत्यर्थः । एतदुक्तं भवति—ज्ञानसत्ययोरत्यन्ताभेदे सत्येव तात्त्वं पूर्णमेकरसं भवति ।

तत्त्वस्य चैकरसत्वे सत्येव ज्ञानस्य सत्याभिन्नतयाऽनृतजडविलक्षणत्वेन ज्ञानत्वमन्यथाऽनृतत्वेन जडविलक्षणत्वानुपपत्तेः। एवं सत्यस्यापि ज्ञानात्मतया दृश्यानृतविलक्षणत्वेन सत्यत्वमन्यथा दृश्यत्वेन रजतादवत्सत्यत्वानुपपत्तेरिति ॥ १८६ ॥

एवमेव ज्ञानानन्दयोरप्यतिरेकं निराकरोति—

आनन्दत्वे ज्ञानता ज्ञानताया-
मानन्दत्वं विद्यते निर्विशङ्कम्।
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे ज्ञानसौख्योपपत्तेः ॥ १८७ ॥

आनन्दत्व इति। निर्विशङ्कं निर्विवादमित्यर्थः। ज्ञानस्य ज्ञानत्वं सुखस्य सौख्यं चोपपद्यत इत्यर्थः। आनन्दस्य ज्ञानाभिन्नत्वे दृश्यदुःखविरुद्धत्वेनानन्दत्वम् एवं ज्ञानस्याप्यानन्दात्मत्वे दुःखजडविलक्षणतया ज्ञानत्वमिति भावः ॥ १८७ ॥

आनन्दसत्ययोरप्यतिरेकं निराकरोति—

आनन्दत्वे सत्यता सत्यताया-
मानन्दत्वं निर्विवादं प्रसिद्धम्।
सत्यप्येवं नातिरेकावकाशः
पूर्णे तत्त्वे सत्यसौख्योपपत्तेः ॥ १८८ ॥

आनन्दत्व इति। सत्यता प्रसिद्धेति विभक्तिविपरिणामः। उभयोरप्यत्यन्ताभेद एव सत्यानन्दयोः सत्यत्वानन्दत्वयोः उपपत्तिः। अन्यथा अनानन्दरजतादिविलक्षणत्वाभावेन सत्यस्य सत्यता असत्यदुःखविलक्षणत्वाभावेनानन्दस्यानन्दत्वं चानुपपन्नमिति भावः ॥१८८॥

उक्तं न्यायं नित्यादिपदार्थेष्वप्यतिदिशति—

शेषेऽप्यूह्यं न्यायसाम्यादशेष-
मन्योन्यस्मिन्नास्तिता पूर्णता च ।
अन्योऽन्यस्याजामिता शब्दशक्ते-
रेवं सुस्थं सर्वमुक्तोपपत्तेः ॥ १८६ ॥

शेषेऽप्यूह्यमिति । न्यायस्य सहप्रयोगोपपादनविषयस्य नित्याद्यभेदाभावेऽनित्याशुचिबन्धस्थूलाभावपरिच्छिन्नादिवैलक्षण्याभावेन यथायोगं नित्यादिष्वनित्यत्वापादनविषयस्य समत्वात् नित्यादिपदार्थेष्वप्यशेषमत्यन्ताभिन्नत्वादिकमूह्यम् । शेषपदार्थमाह—अन्योन्यस्मिन्निति । अन्योन्याभिन्नत्वमत एव पूर्णत्वम् । नन्वारोपितभेदयोरर्थयोर्भेदभ्रमनिरासार्थत्वात्सहप्रयोगोर्थवान्भवतु तथापि पदयोः पर्यायत्वेन सहप्रयोगोऽनुपपन्न इत्याशङ्क्यानन्यथासिद्धप्रयोजनलाभे इन्द्रः शक्र इत्यादौ पर्याययोरपि सहप्रयोगदर्शनान्नायं नियमः महावाक्यस्थपदवदस्यापि भिन्नप्रवृत्तिनिमित्तत्वान्न वा पर्यायत्वमित्याह—अजामितेति । तत्त्वमादिपदयोरुक्तोपपत्तेः शब्दशक्तिर्जामिता पर्यायता नास्तीत्यर्थः । नन्वेवमपि सत्यादिवाक्ये पदान्तरं व्यर्थं तत्कृत्यस्य लक्ष्यपरिज्ञानस्यैकेनैव सिद्धत्वात्, न च महावाक्यगतपदद्वयवदस्यापि प्रमितिजनकत्वेनार्थवत्त्वमेकपदसमर्पितसत्यज्ञानानन्दात्मकतत्पदार्थमादायापि महावाक्येन तदुपपत्ते. । न च पदान्तरसन्निधानेऽसति विरुद्धार्थवाचकपदद्वयसामानाधिकरण्याधीनार्थविशेषणविशेष्यभावावगमाधीनानुपपत्तिस्फुरणाभावे लक्षणैव न तदभावे च न सत्याद्यात्मकवस्तुप्रतीतिः न हि सत्यादिपदमुख्यार्थोपि ज्ञानाद्यात्मको भवतीति वाच्यम् । तत्किमेकस्मिन्पदे लक्षणासिद्ध्यर्थमेव पदान्तरप्रयोगः । न चैतत्संभवति । वाक्यार्थज्ञानायैव वृद्धानां शब्दप्रयोगदर्शनात् । किंचात्र लक्षणापि न पदान्तरसामानाधिकरण्यमपेक्षते लक्ष्यपदार्थेनान्वयानुपपत्त्यैव तत्सिद्धेर्ब्रह्मपदेन हि स्वरसतोनवच्छिन्नमहदेव

प्रतीयते। बृहिधातोस्तत्रैव व्युत्पत्तेः। पर्वतो बृहन्नित्यादौ तु मानान्तरबाधात्संकुचितमहत्त्वप्रतीतिरत्र तु मानान्तरविरोधाभावादुत्सर्गसिद्धमनवच्छिन्नमहत्त्वमेव ब्रह्मपदं प्रतिपादयति। तच्च सत्यादिपदार्थलक्षणां विना न निर्वहतीति पदद्वयसामानाधिकरण्यमनपेक्षितमेव। ननु सत्यादिपदस्य मुख्यार्थत्वानुरोधेन ब्रह्मपदं संकुचितवृत्त्येव किं न स्यादिति चेन्न। ब्रह्मपदार्थस्य प्रधानस्य गुणभूतसत्यादिपदार्थानुरोधेन संकुचितत्वकल्पनानुपपत्तेः। गुणस्य च प्रधानानुरोधेनान्यथाभावः सूचितः गुणे त्वन्यायकल्पनमिति न्यायात्। ननु यथा प्रयाजादिवाक्यानि विनिगमकाभावेन प्रत्येकं कर्मविधायकतया सार्थकानि। एवं सत्यादिपदान्यपि प्रत्येकं बोधकानीति चेन्न। समिदादिवाक्यस्य विनिगमकाभावेन कर्मस्वरूपविधायकत्वेपि व्यतिरिक्तार्थतया विधायकत्वं न चेह तथास्ति। न चात्र विनिगमकाभावः। आवश्यकब्रह्मपदादेव विवक्षितार्थप्रतीत्युपपत्तेः। न च ब्रह्मणो जडादिव्यावृत्तिबोधेन तेषामर्थवत्त्वं तद्बोधस्य निष्प्रयोजनत्वात्सत्यादिस्वरूपब्रह्मज्ञानस्यैव पुरुषार्थत्वात्तस्मात्सत्यादिपदं व्यर्थमिति चेत्किं ब्रह्मपदेनानवच्छिन्नं महत्प्रतिपाद्यते उत सत्यज्ञानानन्दात्मकमिति। आद्ये तु न पदान्तरं व्यर्थं सत्यादिस्वरूपबोधेनार्थवत्त्वात्। न द्वितीयः। ब्रह्मपदस्य तादृशसामर्थ्याभावात्। ननु ब्रह्मपदं स्वार्थस्यानवच्छिन्नमहत्त्वं बोधयज्ज्ञानाद्यात्मकत्वमपि बोधयति, अन्यथा ज्ञानादेः पृथक्सत्त्वे ब्रह्मपदार्थस्यानवच्छिन्नमहत्त्वप्रतीत्यनुपपत्तेरिति चेन्न। ब्रह्मणो जडासत्यात्मकत्वेनापि ब्रह्मपदार्थस्यानवच्छिन्नमहत्त्वोपपत्तेः। इदं हि तस्यानवच्छिन्नमहत्त्वं यत्स्वव्यतिरिक्तशून्यत्वमेतच्च ब्रह्मणो सत्यानृतात्मत्वेपि निर्वहति। न चैतादृशब्रह्मबोधेन पुरुषार्थो भवति। ज्ञानात्मकजीवाभेदज्ञानस्यैव पुरुषार्थसाधनत्वान्न वा तन्निश्चये किञ्चित्प्रमाणमस्त्यतो ब्रह्मणो ज्ञानाद्यात्मकत्वबोधाय सत्यादिपदमपेक्ष्यत इति तदर्थवदेव। अत एव सत्याद्यन्यतमेनैव भवितव्यं न

सर्वेणेत्यपि निरस्तम् सर्वेण विना सत्यज्ञानानन्दाद्यात्मकं ब्रह्मेति निश्चयानुपपत्तेः । विनिगमनाभावाच्च । एतदेव ब्रह्मणो जडादिव्यावृत्तये सत्यादिपदमपेक्ष्यत इत्यनेनोच्यते तस्मात्सत्यादिपदमर्थवदेवेत्यभिप्रेत्याह—एवं सुस्थं सर्वमिति । एवं सति सत्यज्ञानादीनामत्यन्ताभेदे सति सर्वं ज्ञानादेर्ज्ञानत्वं ब्रह्मणः पुरुषार्थत्वमित्येवमादिकं सुस्थमुपपन्नमित्यर्थः ॥ १८९ ॥

एवं तत्त्वंपदयोः शबले व्युत्पत्तिर्भागत्यागलक्षणया च वाक्यमखण्डार्थनिष्ठं वाक्यार्थश्च सत्यज्ञानाद्यवान्तरवाक्यानुरोधेन सच्चिदानन्दाद्यात्मक इत्यभ्यधायि तत्र यत्त्वंपदवाच्यशबलांशस्य प्रत्यक्त्वमात्मत्वमित्याद्युक्तं तत्कथं प्रत्यग्द्वैविध्यानुपपत्तेरित्याशङ्क्य स्वभाविककाल्पनिकभेदेन तद्वैविध्यं नानुपपन्नमेवमेवाद्वितीयत्वादिद्वैविध्यमप्युपपन्नमित्यभिप्रेत्याह—

**बोधात्मत्वे निर्निमित्ते प्रतीचो**
**बोधात्मत्वे तन्निमित्ते च बुद्धेः ।**
**बोधात्मत्वे बुद्धिधर्मौ च बुद्धे-**
**रुक्ते साक्षाद्वेदसिद्धान्तविद्भिः ॥ १९० ॥**

बोधात्मत्व इति । प्रतीचो बोधात्मत्वे निर्निमित्ते स्वाभाविके अन्यस्य तद्धर्मिणोऽभावाद्बुद्धेस्तु प्रतीयमाने बोधात्मत्वे बोद्धृत्वात्मत्वे तन्निमित्ते प्रत्यक्तादात्म्याध्यासनिमित्ते न स्वाभाविके इत्यर्थः । ते च बोधात्मत्वे आत्मनः साक्षादनुपचरितस्वरूपभूते बुद्धेस्तु न तथा किन्तु तद्धर्मावेवेत्याह—बोधात्मत्वे इति । बुद्धेर्बोधात्मत्वे बुद्धिधर्माविति सम्बन्धः । अयमर्थो नैष्कर्म्यसिद्धिकारैरप्युक्त इत्याह—उक्तेति । 'कूटस्थबोधप्रत्यक्त्वमनिमित्तं सदात्मनः । बोद्धृताहंतयोर्हेतुस्ताभ्यां तेनोपलक्ष्यते ॥ धर्मधर्मित्वभेदोऽस्याः सोपि नैवात्मनो यत' इत्यादिनोक्तमित्यर्थः ।१९०।

यथा जहल्लक्षणया गौण्यापि वृत्त्या महावाक्यार्थो वर्णितः। एवं सत्यादिपदानामपि तत्संभवतीत्याह—

**जहतीह च लक्षणा मता गुणवृत्तिश्च तथाऽभ्युपेयते।**
**न विशेषविनिर्णयक्षमं किमपीहास्ति विशेषकारणम्।१९१।**

जहतीति—ननु सत्यादिपदानां शबल एव व्युत्पन्नत्वाद्भागलक्षणैवेति तत्राह—न विशेषेति। केवलगगनादौ सत्यादिपदानामपि व्युत्पत्तिसंभवादित्यर्थः। इह सत्यादिवाक्ये अयमपि पक्षः स्वाभिमतो न भवति। अत्र च बीजं शबल एव व्युत्पत्तिरित्युपरिष्टान्निरूपयिष्यति॥ १९१॥

नन्वेवमप्यखण्डवाक्यार्थत्वमनुपपन्नं तत्पदार्थस्यैश्वर्यादिगुणविशिष्टत्वात्। तथा हि सत्यज्ञानादिवत्सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरिति तस्य स्वरूपभूतं वशित्वादिकमैश्वर्यं श्रुतिर्दर्शयति। मायायाश्चापरमैश्वर्यं तस्या निखिलजगत्कारणत्वाद्विद्यते। तस्मादज्ञानाद्यैश्वर्याद्धेतोरस्य शबलस्य च द्वित्वावच्छिन्नमेकमैश्वर्यं विद्यते। तत एतान्यैश्वर्याणि किमर्थं पूर्ववत्सत्यादित्रैविध्यवन्नेष्टानि तथा चैश्वर्यादिपदस्य शबले व्युत्पत्तिसंभवाद्भागत्यागलक्षणया स्वरूपभूतमैश्वर्यमपि बोध्यतां ततो नाखण्डार्थत्वमित्याह—

**ऐश्वर्यमप्यनुभवादिवदात्मरूपं**
**तस्मादबोधगतमस्य च तानि कस्मात्।**
**नेष्टानि पूर्ववदिति ब्रुवतो मुखस्य**
**सद्यः पिधानमनुसृत्य वचांसि कुर्मः॥ १९२॥**

ऐश्वर्यमपीति। दूषयति इति ब्रुवत इति। यदि श्रुतिमनुसृत्यैवात्मन ऐश्वर्यं स्वरूपं वक्तव्यमिति वर्णयसि तस्यैवं ब्रुवतस्ते मुखस्य श्रुतिवचांस्यनुसृत्यैव पिधानं कुर्मः श्रुत्या तस्य निषिद्धत्वादित्यर्थः॥१९२॥

ननु केयं श्रुतिर्यद्बलाच्छ्रुतिप्रतिपन्नमैश्वर्यं ब्रह्मस्वरूपमिति नेष्यते। एवं सति सत्यादिकं वा किमिति स्वरूपं भवेत्तस्य तत्त्वे चैतदपि तथैव स्याच्छ्रुतिप्रतिपन्नत्वाविशेषादिति तत्राह—

ऐश्वर्यवर्णनमतिस्फुटमेव कृत्वा
नेतीत्यवादि बहुशः श्रुतिभिः प्रयत्नात्।
सत्यादिवस्तुनि पुनर्न तथाऽस्ति पूर्व-
मुक्त्वा निषेधनमितीह विशेषयुक्तिः॥ १९३॥

ऐश्वर्येति। सर्वस्य वशी सर्वस्येशान इत्यादिनैश्वर्यं वर्णयित्वा स एष नेति नेत्यात्मा गृह्यो न हि गृह्यत इत्यध्यारोपापवादन्यायेनातिस्फुटमेव तन्निषेधति। एवं मूर्त्तामूर्त्तब्राह्मणे द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं चेत्यैश्वर्यमुपवर्ण्य अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्तीति सर्वमेव प्रपञ्चं वारयति। नचैवं सत्यादिवर्णनानन्तरं निषिध्यते। तस्मादैश्वर्यवर्णनानन्तरं श्रुतिभिरेव नेति नेतीत्युक्त्वा सत्यादीनां पुनस्तथानूद्य निषेधाभावादस्ति सत्यादिप्रतिपादने विशेष इति सत्यादिकमेवात्मस्वरूपमिति नाखण्डार्थत्वक्षतिरिति भावः॥ १९३॥

ननु द्विविधस्यापि वाक्यस्य लक्षणया स्वार्थपरत्वे श्रुतहान्यश्रुतकल्पने प्रसज्येयातमित्याशङ्क्य मुख्यार्थासंभवे लोकेपि तयोर्दृष्टत्वेन नैते दोषायेत्याह—

शब्दस्य लाक्षणिकमुख्यविभागभिन्ना
वृत्तिर्हि लौकिकवचस्युपलब्धपूर्वा।
यस्मादतो न घटते यदि मुख्यवृत्ति-
राश्रीयतामिह गिरश्चरमापि वृत्तिः॥ १९४॥

शब्दस्येति। चरमा लक्षणेत्यर्थः॥ १९४॥

एवं पदद्वयलक्षणया अखण्डवाक्यार्थमुपपादितमुपसंहरति—

**तस्मादखण्डमवबोधयितुं समर्थो**
**वेदान्तभूमिगतशब्दसमन्वयोऽतः ।**
**संसर्गलक्षणमपास्य विरोधहेतो-**
**र्वाक्यार्थमद्वयमखण्डमिहाऽऽश्रयस्व ॥१६५॥**

तस्मादिति । शब्दसमन्वयः—समानाधिकरणवाक्यमित्यर्थः । यतो वेदान्तानामखण्डार्थबोधने सामर्थ्यं यतश्च न संसर्गादिबोधने तत्सामर्थ्यमतो वेदान्तवाक्यार्थलक्षणमपर्यायानेकप्रातिपदिकानामेकार्थलक्षणाखण्डत्वमेवेत्युपसंहरति—अत इति । संसर्गलक्षणं संसर्गत्वलक्षणं विरोधहेतोः पदार्थयोर्विरुद्धत्वादित्यर्थः । अखण्डमखण्डत्वमित्यर्थः । इह वेदान्ते ॥ १६५ ॥

उक्तवाक्यार्थप्रतिपत्तौ परम्परोपायत्वेन सम्बन्धत्रयं तत्क्रमञ्च दर्शयति—

**सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः**
**पश्चादेष विशेषणेतरतया पश्चाद्विरोधोद्भवः ।**
**उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके**
**वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमः सूरिभिः ॥१६६॥**

सामानाधिकरण्यमत्र भवतीति । अत्र तत्त्वमस्यादिवाक्ये सामानाधिकरण्यमन्वयः । प्राथम्यभाक् प्रथमं भवति । पश्चात्तदनन्तरं विशेषणेतरतया विशेषणविशेष्यभावेनैषोऽन्वयो भवति । ततः पश्चाद्विरोधोद्भवः पदार्थयोः परस्परान्वयायोग्यत्वज्ञानमुत्पन्ने विरोधज्ञाने एकरसकेऽखण्डात्मके वस्तुनि ब्रह्मणि लक्षणया पदयोर्वृत्तिर्भवतीति तदर्थभागभागित्वलक्षणसम्बन्धश्चेत्ययं क्रम इह जगति वाक्यार्थप्रतिपत्त्यर्थं सूरिभिः पण्डितैर्ज्ञेय इत्यर्थः ॥ १६६ ॥

ननु कुत्र सामानाधिकरण्यं कुत्र वा विशेषणविशेष्यभावः कथं वा विरोधोद्भवः अयं क्रमो वा किमिति भवेत्तत्राह—

**सामानाधिकरण्यमत्र पदयोर्ज्ञेयस्तदीयार्थयोः ।**
**सम्बन्धस्तु विशेषणेतरतया ताभ्यां सहास्यात्मनः ।**
**सम्बन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधै-**
**रेतान्यर्थपदानि बुद्धपदवीमारोहणीयानि तु ॥ १९७॥**

सामानाधिकरण्यमिति। अत्रोक्तसम्बन्धेषु मध्ये पदयोः सम्बन्धः सामानाधिकरण्यं भवति भिन्नप्रवृत्तिनिमित्तकशब्दानामेकार्थवृत्तित्वस्य सामानाधिकरण्यत्वेन तस्य पदधर्मत्वादत एवायं प्रथमं भवति। वाक्यज्ञानस्य शब्दार्थज्ञानात्प्राग्भावित्वादत एव तदर्थं तदीयार्थयोरपर्यायानेकसमानाधिकृतपदार्थयोः सम्बन्धस्तु विशेषणेतरतया ज्ञेयः। प्रकारान्तरेण तादृशपदार्थसम्बन्धाभावाद्वाऽर्थसिद्धोऽयमनूदितः । एतस्य च वाक्यात्मकान्वयस्य पश्चाद्भावित्वमुचितं वाक्यज्ञानजन्यत्वात्पदार्थान्वयबोधस्य पदयोरर्थयोरिति द्विवचनं महावाक्याभिप्रायेण। सत्यादिवाक्येपि तन्न्यायस्य तुल्यत्वात्स च विशेषणविशेष्यभावोऽत्र वाक्यार्थयोर्न सम्भवति। स हि विशेषणविशेष्ययोर्मूलसम्बन्धनिबन्धन एव वनस्थदण्डस्य देवदत्तविशेषणतादर्शनान्मूलसम्बन्धश्च जीवेश्वरयोर्न संयोगः सम्भवति। विभुद्रव्ययोः संयोगानुपपत्तेः तयोर्निरवयवत्वाच्च। न हि निरवयवयोः संयोगः सम्भवति। प्रदेशवृत्तेस्तस्य तत्रानुपपत्तेः। न च केनचिदवच्छिन्ने निरवयवेऽपि संयोगः सम्भवतीति वाच्यम्। अवच्छेदकसंयोगस्यापि तत्रानुपपत्तेः। असंयुक्तस्यावच्छेदकत्वायोगात्किन्त्ववच्छेदकस्य निरवयवत्वानुपपत्तेः सावयवत्वं वक्तव्यं तथा च मूर्त्तद्रव्यान्तरावच्छिन्ने मूर्त्ते संयोग इति महदसमञ्जसमापद्येत। तस्मान्निरवयवसंयोगोऽनुपपन्न एव। नापि तयोः समवायः पृथक्सिद्धत्वात्तस्मादनयोस्तादात्म्यमेव सोऽयं देव-

दत्त इत्यादाविव वक्तव्यम्। त्वं ब्रह्मेतिप्रतीतेः प्रथमामात्रविभक्तिमत्पदद्वयोपात्तत्वाच्च। तच्च जीवपरयोर्न सम्भवतीति विरोधस्फुरणे संजाते वेदप्रामाण्यनिर्वाहाय लक्षणा वक्तव्या। सा च पदार्थयोः सम्बन्धं विनानुपपन्नेति भागभागित्वलक्षणसम्बन्धोऽप्यस्तीति पश्चाज्ज्ञातव्यमित्याह—ताभ्यां सहास्यात्मनः सम्बन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय इति। ताभ्यां पदार्थाभ्यामित्यर्थः। उक्तार्थे हेतुः—लक्ष्यलक्षणतयेति। वाच्यार्थप्रत्यगात्मनोः लक्ष्यलक्षणभावादत्र च शक्यसम्बन्धद्वारा पदस्यार्थान्तरबोधकत्वादर्थस्य लक्षकत्वमुक्तम्। अथवा—अर्थोपस्थापितेऽर्थे पदस्य तात्पर्यमित्येतावतैव पदस्य लक्षकत्वम्। वस्तुतस्त्वर्थस्यैव तत्सम्बन्धित्वेन लक्षकत्वमिति द्रष्टव्यम्। एतच्च सम्बन्धत्रयं नैष्कर्म्यसिद्धिकारैरप्युक्तं 'सामानाधिकरण्यं च विशेषणविशेष्यता। लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्' ॥ इति। अत्र कश्चिदाह—तत्त्वमसीत्यत्र न तत्त्वंपदयोः सामानाधिकरण्यं शब्दो नित्य इत्यत्रेवात्र द्विधापदच्छेदसम्भवेपि समयबलादनित्य इति पदच्छेदवत्प्रकृतेपि भिन्नशकुनिसूत्रादिदृष्टान्तबलेनातदितिच्छेदादिति तेन नूनं 'वाचारम्भणं विकारो नामधेयं, सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, अनेन जीवेन' इत्याद्यद्वितीयोपक्रमादिर्न परिशीलितः 'न वा तत्त्वमेव त्वमेव तदि'ति असंदिग्धविभागाः श्रुतयोऽधीताः। अधीता अपि किं तत्त्ववित्प्रद्वेषत्रिदोषग्रस्तेन विस्मृताः। यत्तु दृष्टान्ते भेदः प्रतीयत इति तदसत् न हि भेदेऽयं दृष्टान्तोऽभिप्रेतः। किन्तु मनःशब्दादिवाच्यजीवस्य प्राणशब्दादिवाच्ये ब्रह्मणि सुषुप्तौ विलयादौ शकुनिसूत्रादेरुदाहरणाद्वाक्यस्योभयपरत्वे गौरवाद् दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यस्याविवक्षितत्वाच्च। ननु तदिति पदच्छेदेपि न तत्पदार्थस्य जीवविशेषणत्वं जीवस्य ब्रह्मजन्यतया तत्पदाभिधेयत्वाद्दृश्यते हि ततो जातस्यापि तत्पदाभिधेयत्वम्, ब्राह्मणोऽस्य मुखमासीदित्यादौ काकादिभ्यो जातेपि काकादिशब्दप्रयोगाच्चेति चेत्। न तावज्जीवस्य ब्रह्मजन्यत्वं जनिमज्जीवस्यानित्यत्वनियमेन कृतहान्यकृता-

ऽयागमप्रसङ्गान्मुक्तिशास्त्रस्यानारम्भप्रसङ्गाच्च। मोक्षभागिन आत्मनोऽभावात्। न च विशिष्टाकारेण जन्यत्वं विशेषणमात्रस्यैव तज्जन्यत्वाद्विशिष्टस्य तत्त्रान्तरत्वे वा ऽजीवत्वादचेनत्वात्। नाप्ययं दृष्टान्त ब्रह्मणादेर्मुखजन्यत्वाभावात्परमेश्वरस्य मुखादिरहिततया अकायमव्रणमित्यादिमन्त्रवर्णैः सिद्धस्त्वात्कस्तर्हि श्रुत्यर्थ इति चेद्योषितादावग्निचिन्तनववद् ब्राह्मणादिमुखादित्वेन परमेश्वरस्योपासनाया एव तदर्थत्वात्। नापि काकबटोः काकादिजन्यतया काकादिपदवाच्यत्वं तच्छब्दस्य काकादिजातिनिमित्तत्वादन्यथा काकपुरीषेपि तत्पदप्रयोगापातात्। एतेन व्रीहिविकारे तण्डुले धान्यमसि धिनुहीत्यत्र धान्यपदप्रयोगवद् ब्रह्मविकारे जीवे ब्रह्मादिपदप्रयोग इति निरस्तं जीवस्याविकारत्वाद्धान्यमसीति दृषदि तण्डुलानावपतीति वाक्यप्रमाणविनियुक्तस्य कथंचित्तण्डुलपरत्वाभावेऽनुष्ठेयार्थाप्रकाशलक्षण किञ्चित्काराभाववदत्र जीवे तत्पदप्रयोगाभावे बाधकाभावाच्च। नापि ब्राह्मणो वै सर्वा देवता इत्यत्र देवताधारत्वेन ब्राह्मणस्य देवताशब्दवाच्यत्ववत्सर्वाधारब्रह्मणो जीवाधारतया त्वंपदवाच्यत्वोपपत्तिरिति वाच्यम्। जीवस्य विभोरनाधेयतया ब्रह्मणस्तदनाधारत्वादणुत्वस्य च तृतीये निराकरिष्यमाणत्वाद् दृष्टान्तश्च विषम एव। ब्राह्मण आर्षेय उद्धरेदित्यार्षेयब्राह्मणसाध्याग्निविहरणविधिशेषतया ब्राह्मणस्य सर्वाधारत्वेन स्तूयमानतयार्थाभावात्तस्मात्तादात्म्याभिप्रायमत्र पदद्वयसामानाधिकरण्यमिति। अतस्तत्त्वबुभुत्सुभिरवश्यमेतत्सम्बन्धत्रयं ज्ञेयं वाक्यस्य व्यधिकरणान्वयपरिज्ञाने पदार्थयोर्विशेषणविशेष्यभावापरिज्ञाने भागभागित्वादिसम्बन्धापरिज्ञाने च लक्षणाभावाद् गवानयनादिवाक्ये नीलोत्पलादिवाक्ये चाखण्डार्थप्रतिपत्त्यभावादित्यभिप्रेत्योपसंहरति— एवमिति।

अर्थपदान्यर्थप्रत्तिपत्तिसाधनानि॥ १९७॥

एवं शबले व्युत्पत्तिर्यन्निमित्ता (च) तत्र सत्यादिपदानां व्युत्पत्तिस्तदात्मस्वरूपमेव लक्षणीयमित्युक्तं तत्रेदमाशङ्क्यते यद्यात्मसत्य-

त्वादिकमेव निमित्तीकृत्य सत्यादीनि पदानि शबले प्रवर्त्तन्ते। तर्हि साक्षादयमात्मन्येव तद्व्युत्पत्तिं गृह्णातु किं परमुखनिरीक्षकेन शबलेन एवं सति लाघवमपि भवति शबलस्य वस्तुद्वयात्मकत्वादात्मस्वरूपस्य चैकरसत्वात्। नन्वात्मस्वरूपस्याव्यवहार्यत्वात्तत्र न व्युत्पत्तिरिति किमिदमव्यवहार्यत्वं किमुपादानादिव्यवहारागोचरत्वमुत प्रमाणाविषयत्वम्। नाद्यः। तस्य शब्दार्थत्वेऽप्रयोजकत्वादन्यथा गगनादेः शब्दवाच्यत्वाभावापातात्। न द्वितीयः। प्रमाणं हि व्युत्पत्तये वस्तुज्ञानार्थमपेक्षते। ननु स्वतस्तच्च ज्ञानं स्वयंप्रकाशे आत्मनि विनापि प्रमाणमिति तदपेक्षार्थवतीति। अत्रेदं वक्तव्यं किमविवेकिनां तत्र व्युत्पत्तिरापाद्यते उत विवेकिनाम्। नाद्य इत्याह—

**निःसन्धिबन्धनमिदं चिदचित्स्वरूपं**
**संकीर्णमन्तरपरिस्फुरणेन शून्यम्।**
**आचित्तशुद्धिफलतः स्फुरितोपपत्तेः**
**शब्दार्थसंगतिमिहैव तु गृह्णतेऽज्ञाः॥ १६८॥**

निःसन्धिबन्धनमिति। अज्ञाः अविवेकिनः शब्दार्थसंगतिमिहैव शबल एव गृह्णत इति सम्बन्धः। तत्र हेतुत्वेन शबलं विशिनष्टि—निः सन्धीति। इदं-चिदचित्स्वरूपं चिदचितोः शबलं निःसन्धिबन्धनं निर्गतः सन्धिरवकाशो भेदो यस्मिन् तन्निःसन्धि तादृशं यद्बन्धनं परस्परात्मत्वं यस्मिँस्तत्तथोक्तम्। अनेनानात्मवर्गस्य चित्ताटस्थं निरस्तम्। एतस्यैव विवरणंसंकीर्णमिति परस्परात्मकमित्यर्थः। अत एवाविवेकिनां प्रतिपत्तिरपि न तयोर्भेदेन भवतीत्याह—अन्तरपरिस्फुरणेनेति। भेदप्रतिपत्त्या शून्यमित्यर्थः। तत्किं विवेकिनामप्येवमेवेत्यत आह—आचित्तेति। आङ् मर्यादायां चित्तशुद्धिफलतया स्फुरितोपपत्तेः प्रकाशमानयुक्तेः चित्तशुद्धिसमुपजातोपपत्तिः स्फुरणात्पूर्वं चिदचितोर्भेदाप्रत्तिपत्तिः न तदनन्तरमित्यर्थः। उपस्थिते पदार्थे शब्दशक्तिर्गृह्यते। शबल एव चाविवेकि-

भिर्गृह्यते । न केवल आत्मनि ततस्तत्रैव व्युत्पत्तिरविवेकिभिर्गृह्यत इत्यर्थः ॥ १९८ ॥

द्वितीयं दूषयति—

शब्दार्थसंगतिविदामथ सत्त्वशुद्धे-
रुत्पन्नतर्कदृढलोहशलाकया तु ।
दृश्यं दृशं च निपुणं द्वयमन्तरेण
निक्षिप्तया दृगदृशोः क्रियते विभागः ॥ १९९ ॥

शब्दार्थेति । शब्दार्थसङ्गतिविदां चित्तशुद्ध्यनन्तरमुत्पन्नो यः प्रपञ्चमिथ्यात्वादिविषय आत्मसत्यत्वादिविषयश्च तर्कः स एवाबाध्यत्वाद्विभाजकत्वाच्च दृढलोहशलाका तया द्वयमन्तरेण द्वयोर्मध्ये निपुणमप्रमादेन निक्षिप्तयोभर्यविवेचनाय प्रयुक्तया दृगदृशोर्विभागः क्रियते ज्ञायत इति सम्बन्धः । किञ्च तद्द्वयमित्यत आह—दृश्यं दृशंचेति । दृगदृशोर्द्वयोर्मध्य इत्यर्थः । एतदुक्तं भवति—सत्यादिशब्दार्थसङ्गतिविद एव हि सत्त्वशुद्ध्यनन्तरं विचारेणात्मैव सत्यज्ञानानानन्दरूपः न वियदादीनीति सत्यादिपदार्थं विवेचयन्ति नान्ये तेषां विचार्यपदार्थस्फुरणाभावेन तद्विवेचनानुपपत्तेः । पदार्थस्फुरणं च सत्यादिपदस्य पूर्वं व्युत्पत्तिं विना न सम्भवतीत्यविवेकदशायां व्युत्पत्तिर्वक्तव्या सा च शबल एव युक्ता । ननु विवेकिनां केवले आत्मनि व्युत्पत्तिरस्त्विति चेन्न-अनेकार्थत्वप्रसङ्गाद्विवेकिनामात्मनोऽव्यवहार्यत्वनिश्चयाच्च । नन्वव्यवहार्यत्वमेव दुर्निरूपमिति चेन्न । मुख्यया वृत्त्या शब्दव्यवहारविषयत्वायोग्यत्वस्यैवाव्यवहार्यशब्दार्थत्वात् । ननु तदेव कुत इति चेत् श्रूयतां शब्दप्रवृत्तिनिमित्तानां वक्ष्यमाणषष्ठ्यर्थादीनां केवलात्मन्यभावादिति ॥ १९९ ॥

नन्वज्ञानदशायामहंकारवियदादेरेकरसत्वेन परिज्ञानाच्छाबल्य-

परिज्ञानाभावात्तत्र कथं व्युत्पत्तिरिति निश्चीयते तत्राह—

शुद्ध्युत्थतर्कजनितं चिदचिद्विभागं
प्राप्य स्थिताः पुनरिमां गिरमुद्गिरन्ति ।
सत्यादिशब्दगण एष तु तत्र तत्र
व्युत्पत्तिमाञ्छबलवस्तुनि नो दृशीति ॥ २०० ॥

शुद्ध्युत्थेति । विभागं विभागज्ञानमित्यर्थः । इमामिति परामृष्टाङ्गिरमाह—सत्यादिशब्दगण इति । दृशि केवलायामित्यर्थः । यद्यप्यविवेकदशायामहंकारादिकं शाबल्येन न ज्ञायते । तथाप्यहंकारेऽहंकारादिरूपेणोपस्थिते वस्तुगत्या शबले तत्र तत्र पूर्वं व्युत्पत्तिं गृहीत्वा विचारानन्तरं सत्यादिपदानि न केवलगगनादौ व्युत्पद्यन्ते । तेषां स्वातन्त्र्येणोपस्थित्यभावात्स्थित्यभावाच्च । नाप्यात्मनि व्युत्पद्यन्ते । तस्याव्यवहार्यत्वात् । तथा च शबल एव व्युत्पत्तिरिति निश्चीयत इति भावः ॥ २०० ॥

यदुक्तं शबलव्युत्पत्त्यपेक्षया आत्मनि व्युत्पत्तिर्लघीयसीति, तदप्यनवकाशं व्युत्पत्तिदशायामेकत्वद्वित्वादेरनवगमादित्याह—

एकत्र शक्तिग्रहणोपपत्ता-
वनेकक्लृप्तिः क्रियते किमर्थम् ।
इत्येतदेवं सति नास्ति चोद्यं
पुरास्य पुंसः परमाविवेकात् ॥ २०१ ॥

एकत्रेति । अनेकक्लृप्तिरनेकात्मकशबले शक्तिक्लृप्तिः । एवं विवेकात्पूर्वं व्युत्पत्तिस्वीकारे सति एकस्मिन्नर्थे शक्त्युपपत्तावनेकार्थविषयिणी शक्तिः किमर्थं कल्पनीयेति चोद्यं नावतरीतर्त्ति । कुतः । अस्य व्युत्पित्सोः पुरा व्युत्पत्तिकाले परमाविवेकादत्यन्तमौढ्या-

द्दित्यर्थः । उपस्थितयोरेव हि लाघवगौरवचिन्ता न विचारात्पूर्वं द्वित्वोपस्थितिरस्ति । येन गौरवाच्छबले व्युत्पत्तिः परित्यज्येत । न च कस्यचिदिदानींतनतदुपस्थितिः सर्वजनीनव्युत्पत्तिप्रतिबन्धिकेति भावः ॥ २०१ ॥

एवं शबले व्युत्पत्त्युपपादनेन भागलक्षणयैवाखण्डार्थत्वमुपपादितमिदानीं वाच्यलक्ष्यार्थयोः सम्बन्धतदभावाभ्यामखण्डार्थत्वं दूषयितुं विकल्पयति—

**अत्राऽऽऽह वाच्यशबलान्वितवस्तुनीयं**
**तद्वर्त्मना भवति लाक्षणिकी प्रवृत्तिः ।**
**किं वा तदन्वितविलक्षणवस्तुनि स्या-**
**च्छब्दस्य नोभयमपि प्रतिभाति युक्तम् ॥२०२॥**

अत्राऽऽहेति । यद्यपि सम्बन्धोऽप्यथलक्ष्यलक्षणतयेत्यत्र लक्ष्यलक्षणयोः सम्बन्धोऽप्यस्तीति पूर्वमुक्तं तथापि तस्यैवाक्षेपसमाधानार्थमयं विकल्प इति नायं निरवकाशः । वाच्यशबलान्वितवस्तुनि तद्वर्त्मना वाच्यशबलसम्बन्धद्वारेण शब्दस्येयं लाक्षणिकी वृत्तिः किं वा तेन वाच्येनान्वितं यद्वस्तु तद्विलक्षणवस्तुनीति सम्बन्धः । किं वाच्यार्थसम्बन्धिनि लक्षणा । उत तदसम्बन्धिनीति विकल्पः । यद्यपि सम्बन्धं विना लक्षणा न प्रवर्त्तते, तथाप्यखण्डवाक्यार्थत्वादिना सम्बन्धो वक्तुं न शक्यत इति तदनुरोधेनेयं कोटिः । लौकिकलक्षणानुरोधेन प्रथमकोटिरिति भावः । दूषयति—नोभयमपीति । पक्षद्वयमपि युक्तमिति न प्रतिभात्यखण्डार्थत्वक्षतेरित्यर्थः ॥ २०२ ॥

ननु किमित्यखण्डार्थत्वक्षतिरित्याशङ्क्य तामेव प्रकारभेदेन पक्षद्वयेपि दर्शयति—

**सम्बन्धिरूपं यदि वस्तु लक्ष्य-**
**मखण्डवाक्यार्थमतिः कुतस्त्या।**
**अनन्वितं वस्तु पदार्थलक्ष्यं**
**न लक्ष्यते कुत्रचिदत्र लोके॥ २०३॥**

सम्बन्धिरूपमिति। यदि वाच्यार्थसम्बन्धि लक्ष्यते तदा वाक्यमखण्डार्थं कुतो भवेन्न कुतोपि। यदि वाच्यर्थानन्वितं वस्तु लक्ष्यमित्युच्येत तत्र लक्षणैवानुपपन्ना। लोके वेदे च शक्यसम्बन्धिन एव लक्ष्यत्वादिति नाखण्डार्थत्वमित्यर्थः॥ २०३॥

किं लक्ष्यपदार्थज्ञानाव्यवहितपूर्वकाले वाच्यार्थलक्ष्यार्थयोः सम्बन्धो वक्तव्यः। किं वा तत्कालेपि। आद्ये नाखण्डार्थत्वक्षतिरित्याह-

**पूर्वक्षणे भवति वाच्यपदार्थभाग-**
**भागित्वसंगतिरिहाऽऽत्मनि निर्विभागे।**
**मोहोपदर्शितवपुर्घटते ततोऽस्मि-**
**ञ्छब्दस्य लाक्षणिकवृत्तिरदोषदुष्टा॥ २०४॥**

पूर्वक्षण इति। इह लक्ष्ये आत्मनि लक्ष्यार्थप्रतीतेः। पूर्वं वाच्यशबलपदार्थेन भागभागित्वसंगतिर्भवतीति सम्बन्धः। एतच्च तादात्म्यस्याप्युपलक्षणम्। प्राप्तं तर्ह्यात्मनोपि सांशत्वं तत्राह- निर्विभाग इति। कुतस्तर्हि—अंशांशित्वादिकमिदि लक्षणेति प्राप्तं तत्राह—मोहेति—अज्ञानकल्पितमंशांशित्वादिकं वस्तुत एकरसेप्यात्मनि घटते। इयं वेदान्तस्य लक्षणा वृत्तिरात्मनि न दुष्टेत्यर्थः॥ २०४॥

द्वितीयेपि किं वस्तुतस्तत्काले लक्ष्ये वा वाच्यार्थसम्बन्धो वक्तव्य इति ब्रूषे किं वा तत्त्वेन लक्ष्यपदार्थो ज्ञातव्य इति विकल्प्याद्यमङ्गीकृत्य द्वितीयं दूषयति—

सम्बन्धितया भवति लाक्षणिकप्रवृत्तेः
सर्वत्र कारणमितीदमभीष्टमेव ।
सम्बन्धिताकरणमेव तु लाक्षणिक्या
बुद्धेरनिष्टमिह तद्व्यभिचारदृष्टेः ॥ २०५ ॥

सम्बन्धितेति । लाक्षणिक्या बुद्धेर्लक्षणावृत्तिजन्याया बुद्धेः सम्बन्धिताकरणं सम्बन्धित्वाकारः । अनिष्टं न अभीष्टमेव कुतः । इह तद्व्यभिचारदृष्टेः इह गङ्गायां घोष इत्यादौ लक्षणाजन्यबुद्धेः तस्य वाच्यार्थसम्बन्धित्वाकारस्याभावेपि दर्शनादित्यर्थः ॥ २०५ ॥

प्रथमोपि न नियत इत्याह—

यत्रैष काक इदमेव तु देवदत्त-
वेश्मेति लाक्षणिकवृत्तिरिहाभ्युपेता ।
काकास्पदत्वमवधीर्य तथापि वेश्म-
मात्राकृतिर्भवति लाक्षणिकी तु बुद्धिः ॥ २०६ ॥

यत्रैष काक इति । देवदत्तगृहं किमिति पृच्छन्तं प्रत्याह काकवद्देवदत्तवेश्मेति तत्र वाक्ये काकपदस्योत्तृणत्वादिविशेषे लक्षणा वक्तव्या । काकविरहकालेपि तद्वाक्यप्रयोगेण गृहस्य काकवत्त्वेन देवदत्तान्वयप्रतियोगित्वाभावात् । न चानुपस्थितमेव विशेषेण गृहमन्वयप्रतियोगीति वाच्यम् । अन्वयप्रतियोगितावच्छेदकस्योपस्थितिनियमात् तथा च वाच्यार्थसम्बन्धाभावकालेपि लक्षणा दृष्टेति न तत्काले तत्सम्बन्धनियतिरिति भावः ॥ २०६ ॥

इदन्तु त्वदुक्तनियमभञ्जनार्थमुक्तं वस्तुतस्त्वस्मन्मते आत्मनि वाच्यार्थसम्बन्धोपि विद्यत एव । तस्य तत्साक्षात्कारैकनिवर्त्यत्वात् । ननु वाक्यार्थप्रतीतिकाले वाच्यार्थसम्बन्धाङ्गीकारोऽनुपपन्नः

अखण्डार्थत्वक्षतेरिति चेत्—न सम्बन्धसत्त्वमात्रेणाखण्डार्थत्वक्षतिः। तदानीं जगन्मात्रवैशिष्ट्यसत्त्वेनास्यात्यन्तमल्पत्वादन्ततो वृत्तिवैशिष्ट्यस्यानिर्वाच्यत्वात्किं तर्हि वैशिष्ट्यस्य वाक्यजन्यप्रमाविषयत्वे तस्याखण्डार्थत्वं हीयेत सोऽयं देवदत्त इत्यत्रैतद्देशकालवैशिष्ट्यसत्त्वेपि तदविषयत्वेन तस्याखण्डार्थत्वदर्शनादित्यभिप्रेत्याह—

सोऽयमित्यपि पदार्थरूपकं
लक्षणं यदुपलक्षणं हि तत्।
अंशिता यदि पदार्थलक्ष्ययो-
र्गृह्यते ननु पुनर्विरोधिता ॥ २०७ ॥

सोऽयमित्यपीति। सोऽयमिति यत्तद्देशकालविशिष्टपदार्थस्वरूपं तल्लक्षकं स्वसम्बन्धिदेवदत्तमात्रज्ञापकं कुतस्तत्राह—उपलक्षणं हीति। हि यस्मात्तदेतद्देशकालवैशिष्ट्यमुपसमीपे वाक्यार्थाद्बहिरेव स्थित्वा लक्षयति तस्मादित्यर्थः। ननु तत्रापि वाच्यार्थसम्बन्धोपि लक्ष्यपदार्थे गृह्यतां ततो नाखण्डार्थता तत्राह—अंशितेति। पुनर्लक्षणानन्तरमपि वाच्यार्थलक्ष्यार्थयोरंशांशिभावो यदि वाक्यजन्यज्ञानेन विषयीक्रियत इति ब्रूषे ननु तर्हि पूर्वोक्तविरोधिताऽऽपतेदित्यर्थः ॥ २०७ ॥

एवं पदद्वयलक्षणयाऽखण्डवाक्यार्थमुपवर्ण्येदानीं पदद्वयलक्षणां विना मुख्यार्थेनैकपदलक्षणया वा ऽखण्डवाक्यार्थं वादिप्रसिद्धमुपपादयामीत्यभिप्रेत्याह—

एवं तावल्लक्षणावृत्तिहेतो-
रानीतैषाऽखण्डवाक्यार्थबुद्धिः।
मुक्त्वाऽपीमां लक्षणावृत्तिमेषा
वक्तुं शक्येत्युच्यते ऽनन्तरेण ॥ २०८ ॥

एवं तावदिति। आनीतोपपादितैषा अखण्डवाक्यार्थबुद्धिरनन्तरेणानन्तरग्रन्थेन यद्यपि तत्त्वमादौ पदद्वयलक्षणां विना नाखण्डार्थत्वसिद्धिस्तथापि लोके पदद्वयलक्षणां विनाप्यखण्डार्थतायां सिद्धायां किमु वक्तव्यं न्यायेन पदद्वयलक्षणावति सा सिद्ध्यतीत्ययमारम्भ इति द्रष्टव्यम् ॥ २०८ ॥

तत्रादौ लोके पदद्वयमुख्यार्थमादायैवाखण्डार्थत्वं समर्थयते —

**भिन्नाभिन्नरवौ घटादिवचसा साकं समुच्चारिता-**
**वन्यूनानधिके घटादिविषये तावत्प्रवृत्तौ तव।**
**नो चेद्विश्वसृजोऽपि दुष्परिहरा भेदादिमालाऽऽगता**
**भेदादेरपि तत्र वाच्यमपरं भेदादिकं स्यादिति ॥२०९॥**

भिन्नाभिन्नेति। रवः शब्दः अन्यूनानधिके प्रयुक्तैकपदार्थमात्रे भिन्नो घटोऽभिन्नो घट इत्यादिप्रयोगे भिन्नाभिन्नशब्दौ घटादिपदार्थमात्रविषये प्रयुज्येते इति तद्वाक्यमखण्डार्थनिष्ठमित्यर्थः। ननु किमिति भिन्नाभिन्नपदस्य घटादिपदार्थमात्रार्थत्वं तत्राह— तवेत्यादिना। भेदादेर्घटादिस्वरूपमात्रत्वं नोचेत्तस्य स्वरूपातिरिक्तत्वं वदतस्तव भेदादिमाला प्राप्ता स्यात्तत्र हेतुः— भेदादेरिति। भेदाभेदयोरपि भेदाद्यन्तरं स्वीकर्त्तव्यमिति यतस्तत इत्यर्थः। यदि भेदाभेदाद्घटादेर्भिन्नस्तर्हि येन भेदेन भिन्नो भेदः सोपि किमन्येन भेदेन भिन्नः उत स्वाश्रयभेदेन अथवा स्वेनैव। आद्ये तस्य तस्यापि भेदस्यैवमित्याद्यनाद्यनन्तभेदकल्पनापत्तिः। न द्वितीयः। अन्योऽन्याश्रयप्रसङ्गात्स्वेन भिन्नेन भेदेन स्वस्य भिद्यमानत्वात्। न तृतीयः। प्रथमभेदस्यापि तद्वत् स्वेनैव भिन्नत्वप्रसङ्गात्। तदङ्गीकारे च घटादेरेव तथात्वमस्तु किं ततोऽतिरिक्तभेदेन प्रमाणप्रयोजनयोरभावात्। एवमभेदोपि वस्तुनः स्वरूपमेव। अन्यथा तस्य धर्मत्वे तस्यापि धर्मस्याभेदो धर्मान्तरमिति एकस्मिन्नेव घटे

तत्समवेतघटत्वादौ चानुपलभ्यमानानन्तधर्मकल्पनाप्रसङ्गात्तस्माद्भेदाभेदयोर्घटादिस्वरूपमात्रत्वात्पदद्वयस्यान्यूनानतिरिक्तविषयतयाऽखण्डवाक्यार्थता सिद्धतीति भावः॥ २०६॥

ननु भिन्नाभिन्नपदयोर्घटादिपदेनाभिन्नार्थत्वे तेन सह प्रयोगोऽनुपपन्नः पर्यायत्वादित्याशङ्क्य प्रवृत्तिनिमित्तभेदान्न पर्यायत्वमित्यभिप्रेत्य भेदघटपदयोस्तावत्प्रवृत्तिनिमित्तमाह—

परस्पराभावमुपाददानो
निमित्तमर्थेषु हि भिन्नशब्दः।
प्रवर्त्ततेऽन्ये तु घटादिशब्दा
निजं निजं वाच्यमुपाददानाः॥ २१०॥

परस्पराभावमिति। भिन्नशब्दः परस्पराभावमन्योन्याभावं प्रवृत्तिनिमित्तमुपाददानो घटाद्यर्थेषु प्रवर्त्तते। अन्ये घटादिशब्दा निजं निजं स्वं स्वं वाच्यं घटत्वादिकं निमित्तमादायैव घटादौ प्रवर्त्तन्त इत्यर्थः॥ २१०॥

भेदशब्दस्य प्रवृत्तिनिमित्तमाह—

परस्पराभावविहीनभावा-
दभिन्नशब्दस्य घटे प्रवृत्तिः।
घटस्वरूपैकनिबन्धना तु
घटादिशब्दस्य घटे प्रवृत्तिः॥ २११॥

परस्परेति। अभिन्नशब्दस्य परस्पराभावविहीनभावादन्योन्याभावाभावात्प्रवृत्तिनिमित्ताद्धटादौ प्रवृत्तिर्घटादिशब्दस्य तु घटे घटस्वरूपैकनिबन्धना प्रवृत्तिरिति सम्बन्धः। घटस्वरूपमेकमेव निबन्धनं निमित्तं यस्या सा तथोक्ता। नन्विदमनुपपन्नं स्वरूपभेदमते तदति-

रिक्तपरस्पराभावे प्रमाणप्रयोजनयोरभावात्स हि भिन्नो घट इत्यादि प्रत्यक्षेण गृह्यत इति वाच्यम्। तच्च भवता स्वरूपमात्रविषयमिति वर्ण्यते। न च प्रत्यक्षाभावेपि भिन्नो घट इत्यादिवाक्यमेव तत्र प्रमाणं तस्य स्वरूपभेदविषयत्वेपि प्रवृत्तिनिमित्तत्वेनैतद्वैशिष्ट्यस्यापि तत्र प्रतीतेरिति वाच्यं-स्वरूपभेदातिरिक्तभेदवैशिष्ट्यस्यापि तत्र शब्दात्प्रतीतौ तस्याखण्डार्थत्वभङ्गापातात्। न च प्रयोजनमपि, तत्कार्यभेदव्यवहारस्य तं विनापि सिद्धत्वात्। ननु परस्पराभावो न स्वरूपातिरिक्तः किन्तु भावान्तरस्यैवाभावस्वरूपत्वेन तस्य भावस्वरूपत्वमेवेति चेत्तर्हि प्रवृत्तिनिमित्तभेदविरहेण भेदपदस्य घटादिपदेन पर्यायताप्रसङ्गः। अस्तु वा यत्किञ्चिद्भेदपदस्य प्रवृत्तिनिमित्तं तथाप्यखण्डार्थत्वं वाक्यस्य दुर्हरणं तच्चापर्यायपदानामेकप्रातिपदिकार्थमात्रत्वं घटपदं च घटघटत्वतदुभयवैशिष्ट्यं बोधयतीति नाखण्डार्थत्वमत एव अभिन्नो घट इत्यादावपि नाखण्डार्थता परस्पराभावासिद्धौ तदभावस्याप्यभावेन प्रवृत्तिनिमित्तभेदासिद्धेश्चेति चेदुच्यते-परस्पराभावपदेनान्यात्मना प्रतीयमानत्वमेव विवक्ष्यते। अस्ति हि घटे पटान्यस्वरूपे पटभिन्नो घट इति प्रतीयमानेऽन्यात्मना प्रतीयमानत्वं नाम धर्मः। स च घटत्वादिपदस्य घटेतरावृत्तित्वादिधर्म इव भेदपदस्य तटस्थ एव प्रवृत्तिनिमित्तं भिन्नपदाप्रतीतेः। एतदभिप्रेत्यैव घटादिपदप्रवृत्तिनिमित्तस्य वाच्यत्वान्तर्भावो दर्शितः। निजं निजं वाच्यमुपाददानेति स्वव्यतिरिक्तसकलशक्यवृत्तित्वे सति शक्तिनिरूपकत्वं हि शक्यतावच्छेदकं प्रवृत्तिनिमित्तम्। इदञ्चास्य शक्यत्वेऽशक्यत्वे च सम्भवति स्वव्यतिरिक्तसकलशक्यवृत्तित्वं नाम स्वव्यतिरिक्तशक्यनिष्ठात्यन्ताभावाप्रतियोगित्वं तेनैकव्यक्तिवृत्तिवाक्यतावच्छेदके नाव्याप्तिः। प्रमेयत्वादेर्घटपदशक्यतावच्छेदकत्वं माभूदिति शक्तिनिरूपकत्वमित्युक्तं पटादिपदप्रवृत्तिनिमित्तपटत्वादेः शक्यस्ववृत्तित्वाभावेनाव्याप्तिरतः स्वव्यतिरिक्तेति। यत्तु घटत्वपद-

स्यापि घटत्वमेव प्रवृत्तिनिमित्तमिति तत्र प्रवृत्तिनिमित्तभेदाभावेन घटघटत्वपदयोः पर्यायत्वप्रसङ्गात् । न च तत्पदार्थान्यूनानतिरिक्तार्थकत्वमेव तत्पदस्य पर्यायत्वमिति वाच्यम् । प्रमेयाभिधेयपदयोः पर्यायत्वप्रसङ्गादिति । अभिन्नपदप्रवृत्तिनिमित्तेतरेतराभावाभावपदेनापि अन्यात्मना प्रतीयमानत्वं विवक्ष्यते । न चात्र प्रतियोग्यप्रसिद्धिः । घटभिन्नः पट इति घटान्यात्मना प्रतीयमाने पटेऽन्यात्मना प्रतीयमानत्वस्य सत्त्वादेतदपि तटस्थमेव प्रवृत्तिनिमित्तमतो नाखण्डार्थत्वक्षतिः । यदुक्तं घटपदेन घटघटत्वतद्वैशिष्ट्यं प्रतीयत इति प्रतीयतां नाम । न चैतावता तत्र विवक्षिताखण्डार्थत्वहानिः । अत्र ह्येकप्रातिपदिकार्थत्वमखण्डार्थत्वं न विवक्षितं किन्तु पदद्वयस्यैकपदार्थमात्रत्वं स च पदार्थैकरसोऽनेकरसो वा लोके भवति वेदे त्वेकरस एव पर्यवस्यति । तत्र पदद्वयलक्षणाया आवश्यकत्वादत एवाचार्यैरन्यूनानधिके घटादिविषय इत्येवोक्तम् । अथवा घटपदेन स्पष्टप्रतीत्यभावेन घटत्वादिवैशिष्ट्यस्य तदपि घटाभिन्नमेवेत्यभिप्रेत्याखण्डार्थत्वमुक्तमत एवात्रोचत् घटस्वरूपैकनिबन्धना त्विति । उदाहरणपरिशोधनं विनापि तद्दर्शनमात्रेणाखण्डार्थत्वसम्भावना भवति यत्र ह्युदाहरणैरेव वस्तुसिद्धिरभिप्रेयते । तत्रैव तत्परिशोधनेन भाव्यमन्यथातिप्रसङ्गात् । यत्र तु शब्दप्रमाणेनैव हि विवक्षितार्थसिद्धिः । तत्रासम्भावनाबुद्धौ सत्यां तन्निराकरणाय पक्वमतेः क्वचिदापातदर्शनमात्रेण सम्भावनैव सम्पादनीया सा चोत्तमाधिकारिणः क्वचिद्दर्शनमात्रेण भवति । अस्ति चात्र शब्दप्रतीतिविषयब्रह्मणोऽखण्डत्वे एकधैवानुद्रष्टव्यमित्यादिश्रुतिः प्रमाणम् । अथवा भिन्नो घट इति शब्दो न घटस्य घटत्ववैशिष्ट्यबोधनाय प्रयुज्यते तस्य सिद्धत्वात्किन्तु द्रव्यान्तराभेदभ्रमनिवृत्तये प्रयुज्यत इति तस्य भेदसम्बन्ध एव तात्पर्यमिति शब्दतात्पर्यस्यैकरसत्वाद्विवक्षिताखण्डार्थत्वमेवात्रापीति भावः । अत एव घटादिविषये घटादिव्यक्तौ प्रवृत्तावित्युक्तम् ॥ २११ ॥

इदानीमेकपदलक्षणयापि वाक्यस्य विवक्षिताखण्डार्थत्वं दर्शयति—

अबोधनाशश्चितिरित्यमुष्मि-
न्पदद्वये त्वेकरसात्मनिष्ठे ।
अगौणमेकं पदमन्यदत्र
द्वितीयवृत्तीतरसंगमाय ॥ २१२ ॥

अबोधनाश इति । एकरसात्मनिष्ठेऽविवक्षितोपाधिचैतन्यमात्रविषयेऽज्ञाननाशश्चैतन्यमित्यमुष्मिन्पदद्वयेऽप्येकं पदमगौणं मुख्यार्थमत्र वाक्येऽन्यत्पदमितरेण मुख्यार्थपदेन सम्बन्धाय द्वितीयवृत्ति द्वितीया लक्षणावृत्तिर्यस्य पदस्य तदित्यर्थः ॥ २१२ ॥

नन्वत्र वाक्ये किं पदमगौणं किं वा द्वितीयवृत्तीति तत्राह—

अज्ञाननाशपदमत्र हि मुख्यमिष्टं
विद्यानिबन्धननिवृत्तिसमर्पकत्वात् ।
तेनान्वयाय चितिवाचिपदं स्ववाच्ये
सौवं समुज्झति मतेः परिणामरूपम् ॥ २१३ ॥

अज्ञानेति । हि शब्दोऽवधारणे । अत्र प्रकृते वाक्येऽज्ञाननाशपदमेव मुख्यं मुख्यार्थमिष्टं तत्र हेतुः—विद्यानिबन्धननिवृत्तिसमर्पकत्वात् । अधिष्ठानतत्त्वज्ञानहेतुकनिवृत्तिसमर्पकत्वान्मिथ्यानिवृत्तिबोधकत्वादिति यावत् । मिथ्यानिवृत्तिर्ह्यधिष्ठानान्नातिरिच्यते । निवृत्तिप्रतियोगिनो मिथ्यावस्तुनस्ततो वस्तुतो भेदाभावाद्यत्र ह्याधारात्प्रतियोगि पृथक् सन् तत्रैव प्रतियोगिसत्ता परतन्त्रा तन्निवृत्तिरपि भिद्यते । अथवा विद्यापदेन चरमवृत्तिरभिधीयते । तन्निबन्धना तदुपहितब्रह्मस्वरूपचैतन्यात्मिका याऽविद्यानिवृत्तिस्तद्बोधकत्वाद् वृत्तिश्चोपाधिस्तटस्थैव

प्रवृत्तिनिमित्तमतो विवक्षितोपाधिचैतन्यमात्रवाचकत्वादज्ञाननाशपदं मुख्यार्थमित्यर्थः । अस्तु तर्हि ज्ञानपदमपि मुख्यार्थं तस्यैवाविद्यानिवृत्तिरूपत्वादिति चेत्तत्राह-तेनान्वयायेति । अबोधनाशपदेनान्वयार्थं ज्ञानवाचिपदं स्ववाच्ये शबले मतेः परिणामरूपं बुद्धिवृत्तिलक्षणं सौवं स्वस्येदं स्ववाच्यभागं समुज्झति त्यजति । ज्ञानपदं हि वृत्तिशबले चैतन्ये व्युत्पन्नं मुख्यार्थमादाय अविद्यानाशपदेन नान्वेतुमर्हति । वृत्त्यंशेऽस्याविद्यानाशाद्भिन्नत्वादेकविभक्त्यन्तत्वेन वैयधिकरण्येनान्वयायोगाच्च । ततश्चिति पदलक्षणया वाक्यमखण्डार्थनिष्ठमेवेति भावः ॥ २१३ ॥

नन्वेतदनुपपन्नम्—यदात्मवाचिचितिपदे लक्षणाऽभाववाचिविनाशपदस्य चात्मनि मुख्या वृत्तिरित्याशङ्क्य तस्योक्तरीत्या प्रामाणिकत्वान्न किञ्चिदनुपपन्नमित्याह—

**विधिपदानि हि भागसमर्पणा-**
**दपरभागनिराकरणादपि ।**
**अविषयात्ममतिं जनयन्ति नो**
**न तु मृषार्थनिवृत्तिगिरस्तथा ॥ २१४ ॥**

विधिपदानीति । अथवा अधिष्ठानतत्त्वज्ञानजन्यनिवृत्तिवाचकत्वेनाबोधनाशवदमात्मनि मुख्यवृत्तिरित्यत्र मृषावस्तुनिवृत्तेरधिष्ठानमात्रत्वादिति हेतुमभिप्रेत्याह-विधिपदानीति । भावपदार्थवाचकानीत्यर्थः । अविषयात्ममतिमवाच्यात्ममतिं मृषार्थस्याज्ञानस्य निवृत्तिवाचकाः शब्दास्तथाविधिपदवद्भागत्यागलक्षणयाऽविषयात्ममतिं न जनयन्तीति सम्बन्धः । नन्वात्मनोपि शब्दवाच्यत्वे यतो वाचो निवर्त्तन्त इति श्रुतिविरोध इति न तत्रानौपाधिक एव शब्दप्रवृत्तेः श्रुत्या निराकृतत्वादिति भावः ॥ २१४ ॥

इदानीं भेदस्य धर्म्यतिरिक्तत्वमनुगच्छन्तं प्रतिपदद्वयस्यैकार्थत्वे दृष्टान्तमाह—

भेदो भिन्नश्चातिरेकोऽतिरिक्तो
भेदोऽभिन्नः संविदः स्वप्रकाशः ।
इत्येतस्मिन्विद्यते नार्थभेदो
वेदान्तानामप्यखण्डस्तथाऽर्थः ॥ २१५ ॥

भेदो भिन्न इति । स्वश्चासौ प्रकाशश्चेति संवित्स्वरूपस्यैव स्वयंप्रकाशशब्दार्थत्वात्तत्र स्वसत्तायां प्रकाशाविधुरत्वस्य प्रवृत्तिनिमित्तत्वाद्भेदादिविषयभेदाभावाच्च । यथैतानि वाक्यान्यखण्डार्थानि तथा वेदान्तोऽप्यखण्डार्थ इत्यर्थः ॥ २१५ ॥

ननु सत्यादिनिखिलपदानां प्रातिपदिकार्थैक्येऽपि प्रथमाविभक्त्या लिङ्गादिवैशिष्ट्यस्यावगमान्नाखण्डार्थतेत्याशङ्क्य न ह्ययमस्ति नियमः। प्रथमाविभक्त्या लिङ्गादिवैशिष्ट्यं बोधनीयमिति प्रातिपदिकार्थमात्रेऽपि तत्स्मरणादतः पाणिनिस्मृतिबलादखण्डार्थत्वमन्यत्राविरुद्धमित्युक्तानुवादपूर्वकमाह—

एवं तावदखण्डवस्तुविषये शब्दान्वयो दर्शितो
लोके दृष्टनयेन पाणिनिवचोऽप्यस्यैव संसूचकम् ।
येनायं स्मरति प्रकृत्यभिहिते वृत्तादिके केवले
तन्मात्रे प्रथमेति सूत्रवचसैवाऽऽद्यां विभक्तिं मुनिः ॥२१६॥

एवं तावदिति । लोके तावदेवं दृष्टनयेनोक्तप्रकारेणाखण्डवस्तुविषयः शब्दसमन्वयो दर्शितः पाणिनिवचोऽप्यस्यैवापर्यायपदयोरेकप्रातिपदिकार्थत्वमात्रस्यैव संसूचकं भवति । कुतस्तद्बलाद्वचनस्याखण्डार्थत्वमित्याशङ्क्य यतः प्रकृतिप्रत्यययोरेकार्थत्वं सूचयतीत्याह-येनायमिति ।

अयं पाणिनिमुनिः प्रकृत्यभिहिते वृक्षादिप्रातिपदिकाभिहिते वृक्षादिके वृक्षव्यक्त्यादौ केवले लिङ्गादिरहिततन्मात्रे प्रथमेति सूत्रवचसा प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रेणाद्यां प्रथमां विभक्तिं येन कारणेन स्मरति तेनेत्यर्थः ॥ २१६ ॥

इदानीं भगवान् बादरायणोपि समन्वयसूत्रेऽन्वयस्य समितिविशेषणमुपाददानो वेदान्तानामखण्ड एवार्थ इति मेन इत्याह—

**सामानाधिकरण्यमन्वयगिरा हेतुं वदत्यादरा-**
**त्तस्यैवाथ विशेषणं समिति च व्यावृत्तये गृह्यते।**
**गौणान्मुख्यमयं भिनत्ति भगवान्व्यावर्त्तकेनामुना**
**नीलेनोत्पलवस्तुवत्स्फुटतरं द्वैविध्यसद्भावतः ॥२१७॥**

सामानाधिकरण्यमिति। बादरायणो हि भगवान् अखण्डैकरसब्रह्मणो वेदान्तप्रमाणकत्वं प्रतिज्ञाय तत्र तत्तु समन्वयादिति सूत्रस्थान्वयपदेन सामानाधिकरण्यं सामानाधिकरण्येन ब्रह्मप्रतिपादकानामन्वयं तात्पर्येण हेतुं वदति स्म न केवलं सामानाधिकरण्यमात्रं हेतुमाह किन्तु मुख्यमेव तदतो न नीलोत्पलादिवाक्यसाम्यं दृष्टमित्याह—तस्यैवेति। तस्य सामानाधिकरण्यस्यामुख्यसामानाधिकरण्यव्यावृत्तये समिति विशेषणं तेन गृह्यते। अथ यस्मात्तस्मादयं सूत्रकृद् गौणान्नीलोत्पलमित्यादिसामानाधिकरण्यादेतत्सामानाधिकरण्यं मुख्यं यथा भवति तथोत्पलं नैल्येनैव भिनत्ति व्यावर्त्तयति। ननु विशेषणग्रहणमात्रेण कथं तत्तेन व्यावर्त्तितमिति गम्यते प्रमेयो घट इतिवदन्यथापि विशेषणसम्भवादिति तत्राह—व्यावर्त्तकेनामुनेति। विशेषणस्य व्यावर्त्तकत्वमेवोत्सर्गः। अन्यथात्वं पुनः क्वचिद्व्यावर्त्याभावात्। न चात्र व्यावर्त्याभावः। सामानाधिकरण्यद्वैविध्यस्य सत्त्वेनामुख्यसामानाधिकरण्यस्यामुना समितिविशेषणेन व्यावर्त्तनीयत्वादित्याह—

स्फुटतरेत्यादिना। नन्वत्र सूत्रे सम्यक्सम्बन्धमात्रं हेतुः प्रतीयते न तु सामानाधिकरण्यमिति चेत्सत्यं तथापि ब्रह्मपरसत्यादिवाक्येषु वैयधिकरण्येनान्वयासम्भवादयमेवान्वयः सूत्रकृत्संमत इति गृह्यत इति भावः ॥ २१७ ॥

सामानाधिकरण्यद्वैविध्यमस्तीति—यदुक्तं तदेव विभज्य दर्शयति—

तद्धि द्विधैकाधिकरण्यमुक्तं
गौणं च मुख्यं च विविच्य सद्भिः ।
संसर्गरूपार्थनिवेशि गौणं
मुख्यं त्वखण्डार्थनिविष्टमाहुः ॥ २१८ ॥

तद्धीति। तद्ध्यैकाधिकरण्यं सामानाधिकरण्यं सद्भिर्विविच्य द्विधोक्तमिति सम्बन्धः। द्वैविध्यमेवाह—गौणं च मुख्यं चेति। तयोर्लक्षणमाह—संसर्गरूपेति। भेदगर्भतादात्म्यरूपो यो वाक्यार्थः तन्निवेशि तद्विषयं यत्सामानाधिकरण्यं तद्गौणमखण्डार्थविषयं तन्मुख्यमिति सन्त आहुरित्यर्थः ॥ २१८ ॥

उक्तलक्षणद्वैविध्यस्य सामानाधिकरण्यावान्तरलक्षणत्वं दर्शयितुं तत्सामान्यलक्षणमाह—

आदाय नानाविधकारणानि
गिरामथैकत्र तु या प्रवृत्तिः ।
तामाहुरैकाधिकरण्यनाम्ना
विपश्चितो वेदशिरःसु विप्राः ॥ २१९ ॥

आदायेति। नानाविधकारणानि—भिन्नप्रवृत्तिनिमित्तानि, भिन्नप्रवृ-

त्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे या वृत्तिस्तां सामानाधिकरण्यनाम्ना ब्रह्मवादिन आहुरित्यर्थः। एतच्च तादात्म्यबोधकनीलोत्पलादिवाक्येऽखण्डार्थकवाक्ये सोऽयमित्यादौ च विद्यत इति सामानाधिकरण्यद्वैविध्यं सिद्ध्यतीति भावः ॥ २१६ ॥

सामानाधिकरण्यद्वयस्यापि क्रमेणोदाहरणं दर्शयति—

**नीलं सुगन्धि महदुत्पलमम्बुशायी–**
**त्येवंप्रकारमिह गौणमुशन्ति सन्तः।**
**सोऽयं पुमानुदशरावगतो विवस्वा–**
**नाकाशगो रविरसाविति मुख्यमाहुः ॥ २२० ॥**

नीलं सुगन्धीति। उत्पलमिति विशेष्यं नीलमित्यादि तद्विशेषणमम्बुशायि जलस्थमित्यर्थः। उदशरावगतः अप्पात्रे प्रतिबिम्बितः ॥ २२० ॥

ननु मुख्यामुख्यवैपरीत्यं किं न स्याद्विनिगमकाभावादुभयमपि मुख्यं वा किं न स्यात्तत्राह—

**एकत्र वृत्तिरिति लक्षणमत्र मुख्यं**
**संसर्गवस्तुनि पुनर्न हि तद्घटेत।**
**नानारसे हि विषये वचसां प्रवृत्ति-**
**र्नीलं सुगन्धि महदुत्पलमित्यमीषाम् ॥ २२१ ॥**

एकत्रेति। अत्र सोऽयमित्यदिवाक्य एवैकत्र वृत्तिरिति सामानाधिकरण्यलक्षणविशेषणं मुख्यमनुपचरितार्थं भवति संसर्गवस्तुनि तादात्म्यप्रतिपादके वाक्ये तदेकत्र वृत्तित्वं मुख्यं न हि घटेत कुतस्तत्राह—नानारसे हीति। नीलं सुगन्धि महदुत्पलमित्यमीषां पदानां हि यतो नानारसे भिन्ने विषये प्रवृत्तिस्ततः। न च सोऽयमित्यादौ

तथेत्यर्थः । भिन्नप्रवृत्तिनिमित्तानामेकार्थवृत्तित्वं हि सामानाधिकरण्यलक्षणं तच्च सोऽयमित्यादावेव मुख्यं भवति । एकार्थवृत्तित्वस्य तत्रैव सत्त्वान्न तु नीलमुत्पलमित्यादौ तदर्थस्य तादात्म्यरूपतया भेदघटितत्वेन तत्रैकत्रवृत्तित्वस्य मुख्यस्याभावात् । नचार्थभेदेऽप्येकत्र वृत्तित्वं मुख्यं भवति । अमुख्यं तु भवेदेव गुणगुणिभावेन कथंचिदभेदस्यापि तत्र सत्त्वात्तस्माद्विनिगमकसद्भावात्सोऽयमित्यादिसामानाधिकरण्यं मुख्यं नीलमुत्पलमित्यत्र तु तद्गौणमेवेति भावः ॥ २२१ ॥

ननु सामानाधिकरण्यलक्षणे माभूदेकार्थवृत्तित्वं विशेषणं येन नीलोत्पलादिप्रयोगे तदमुख्यं भवेदित्याशङ्क्य तस्य वैयधिकरण्यान्वयव्यावर्त्तकत्वान्न तद्व्यर्थमिति वक्तुं व्यधिकरणान्वयलक्षणमाह—

**नानाविधैर्बहुभिरेव निमित्तभेदै-**
**र्भिन्नेषु वस्तुषु गिरामथ या प्रवृत्तिः ।**
**सर्वत्र वैयधिकरण्यमिति प्रसिद्धा**
**सा शब्दवृत्तिकुशलव्यवहारभूमौ ॥ २२२ ॥**

नानाविधैरिति । भिन्नेष्वत्यन्तं भिन्नेष्वित्यर्थः । भिन्नप्रवृत्तिनिमित्तानां शब्दानां भिन्नेष्वर्थेषु वृत्तिर्वैयधिकरण्यमित्यर्थः । नचैवं गौरश्व इत्यत्रातिव्याप्तिरितिवाच्यम् । आकाङ्क्षादिमतामिति गिरां विशेषणोपदानात् । सामानाधिकरण्येतिव्याप्तिपरिहाराय भिन्नेष्विति । तावत्युक्तेऽनेकव्यक्तिवृत्तिपर्यायप्रयोगेऽतिव्याप्तिस्तदर्थं भिन्नप्रवृत्तिनिमित्तेति । कुत्र प्रसिद्धेत्यत्राह—शब्दवृत्तीति । शब्दवृत्तिविवेचने ये कुशला वृद्धास्तेषां व्यवहारभूमिष्वभिवदनव्यवहारेषु प्रसिद्धेत्यर्थः ॥ २२२ ॥

ननु पर्यायप्रयोगव्यावृत्त्यर्थं भिन्नप्रवृत्तीति विशेषणमित्युक्तम् । तत्र कोसौ पर्यायो नाम तत्राह—

अभिन्नहेतुर्विषये समाने
विभिन्नवाचामथ या प्रवृत्तिः ।
पर्यायनाम्नाऽभिवदन्ति धीराः
प्रवृत्तिमेनां वचसां बहूनाम् ॥ २२३ ॥

अभिन्नहेतुरिति । अभिन्नो हेतुः प्रवृत्तिनिमित्तं यस्या प्रवृत्तेः सा तथोक्ता । विभिन्नवाचां स्वरूपतो विलक्षणघटकलशादिशब्दानाम् । एकप्रवृत्तिनिमित्तानेकशब्दत्वं पर्यायत्वमित्यर्थः । बहूनां वचसामेकार्थे प्रवृत्तिः पर्याय इत्युक्ते स्तम्भः कुम्भः पर्वत इत्यत्र पर्यायत्वप्रसङ्गादाह-समान इति । एकजातीय इत्यर्थः । एकजातीयानेकार्थेष्वपि पर्यायतादर्शनान्नार्थैक्यं तत्प्रयोजकं किन्तु प्रवृत्तिनिमित्ताभेद एव ततः प्रवृत्तिनिमित्तभेदादेवापर्यायत्वं न त्वर्थभेदान्न च विजातीयार्थभेदादेवापर्यायत्वं प्राप्ताप्राप्तविवेकेन प्रवृत्तिनिमित्तभेदस्य तत्प्रयोजकत्वसद्धेरिति ॥ २२३ ॥

वैयधिकरण्यपर्याययोः क्रमेणोदाहरणमाह—

कुड्यं गृहस्य सरसोऽम्बुजमस्य वक्त्र-
मित्यत्र वैयधिकरण्यमिति प्रसिद्धम् ।
एवं मुखं वदनमाननमित्यमीषां
पर्यायताऽपि विदितैव पुरोक्तहेतोः ॥ २२४ ॥

कुड्यं गृहस्येति । पुरोक्तहेतोः—अभिन्नप्रवृत्तिनिमित्तत्वादिति हेतोरित्यर्थः ॥ २२४ ॥

ननु यद्येवं वाक्यप्रवृत्तिरनेकप्रकारा संभवति किमिति तर्हि वेदान्तवाक्यस्याखण्डार्थाभिनिवेश इत्याशङ्क्य प्रकारान्तरासंभवादित्याह-

पर्यायता न खलु तत्त्वमसीति वाक्ये
नापीह संभवति भेदकभेद्यभावः।
तत्त्वंपदार्थगतमेकरसैकभागं
तत्त्वंपदे समुपलक्षयतो विरोधात् ॥ २२५ ॥

पर्यायता न खल्विति । तत्त्वमसीति वाक्ये तावत्पर्यायता न संभवति प्रवृत्तिनिमित्तभेदात् । इह—तत्त्वमस्यादिवाक्ये भेदकभेद्यभावो विशेषणविशेष्यभावोऽपि न संभवति । तत्र न तावद्गृहस्य कुड्यमित्यादिवद्विशेषणविशेष्यभावः प्रथमामात्रविभक्तिपदद्वयप्रतिपाद्यत्वात् । ननु नीलोत्पलादिवाक्यवत्स किं न स्यात्तत्राह—तत्त्वंपदार्थगतमिति । विरोधादित्यन्तेन वाच्यार्थयोस्तादात्म्यविरोधात्तत्त्वंपदे तत्त्वंपदार्थांशमात्मस्वरूपमात्रं लक्षयतः अतोऽत्यन्तमभेद एव वाक्यप्रतिपाद्य इति न नीलोत्पलादिवाक्यसाम्यमित्यर्थः । ननु तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वे किं प्रमाणमिति चेदुच्यते । तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठमकार्यकारणद्रव्यवाचकसमानाधिकरणपदद्वयसमुदायत्वात्सोऽयं देवदत्त इतिवाक्यवत् । न च दृष्टान्तः साध्यविकलः । तस्योपपादितत्वादिति ॥ २२५ ॥

एवं महावाक्यस्याखण्डार्थत्वे प्रमाणमुक्त्वेदानीं सत्यादिवाक्यमखण्डार्थनिष्ठं लक्षणवाक्यत्वात्प्रकृष्टप्रकाश इत्यादिलक्षणवाक्यवदित्यभिप्रेत्याह—

प्रकृष्टप्रकाशध्वनी व्यक्तिमेकां
यथा लक्षणावर्त्मनोपक्षिपेताम् ।
शशाङ्कादिशब्दार्थसंकीर्तने स-
च्चिदानन्दशब्दाः परं ब्रह्म तद्वत् ॥ २२६ ॥

प्रकृष्टप्रकाशध्वनीति । शशाङ्कादिशब्दार्थसंकीर्त्तने चन्द्रपदार्थमात्रप्रतिपादने कर्त्तव्ये प्रकृष्टप्रकाशध्वनी शब्दौ लक्षणावृत्त्या यथैकां चन्द्रादिव्यक्तिमुपक्षिपेतां प्रतिपादयतः तथा सत्यज्ञानादिशब्दा अपि परं ब्रह्म प्रतिपादयन्तीत्यर्थः ॥ २२६ ॥

ननु लक्षणया चेत्पदैरखण्डार्थो बोधनीयः किमिति तर्हि नीलोत्पलादिवाक्यमपि तथा न बोधयति, अतो नूनं स्वार्थपरित्यागो न न्याय्य इति नीलोत्पलादिवाक्यं लक्षणयाऽखण्डमर्थं न बोधयतीति प्रकृष्टप्रकाशादिवाक्येपि तदयुक्तमित्याशङ्क्य तत्र लक्षणाऽयोगादेव तत्तद्बोधयति न तु तदन्याय्यतयेत्याह—

न नीलोत्पलाद्या गिरो व्यक्तिनिष्ठाः
स्ववाच्यार्थसंसर्गमात्राभिधानात् ।
विरोधे हि वाच्यच्युतिर्नाविरोधे
गिरां लक्षणाऽत्रापि चेदस्तु साम्यम् ॥ २२७ ॥

न नीलोत्पलेति । न व्यक्तिनिष्ठाः व्यक्तिमात्रबोधका न भवन्ति तत्र हेतुः स्ववाच्येति । नीलोत्पलादिवाच्यनैल्योत्पलत्वयोः संसर्गस्यैव वाक्यप्रतिपाद्यत्वादित्यर्थः । ननु मुख्यया वृत्त्या संसर्गाभिधानेपि लक्षणया व्यक्तिमात्रपरत्वं किं न स्यात्तत्राह—विरोधे हीति । वाच्यार्थयोः परस्परान्वयविरोधे सत्येव शब्दानां मुख्यार्थपरित्यागः अन्यथातिप्रसङ्गादत्र च न विरोधः । नीलोत्पलत्वजातिविशिष्टयोर्नीलोत्पलयोरभेदबोधेपि विरोधाभावादित्यर्थः । आकस्मिकलक्षणाङ्गीकारे चात्रापि तदस्त्वित्याह—लक्षणेति । अत्र नीलोत्पलादिवाक्येपि लक्षणा चेत्प्रकृष्टप्रकाशादिवाक्यसाम्यमस्त्वित्यर्थः ॥ २२७ ॥

यद्यपि नीलोत्पलादिवाक्ये लक्षणाश्रयणेपि वस्तुतो नाखण्डार्थ-

त्वसिद्धिर्लक्ष्यभेदसत्त्वात्तथाप्यङ्गीकृत्येदानीं लक्षणायाभेदमखण्डार्थत्वमाह—

**न नीलत्वजात्याश्रयव्यक्तितः स्या-**
**द्विभिन्नोत्पलत्वाश्रयव्यक्तिरेषा ।**
**तथैवोत्पलत्वाश्रयव्यक्तितः स्या-**
**न्न नीलत्वजात्याश्रयव्यक्तिरन्या ॥ २२८ ॥**

न नीलत्वेति । नीलत्वजात्याश्रयव्यक्तितः उत्पलपदलक्ष्यनैल्यगुणान्नीलपदलक्ष्योत्पलत्वजात्याश्रयोत्पलव्यक्तिरन्या न भवति । एवमेव नीलपदलक्ष्यादुत्पलपदलक्ष्यमपि भिन्नं न भवति । तयोरभेदेनैवावगमादित्यर्थः ॥ २२८ ॥

किमिति तर्हि प्रकृष्टप्रकाशादिवाक्यवद् वृद्धानां नीलोत्पलादिवाक्येपि नाखण्डार्थत्वव्यवहार इत्याशङ्क्य निर्हेतुकलक्षणायोगादेवेति लक्षणाभ्युपगमं परित्यजन्नाह—

**न नीलोत्पलादिप्रदेशेषु किञ्चि-**
**द्गिरां लक्षणाकारणं तेन तत्र ।**
**न नीलोत्पलत्वादिकव्यक्तिनिष्ठा**
**गिरस्ता भवेयुः प्रमाणादृते नः ॥ २२९ ॥**

न नीलोत्पलेति । प्रदेशेषु प्रयोगेषु येन न तत्र लक्षणा तेन तत्र नीलोत्पलादिप्रयोगे नीलादिशब्दाः प्रमाणाभावाद्व्यक्तिमात्रपरा न भवन्तीत्यर्थः ॥ २२९ ॥

लक्ष्ययोरपि पूर्वमैक्यमङ्गीकृत्य लक्षणाकारणाभावादखण्डार्थत्वं दूषितं वस्तुतस्तदेव नास्तीत्याह—

इदमुपेत्य किमप्युदितं मया-
न तु तयोरभिदा परमार्थतः ।
गुणगुणित्वकृतोऽतिशयस्तयो-
र्भवति लक्षणयाऽपि गृहीतयोः ॥ २३० ॥

इदमुपेत्येति । किमपि यत्किञ्चिदप्रामाणिकमपीदमङ्गीकृत्योक्तमित्यर्थः किमित्यस्याङ्गीकारवादत्वमनुभवात्तदभेद एव किं न स्यादित्याशङ्क्यानुभवोऽभेदमात्रं साधयति नात्यन्ताभेदमित्याह—न हि तयोरिति । नैल्योत्पलयोः परमार्थतोऽभिदात्यन्तमभेदो नेत्यर्थः । अत्र हेतुः गुणगुणित्वकृतोऽतिशयो भेदः तयोर्लक्ष्ययोरपि नैल्योत्पलयोर्गुणगुणिभावाद्भेदोपि वक्तव्यः । अन्यथा स्वस्य स्वयमिव नैल्यमुत्पलस्य गुणो न स्यादित्यर्थः । अतो नाखण्डार्थतेति भावः ॥ २३० ॥

ननु नीलोत्पलादिवाक्यवत्प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्यापि मुख्यार्थमादायैव प्रकाशत्वप्रकर्षविशिष्टप्रकाशगुणचन्द्रव्यक्त्योः संसर्गबोधोपपत्तेः कथं लक्षणयाऽखण्डार्थत्वं वाच्यार्थान्वये विरोधाभावादित्याशङ्क्य लोके हि पदानामविरुद्धार्थप्रतिपादकत्वनियमवत्सत्यां बुभुत्सायां सर्वैः पदैर्बुभुत्सितार्थप्रतिपादननियमोऽपि दृश्यते । वक्तव्यश्च तथैव अन्यथानवधेयवचनतया तं प्रत्यप्रामाण्यप्रसङ्गात्सति च प्रामाण्यप्रकारे तस्यान्याय्यत्वाद्वक्तुश्चाबुभुत्सितमर्थं बुभुत्सोच्छेदाथ बोधयतोऽनाप्तत्वप्रसङ्गात्तथा चास्मिन् ज्योतिर्मण्डले कश्चन्द्र इति चन्द्रप्रातिपदिकार्थमात्रं बुभुत्समानं प्रति तद्बोधनाय प्रवृत्तेऽस्मिन् प्रकृष्टप्रकाशश्चन्द्र इति वाक्ये यदि प्रकृष्टप्रकाशपदयोर्लक्षणा नाङ्गीक्रियते तर्हि बुभुत्सितचन्द्रप्रतिपादकार्थस्ताभ्यां न प्रतिपादितो भवति । अतो विषं भुङ्क्ष्वेत्यादाविव वाक्यप्रामाण्यनिर्वाहायैव पदद्वयलक्षणया चन्द्रप्रातिपदिकार्थस्ताभ्यां बोध्यत इत्यभिप्रे-

त्यादौ तत्पदद्वयवाच्यार्थान्वयबोधे ताभ्यां विवक्षितोऽर्थो न सिद्ध्यतीत्याह—

**प्रकृष्टप्रकाशत्वजाती हि लोके**
**प्रकृष्टप्रकाशाभिधानाभिधेये ।**
**तयोरन्वये कीर्त्यमाने तु ताभ्यां**
**शशाङ्काभिधानाभिधेयं न लभ्यम् ॥ २३१ ॥**

प्रकृष्टप्रकाशत्वेति । प्रकर्षप्रकाशत्वजातीत्यर्थः । प्रकर्षस्य गुणवृत्तिसामान्यत्वात्तदाश्रयः प्रकाशगुणः प्रकृष्टः प्रकर्षप्रकाशत्वजाती एव प्रकृष्टप्रकाशाभिधानयोरभिधेये भवतः न चन्द्रः ततः किं तत्राह—तयोरिति । तयोर्जात्योरन्वये प्रकृष्टप्रकाशपदाभ्यां कीर्त्यमाने ताभ्यां पदाभ्यां शशाङ्काभिधानस्याभिधेयं चन्द्रपदार्थो न लभ्यमित्यर्थः । प्रकर्षप्रकाशपदार्थतत्संसर्गयोरेव तदर्थत्वादित्यर्थः ॥ २३१ ॥

ननु माभूत् ताभ्यां पदाभ्यां चन्द्रलाभः, ततः किं तत्राह—

**शशाङ्काभिधानाभिधेये हि पृष्टे**
**तदेवोत्तरेणापि निर्णेयमत्र ।**
**प्रकृष्टप्रकाशत्वजात्यन्वयोऽयं**
**तदाक्षिप्ततद्व्यञ्जकव्यक्तिनिष्ठः ॥ २३२ ॥**

शशाङ्काभिधानाभिधेय इति । चन्द्रपदार्थे पृष्टे चन्द्रपदाभिधेयमुत्तरेणापि प्रतिवचनस्थप्रकृष्टप्रकाशपदेनापि निर्णेयमन्यथा प्रश्नाननुगुणत्वप्रसङ्गादित्यर्थः । ननु पदद्वयार्थजातिद्वयान्वयापर्यवसाने न ताभ्यामपि चन्द्रव्यक्तिर्लभ्यते तत्राह—प्रकृष्टप्रकाशत्वजात्यन्वय इति । ताभ्यां जातिभ्यामाक्षिप्ता या तद्व्यञ्जिका व्यक्तिः प्रकाशगुणस्तन्निष्ठो जात्यन्वयः । न तु चन्द्रनिष्ठस्तस्य तद्व्यक्तित्वादित्यर्थः ॥ २३२ ॥

ननु प्रकाशात्मा निशाकर इत्यादौ प्रकाशस्यैव चन्द्रपदार्थत्वाज्जातिद्वयान्वयादेव चन्द्रपदार्थोऽपि ताभ्यां ज्ञायत इति चेन्न—प्रकाशगुणवत्त्वेनैव प्रकाशात्मत्वाभिधानादतः प्रकाशस्य चन्द्रपदार्थत्वाभावान्न जातिद्वयान्वयेन तल्लाभ इत्याह—

**शशाङ्काभिधानाभिधेयो न चेष्टः**
**शशाङ्कस्य तेजोविशेषत्वहेतोः ।**
**ततश्चोपपन्ना जहल्लक्षणातः**
**पुरोक्ता पदाभ्यामखण्डार्थसिद्धिः ॥ २३३ ॥**

शशाङ्काभिधानाभिधेय इति । जातिद्वयव्यञ्जिका व्यक्तिः शशाङ्काभिधानाभिधेया न भवति तस्य तेजोजातिविशेषत्वादित्यर्थः । कथं तर्हि तस्य प्रकाशात्मत्वानुभवः प्रकाशगुणवत्त्वात्तस्माच्चन्द्रपदार्थलाभाय लक्षणा वक्तव्येति भावः । ननु भागलक्षणयैव सोऽयमित्यादावखण्डार्थत्वं दृष्टमत्र तु सा नोपपद्यते । जातिमात्रवाचित्वात्प्रकृष्टादिपदस्यातोऽखण्डार्थतानुपपन्नेत्याशङ्क्याह-ततश्चेति । मुख्यवृत्त्या बोधकत्वसम्भवः । तच्छब्दार्थः वाक्यस्य भागलक्षणैवाखण्डार्थबोधकत्वमिति न नियमः । मुख्यवृत्त्यापि तदुपपादनादतः प्रतिपाद्यपदार्थभेदप्रमाणेऽसति वाक्यमखण्डार्थं बोधयतीति प्रकृते जहल्लक्षणयाप्यखण्डार्थतासिद्धिः । न च सम्बन्धाभावः । जात्याश्रयप्रकाशाश्रयत्वेन तत्सत्त्वादिति भावः ॥ २३३ ॥

ननु चन्द्रव्यक्तेस्तेजस्त्वेन प्रकाशत्वाश्रयप्रकाशव्यक्तिसम्बन्धित्वेऽपि न प्रकर्षाश्रयव्यक्तिसम्बन्धः । न च प्रकाशगुण एव प्रकर्षजातेरप्याश्रय इति वाच्यम् । परस्परपरिहारेण वर्त्तमानयोस्तयोरेकप्रकाशव्यक्तिसमवेतत्वानुपपत्तेः । प्रकर्षो हि प्रकाशत्वमन्तरेणान्धकाररूपे रसादौ च वर्तते । प्रकाशत्वं च प्रकर्षं विना खद्योताङ्गाररूपादौ

वर्त्तत इति प्रकाशभिन्नाश्रयः प्रकर्षो वक्तव्यः । स चात्र न सम्भवत्यनुपलम्भादतः कथं प्रकर्षपदं चन्द्रव्यक्तिं लक्षयेदित्याशङ्क्याह —

प्रकर्षः प्रकाशातिरिक्तो न चात्र
प्रकाशः प्रकर्षातिरिक्तो न चात्र ।
बहिश्चन्द्रमस्ति स्वरूपातिरेक-
स्तयोश्चन्द्रमस्येकतैवातिमात्रम् ॥ २३४ ॥

प्रकर्ष इति । प्रकर्षाश्रय इत्यर्थः । प्रकर्षातिरिक्तः प्रकृष्टातिरिक्त इत्यर्थः । अत्र चन्द्रव्यक्तौ । नन्वन्धकारवत्खद्योतरूपादौ तयोर्भेद एव प्रतीयते सत्यं तत्र तथैव चन्द्रे तु न तयोर्भेद इत्याह—बहिश्चन्द्रमिति । चन्द्राद्बहिरन्यत्र चन्द्रपदं च भान्वादेरप्युपलक्षणं तयोः प्रकाशप्रकृष्टयोश्चन्द्रप्रकाशप्रकर्षस्यानुभवादित्यर्थः । नन्वस्त्वेवं तथापि किञ्चिद्भेदो वक्तव्यः विरुद्धयोरेकत्र समावेशानुपपत्तेरित्युक्तत्वात्तत्राह—अतिमात्रमिति । अत्यन्तमेकतयैवेत्यर्थः । जातिसङ्करस्यास्मन्मतेऽदोषत्वात् परमतेपि प्रकाशत्वप्रकर्षयोरनेकत्वाददोष इति चन्द्रे प्रकाश एव प्रकृष्टस्तथैवानुभवादित्यर्थः ॥ २३४ ॥

तमेवानुभवं व्यतिरेकमुखेनाह—

न चन्द्रप्रकाशप्रकर्षप्रकाशा-
त्तदीयात्पृथक्कश्चिदुत्पश्यतीह ।
तथाऽस्य प्रकर्षप्रकाशं प्रकर्षा-
त्ततो नानयोरस्ति भेदे प्रमाणम् ॥ २३५ ॥

न चन्द्रेति । इह जगति चन्द्रप्रकाशस्य प्रकर्षं तदीयात्प्रकाशाच्चन्द्रप्रकाशात्पृथगन्यत्र कश्चिन्नोत्पश्यति । यथा तथाऽस्य चन्द्रस्य प्रकर्षप्रकाशं प्रकृष्टस्य प्रकाशत्वं प्रकर्षात्प्रकृष्टादन्यत्र न पश्यति ।

यतस्ततोऽनयोः प्रकाशप्रकृष्टयोश्चन्द्रगतयोर्भेदे न प्रमाणमित्यभेद एवेत्यर्थः । ननु पृष्टं वक्तव्यमित्येव नियमः । न तु पृष्टमेव सर्वैः पदैरित्यपि पृष्टानुगुण्येनाऽपृष्टस्यापि वक्तुं शक्यत्वादन्यथा काशीं यियासुनाऽध्वनि पृष्टेऽनेन पथा याहीत्येव ब्रूयान्न त्वत्र गत्वात्र गत्वेति ततः प्रकृष्टप्रकाशपदयोर्लक्षणा नेति चेत्सत्यमुक्तं यत्पृष्टानुगुणं तदपृष्टमपि वक्तव्यमिति न ह्यत्र चन्द्रप्रातिपदिकार्थं बुभित्सितं प्रति प्रकृष्टप्रकाशवैशिष्ट्यमनुकूलं भवति। ननु चन्द्रप्रातिपदिकार्थस्याप्रकर्षप्रकाशगुणनक्षत्रादिद्रव्याद्व्यावृत्तिसिद्धये तदनुकूलमिति चेन्न-व्यावृत्तेरबुभुत्सितत्वात्तदा हि नक्षत्रादिव्यावृत्तश्चन्द्रः क इत्युभयविषयिणीमेव बुभुत्सां स्वस्य दर्शयेन्न तु कश्चन्द्र इति । ननु कश्चन्द्र इति बुभुत्सैव व्यावृत्तिविषयेति चेत्तर्ह्यप्रकृष्टप्रकाशाद्व्यतिरिक्तश्चन्द्र इत्येवोत्तरं दद्यात् । ननु प्रकृष्टप्रकाशश्चन्द्र इत्येतदेवार्थाद्व्यावृत्तिपरमिति चेन्न— बुभुत्सितार्थस्यार्थिकत्वानुपपत्तेः । व्यावृत्तेः स्वरूपज्ञानान्तरीयकत्वेनार्थसिद्धेश्च । ननु लक्ष्यज्ञानस्य केवलव्यक्तिविषयत्वे कथं तज्ज्ञाननान्तरीयकत्वेन व्यावृत्तिः सिद्ध्यतीति चेन्न । वाक्यं हि वाच्यार्थगुणवैशिष्ट्यं चन्द्रव्यक्तेर्बोधयदेव स्वप्रामाण्यनिर्वाहाय केवलव्यक्तिपरमित्युच्यते तस्यां च दशायां वाच्यार्थगुणविशिष्टप्रतीतिफलत्वेन गङ्गातीरस्येतरतीरव्यावृत्तिसिद्धिवच्चन्द्रस्याप्रकृष्टप्रकाशवद्व्यावृत्तिः सिद्ध्यत्येव न वाक्यस्य व्यावृत्तिसिद्धिः प्रयोजनं किन्तु बुभुत्सोच्छेदकस्वरूपमात्रज्ञानमेव प्रयोजनं तथा च यथा काशीं यियासुं प्रति मार्गमध्यवर्तिनगरग्रामखेटकथनं बुभुत्सितार्थोपयुक्तं नैवमेतत् । नन्वेवमपि नाखण्डार्थमेतत्कश्चन्द्र इति चन्द्रत्वेन तस्य बुभुत्सितार्थत्वात्तद्वैशिष्ट्यज्ञानं वाक्यप्रयोजनमिति चेदेवं भवेद्यदि चन्द्रत्वं नाम तद्व्यतिरिक्तं किञ्चिज्जातिरुपाधिर्वा भवेत् । न चेयं जातिचन्द्रस्यैकत्वादत एव नोपाधिरपि तत्कल्पने प्रयोजनाभावाद्भिन्नेष्वनुगमार्थं खलु जातिरुपाधिर्वा कल्प्यते

ततश्चन्द्रत्वनामस्वरूपमेवेति तद्वैशिष्ट्यं वाक्यप्रमेयम् यत्रापि पृथ्वीत्वादिकं जातिरुपाधिर्वा भवति तत्रापि पृथिव्यादिस्वरूपमेव बुभुत्सितमिति न तद्वैशिष्ट्यं वाक्यप्रतिपाद्यम्। नन्वेतत्सर्वमति विचित्रमिवभाति यत्प्रातिपदिकार्थमात्रबुभुत्सानुरोधेन प्रकृष्टप्रकाशवाक्यस्याखण्डार्थत्ववर्णनं बुभुत्सा हि सामान्यतो ज्ञाते सन्दिग्धेऽपरोक्षतोऽनिश्चिते वा भवति। सन्देहश्च न क्वचित्प्रातिपदिकार्थमात्रविषयो दृष्टः। न हि व्यक्तिमात्रे कस्य चित्सन्देह उदेति। किन्तु स्थाणुत्वादिप्रकारविषय एव। न वा अपरोक्षतो निश्चयाभावोऽस्ति। इदमिति स्वरूपस्यापरोक्षतोऽनुभवादतो बुभुत्साया अपि यत्किञ्चिद्धर्मवैशिष्ट्यमेव विषयः कल्पनीयः। तत्र यद्यपि सधर्मश्चन्द्रत्वं नाम जातिरुपाधिर्वा न सम्भवति। तथापि चन्द्रपदवाच्यत्वाकारेण बुभुत्सा वर्णनीयेति चेदुच्यते किं व्यक्तिविषयः संशय एव नास्तीत्युच्यते। किं वा तन्मात्रविषयः। नाद्यः। स्थाण्वादिसंशयस्यैव व्यक्तिविषयत्वात्तत्र स्थाण्वादिव्यक्तेरेव धर्मित्वाद्धर्मिणश्च संशयविषयत्वादेकधर्मिविरुद्धानेकप्रकारकज्ञानस्यैव संशयत्वात्। द्वितीयस्त्वस्माकमपीष्ट एव। न हि किमयं चन्द्रो न वेत्यादिरूपसंशयस्य चन्द्रमात्रविषयत्वं वर्ण्यते। तद्व्यतिरिक्तकोटेरपि विषयत्वात्। किन्तु कश्चन्द्र इति जिज्ञासैव सर्वजनीनानुभवानुरोधेन चन्द्रव्यक्तिमात्रविषयेत्युच्यते। ननु येनाकारेण यत्र सन्देहस्तत्रैव तदाकारेण जिज्ञासा वक्तव्या। चन्द्रे च संशयश्चन्द्रत्वाकारेणेति जिज्ञासा तथैव भवितुमर्हति। न च चन्द्रस्यैकत्वेन चन्द्रत्वं जातिरुपाधिर्वा न भवतीति वाच्यम्। कल्पभेदेन चन्द्रभेदसम्भवादुदशरावादिभेदेन कल्पितव्यक्तिभेदसम्भवाच्चेति चेत्तत्र न तावत्कल्पभेदेनानेकव्यक्तिवृत्तिचन्द्रत्वं समानकल्पानेकव्यक्तिवृत्तित्वनियमाज्ज्ञातेःप्रयोजनाभावात्। न तस्योपाध्यात्मकत्वमपि कल्प्यं कस्तर्हि चन्द्रपदार्थः प्रकृष्टप्रकाशाश्रयव्यक्तिरिति ब्रूमः। तर्हि पदस्यानेकार्थत्वप्रसङ्गः। कल्पभेदेन व्यक्तेरनेकत्वादिति चेन्न। प्रकृष्टप्रकाशाश्रय-

त्वेन तटस्थेन तदनुगमसम्भवात्तर्हि प्रयोजनसम्भवात्प्रकृष्टप्रकाशाश्रयत्वोपाधिरेव चन्द्रत्वमिति चेन्न। चन्द्रलक्षणस्य तस्य चन्द्रत्वानुपपत्तेः। अन्यथा लक्षणस्य लक्ष्यतावच्छेदकाभेदेन लक्षणस्य व्यतिरेकलिङ्गत्वानुपपत्तेः। पक्षतावच्छेदकस्यैव हेतुत्वायोगाल्लक्ष्यतावच्छेदकस्यैव पक्षतावच्छेदकत्वान्नापि कल्पितव्यक्तिभेदवृत्तितया चन्द्रत्वं जातिः कल्पितभिन्नव्यक्तिष्वनुस्यूतचन्द्रत्वस्य तदनुस्यूताधिष्ठानचन्द्रस्वरूपमात्रत्वापातादनुगतव्यवहारस्यानुस्यूताधिष्ठानविषयत्वेन तदतिरिक्तचन्द्रत्वे मानाभावात्तत्तश्चन्द्रत्वाकारसंशयजिज्ञासयोस्तत्स्वरूपमात्रविषयतैवेति न तदनुरोधेन वाक्यं विशिष्टपरं वर्णनीयम्। यत्रापि पृथ्वीत्वादिका जातिस्तत्रापि लक्षणानुरोधेन पृथ्वीव्यक्तिरेव जिज्ञास्यते न पृथ्वीत्ववैशिष्ट्यमपि तथा सति गन्धवत्त्वस्य तदलक्षणत्वेनाभिधानप्रसङ्गात्। ननु चन्द्रत्वस्य व्यक्तिस्वरूपमात्रत्वे व्यक्तिज्ञानसत्त्वात्कथं तत्र संशयः। संशये वा कथं तन्निवृत्तिः। पूर्वोत्तरज्ञानयोर्विषयविशेषाभावादितिचेत्-तत्र न तावत्संशयानुपपत्तिः-अनुव्यवसायेन व्यवसायस्य प्रामाण्यात्मकघटघटत्वतद्वैशिष्ट्यविषयज्ञानत्वनिश्चयेऽपि ज्ञानत्वसमानधर्मेणाप्रमाणविवेकाग्रहसहकारिणा प्रामाण्याप्रामाण्यसंशयवत्प्रकृतेऽप्यचन्द्रव्यक्तिभेदाग्रहसध्रीचीनाज्ज्योतिष्ट्वादिसमानधर्मज्ञानात्तत्संशयोपपत्तेः। ननु तत्र प्रामाण्यज्ञानं तत्सत्तानिश्चयरूपं न भवतीति चेन्न। तस्य संशयलक्षणफलकल्प्यस्य चन्द्रज्ञानेऽपि तुल्यत्वात्। नापि तन्निवृत्त्यनुपपत्तिः चन्द्रमात्रधर्मतया प्रकृष्टप्रकाशाश्रयत्वपरिज्ञानात्तदुपपत्तेः। प्रकृष्टप्रकाशश्चन्द्र इति हि वाक्यं लक्षणवाक्यतया प्रकृष्टप्रकाशस्य मुख्यया वृत्त्याऽन्ययोगं व्यवच्छिद्य चन्द्रवैशिष्ट्यं बोधयदेव स्वप्रामाण्यनिर्वाहाय लक्षणया चन्द्रव्यक्तिमात्रपरं भवतीत्युच्यते। नन्वेवं सति यद्विषयज्ञानस्य संशयनिवर्त्तकत्वं तस्यैव बुभुत्सितत्वं वक्तव्यम्। ततः कथं बुभुत्सानुरोधेन चन्द्रव्यक्तौ लक्षणा कल्प्यत इति चेत्किं तस्यापि बुभुत्सितत्वं वक्तव्यमित्युच्यते

किं वा तस्यैवेति । आद्यस्त्वङ्गीक्रियते चन्द्रव्यक्तेरेव प्राधान्येन बुभुत्सितत्वेपि तत्संशयनिवृत्त्यर्थं तल्लक्षणस्यापि बुभुत्सितत्वात् । नचैतावता वाक्यस्य वैशिष्ट्यपरत्वं स्वतन्त्रबुभुत्सायाश्चन्द्रमात्रविषयत्वात्तदनुरोधेनैव वाक्यतात्पर्यस्य कल्प्यत्वात् । ननु लक्षणबुभुत्सैव स्वतन्त्रा किं न स्यादिति चेन्न—लक्षणस्य लक्ष्यज्ञानशेषतया तद्विषयबुभुत्सायां स्वातन्त्र्यानुपपत्तेः । अत एव न द्वितीयोपि प्रामाण्यादिजिज्ञासया प्रवर्त्तमानस्य तद्व्याप्यज्ञानेन तत्संशयस्यानिवृत्तिप्रसङ्गाच्च । व्याप्यवत्त्वदर्शनस्यैव संशयनिवर्त्तकत्वेन पराभ्युगमात् । किं च घटत्वकलशत्वयोरत्यन्ताभेदेपि तदज्ञानदशायां कलशपदस्य कलशोऽर्थ इति वाक्यविशेषाज्जानतः पुरुषस्य घटत्वेनानुभूयमाने घटे नायं कलश इति विपर्यासवत्तुल्यवत्कोटिद्वयोपस्थितावारोपितभेदेन संशयवच्च चन्द्रस्यानुभूयमानव्यक्त्यभेदेपि तदज्ञानदशायां तदाकारसंशयविपर्यासयोरुपपत्तिः । व्यक्तौ ज्ञायमानायामप्यपर्यायशब्दवाच्यत्वादेव चन्द्रत्वाज्ञानसम्भवेन संशयादेरुपपत्तेश्च । ततस्तन्मात्रजिज्ञासया वाक्यस्य तद्विषयोपपत्तिरिति न प्रश्नवचने चन्द्रपदवाच्य इति पदाध्याहारेण मनः खेदनीयं तथात्वे प्रतिवचनमपि प्रकृष्टप्रकाशश्चन्द्र इति स्वरूपमात्रनिष्ठमनुपपन्नं स्यात् । न च तत्रापि चन्द्रपदवाच्य इति पदमध्याह्रियते इति वाच्यम् । अहो विद्वदग्रेसरस्याश्रुतकल्पनादीक्षापरीक्षादाक्ष्यं यदयं सर्वत्र श्रुतोपपत्तावप्यश्रुतकल्पनां वज्रकल्पामपि तृणाय मनुते । किं च किं ज्ञातचन्द्रस्वरूपस्य चन्द्रपदवाच्यत्वं प्रकृष्टप्रकाशस्य बोध्यते । उताज्ञातचन्द्रस्य । नाद्यस्तस्य प्रकृष्टस्यप्रकाशश्चन्द्र इति ज्ञानिनः शब्दप्रयोगं विनापि विमतश्चन्द्रपदवाच्यश्चन्द्रत्वादनतिरेकेण घटादिवदिति लिङ्गेन ज्ञातुं शक्यत्वात् । न च वाच्यत्वज्ञानात्पूर्वं तद्व्यतिरेकव्याप्त्यग्रहात्कथमनुमानेन तज्ज्ञानमिति वाच्यं विशेषनिष्ठत्वेन तज्ज्ञानाभावेऽपि पदत्वादिलिङ्गेन तद्वाच्यत्वस्य ज्ञातुं शक्यत्वात् । अन्यथा कश्चन्द्र पदवाच्य इति

प्रश्नस्यैवायोगात्। नापि द्वितीयः अज्ञातचन्द्रस्वरूपस्य प्रकृष्टप्रकाशश्चन्द्रपदवाच्य इति ज्ञाने चन्द्रस्य स्वरूपजिज्ञासाप्रसङ्गात्तदुच्छेदाय च प्रकृष्टप्रकाशश्चन्द्र इति तत्स्वरूपमात्रनिष्ठवाक्यप्रयोगापाताच्चेति शान्तिकर्मणि वेतालोदयन्यायापातात्। ननु विमतश्चन्द्रः चन्द्रपदवाच्यत्वाद्व्यतिरेकेण नक्षत्रादिवदित्यनुमानादेव ज्ञातुं शक्यत्वान्न स्वरूपमात्रनिष्ठवाक्यापेक्षेति चेन्न—घटपदवाच्यस्य घटत्वादेर्घटानात्मत्ववदत्रापि तन्न स्यादित्यप्रयोजकशङ्काया दुरपह्नवत्वात्। नन्वत इति चन्द्रस्वरूपं तस्य तत्पदवाच्यत्वमपि ज्ञायत इति चेत्तर्हि चन्द्रत्वं वाच्यत्वं च विधेयमिति विधेयभेदेन वाक्यभेदप्रसङ्गः वाच्यत्वविधानार्थं शब्दाध्याहारोपि व्यर्थ एव स्याच्चन्द्रत्वविधानानन्तरं मानान्तरादेव तदुपपत्तेः। नापि प्रकृष्टप्रकाशश्चन्द्रत्वे सति चन्द्रपदवाच्य इति वाक्यं कल्प्येत, चन्द्रपदार्थस्य प्रागसिद्धत्वेन तद्विशिष्टवाच्यत्वविधानानुपपत्तेः। ननु वाच्यत्वे यल्लिङ्गं प्रकृष्टप्रकाशत्वादि तदेवानेन वाक्येनोपस्थाप्यत इति चेन्न—अत्रापि ज्ञाताज्ञातचन्द्रस्वरूपपक्षोक्तदोषस्यानतिवृत्तेश्चन्द्रादिपदवैयर्थ्याच्च। एतेनाचन्द्रव्यावृत्तिस्तेन ज्ञापितलिङ्गेन प्रतिपाद्यत इति निरस्तम्। तस्माद्बुभुत्सानुरोधेन स्वप्रामाण्यनिर्वाहाय लक्षणया चन्द्रव्यक्तिमात्रपरं वाक्यमित्यलमतिप्रसङ्गेन ॥ २३५ ॥

एवं दृष्टान्ते साध्यवैकल्यं परिहृत्य तत्फलं दार्ष्टान्तिके साध्यसिद्धिमाह—

यथा सच्चिदानन्दशब्दास्तदर्थं
तथा तत्त्वमावात्मनो ब्रह्मभावम्।
विरोधान्मिथो लक्षणावर्त्मनेमौ
किमर्थं न संभूय वक्तुं समर्थौ ॥ २३६ ॥

यथेति। यथा प्रकृष्टप्रकाशपदे चन्द्रव्यक्तिमात्रं लक्षयतः तथा

सच्चिदानन्दशब्दा अपि तदर्थं तत्पदलक्ष्यं सत्यज्ञानानन्दात्मकं ब्रह्म लक्षयन्तीत्यर्थः। अत एव महावाक्यमपि केवलमात्मानं बोधयतीत्याह- तथेति। इमौ तत्त्वमौ संभूय मुख्यार्थयोर्विरोधाल्लक्षणा वर्त्मनात्मनो ब्रह्मभावं किमर्थं वक्तुं न समर्थौ समर्थावेवेत्यर्थः। विरोधाभावेपि प्रामाण्यनिर्वाहार्थं लक्षणया शब्दो बोधयतीति चेत्किमु वक्तव्यं विरोधे सतीत्ययमर्थः काका ध्वनितः॥ २३६॥

तत्त्वंपदार्थौ कीदृशमर्थं लक्षयत इत्याकाङ्क्षायां पूर्वोक्तमर्थं स्मारयति—

**प्रत्यक्त्त्वं लक्षयेत्त्वंपदार्थ-**
**स्तच्छब्दार्थो लक्षयेदद्वितीयम्।**
**एवं पूर्णं प्रत्यगात्मानमेतौ**
**शब्दौ ब्रूतो लक्षणावर्त्मनैव॥ २३७॥**

प्रत्यक्त्वमिति। त्वंपदार्थो द्वितीयब्रह्मस्वरूपाविरुद्धं देहादिसाक्षिण- मपरोक्षानुभवमात्रं लक्षयति। तत्पदार्थोप्यपरोक्षानुभवत्वंपदलक्ष्या- विरोधेनाद्वितीयानन्दमात्रं लक्षयतीत्यर्थः। पदस्य लक्ष्यबोधकत्वे शक्यसम्बन्धस्य द्वारत्वादर्थो लक्षयेदित्युक्तम्। एवं सति वाक्यार्थस्य पूर्णत्वोपपत्तेस्तत्त्वंशब्दौ लक्षणया प्रत्यगात्मानं पूर्णं ब्रह्म यथा भवति तथा ब्रूतो बोधयत इत्याह—एवं पूर्णमिति॥ २३७॥

ननु लक्षणयाऽखण्डब्रह्मावबोधे जातेपि किं सिद्ध्यति संसारनि- वृत्तिरिति चेन्न—श्रुतवाक्यानां समुपजातब्रह्मावबोधानामपि यथापूर्वं संसारदर्शनान्निवृत्तस्यापि संसारस्य प्रबोध इव पुनरुद्भवोपपत्तेश्च। न वा संसारस्य पारमार्थिकस्य निवृत्तिरपि संभवतीत्याशङ्क्याह—

**पारोक्ष्यं च ब्रह्मणि प्रत्यगर्थे**
**दुःखित्वं च ध्वान्तसंभूतमाहुः।**

**सम्यग्ज्ञानध्वस्तमोहस्य पुंसः**
**प्रध्वंसेते हेत्वभावेऽफलत्वात् ॥ २३८ ॥**

पारोक्ष्यमिति। चशब्द इवार्थे। यथा 'यत्साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः, स एष नेतिनेत्यात्मे'त्यादिश्रुतिप्रतिपन्नेऽपरोक्षानुभवैकरूपे निष्प्रपञ्चे ब्रह्मणि तद्विरुद्धपारोक्ष्यसत्यकामत्वादिकं सर्वमविद्याकल्पितमेवं परमानन्दानुभवैकरूपतयानुभूयमाने प्रत्यगात्मनि तद्विरुद्धदुःखित्वादिकं भ्रान्तिसंभूतं न तु वास्तवमतस्तन्निवृत्तिरुपपन्नेतिभावः। यदुक्तं समुपजाततब्रह्मावबोधानामपि संसारोऽनुभूयत इति तद्दूषयति—सम्यग्ज्ञानेति। अप्रतिबद्धात्मसाक्षात्कार एव सम्यग्ज्ञानशब्दार्थः। भ्रान्तिसंभूतं पारोक्ष्यं दुःखित्वादिकं च सम्यग्ज्ञानध्वस्तमोहस्य पुंसः प्रध्वंसेते इत्याहुरिति सम्बन्धः। सम्यग्ज्ञानस्येदानीमभावादेव संसारदर्शनं न विरुध्यत इति भावः। पुनरुद्भवचोद्यं दूषयति—हेत्वभावेफलत्वादिति। अफलत्वादिति छेदः। कारणाभावे कार्याभावस्य नियतत्वादित्यर्थः। जाग्रति कारणनिवृत्त्यभावादेव पुनः संसारदर्शनं न तथा ज्ञानिनः संगच्छते। अज्ञाननिवृत्तेरित्यर्थः ॥ २३८ ॥

ननु यदुक्तं केवलस्यात्मनो न शब्दवाच्यत्वं किन्तु लक्ष्यत्वमेवेति तदसत् शब्दान्तरवाच्यस्यैव शब्दान्तरलक्ष्यत्वादन्यथा लक्ष्यपदार्थमूकताप्रसङ्गात्। ननु किमिति मूकतापत्तिः—चिन्मात्रादिशब्दैर्लक्ष्यपदार्थोऽभिधीयत इति चेन्न—चिन्मात्रशब्दस्य तद्वाचकत्वेऽपसिद्धान्तप्रसङ्गात्। लक्षकत्वे चोत्तरानुपरमप्रसङ्गाल्लक्ष्यपदार्थानिर्धारणं च स्यादितिचेत्किमात्मनः शब्दशक्तिविषयत्वाभावोपन्यस्तदोषस्य कः परिहार इति तावन्मात्रं बुभुत्सितमुताभ्यां दोषाभ्यां शक्तिविषयत्वमात्मनः साध्यते। नाद्यस्तत्र न तावत्प्रश्नोत्तरानुपरमदोषः सम्भवति। लक्षकपदैः पृष्टस्य लक्षकपदैरेवोत्तरोपपत्तेः। प्रश्न-

पदसमानवृत्त्या पदेनोत्तरं दातव्यमिति हि नियमः । लोके तथैव दर्शनात् । प्रश्नपदं चात्मानं लक्षणैव बोधयतीति लक्षकपदैरेव तस्योत्तरं श्लिष्टं भवति। नचैवं तत्तल्लक्ष्यस्वरूपाकाङ्क्षायां तत्तल्लक्षकपदाभिलापे प्रश्नोत्तरानुपरम इति वाच्यम् । चित्तविक्षेपादीनामाकाङ्क्षायाः कदाचिदुपरमोपपत्तेः। अन्यथा वाचकशब्दाभिलापेऽपि घटशब्दवाच्यः क इति प्रश्ने घटत्वादिकमित्युत्तरे च तत्स्वरूपं किमिति प्रश्ने तदुत्तरस्याप्यावश्यकतया प्रश्नोत्तरानुपरमप्रसङ्गात् । ननु बुभुत्सितार्थज्ञानस्याभिधानेन वृत्तत्वान्न बुभुत्सान्तरं भवतीति चेत्तर्हि लक्षणयापि बुभुत्सितार्थज्ञानस्य वृत्तत्वाद् बुभुत्सान्तरानुदयः प्रकृतेऽपि तुल्यः । अत एव लक्ष्यपदार्थानिर्धारणमपि नाभिधानवदुपपत्तेः । स्वयंप्रकाशस्यात्मनः सत्यादिपदलक्ष्यस्य विनापि मानं तदुपपत्तेः । ननु लोके पदान्तरवाच्यस्यैव पदान्तरलक्ष्यत्वदर्शनादत्रापि पदान्तरवाच्यत्वं स्वीकर्त्तव्यमिति चेन्न—वाच्यतायां प्रकृतेऽसम्भवेन नियमदर्शनस्य भ्रान्तित्वात् । ननु किमिति वाच्यताया असम्भवः । अव्यवहार्यत्वादिति ब्रूमः । ननु किमिदमव्यवहार्यत्वं समुदायावयवशक्तिलक्षणशब्दमुख्यवृत्तिनिमित्ताभावेन साक्षाच्छब्दव्यवहारायोग्यत्वमित्यभिप्रेत्याह—

षष्ठीजातिगुणक्रियादिरहिते सर्वस्य विज्ञातरि
प्रत्यक्चे परिवर्जिताखिलजगद्द्वैतप्रपञ्चे दृशौ ।
संत्यक्तव्यवधानके परमके विष्णोः पदे शाश्वते
त्वय्यज्ञानविजृम्भिता न हि गिरो मुख्यप्रवृत्तिक्षमाः २३९

षष्ठीजातीति । षष्ठ्यर्थः सम्बन्धः षष्ठीत्युच्यते । सम्बन्धं निमित्तीकृत्य राजपुरुषादिशब्दाः पुरुषे प्रवर्त्तन्ते । जातिर्गोत्वादिस्तन्निमित्तीकृत्य गवादौ गवादिशब्दा प्रवर्त्तन्ते । गुणो नैल्यादिः तन्निमित्तेन

नीलादिशब्दा उत्पलादौ प्रवर्त्तन्ते। क्रिया पचनादिः तया पाचकादिशब्दाः पुरुषे प्रवर्त्तन्ते। आदिपदेन स्वरूपं गृह्यते डित्थादिशब्दाः स्वरूपनिमित्ताः प्रवर्त्तन्ते। एतेषां चान्यतमस्याप्यात्मन्यभावात्तत्र शब्दप्रवृत्तिः कथमपि न सम्भाव्यते। न च वास्तवसम्बन्धाद्यभावेप्याविद्यकं सम्बन्धादिकं किं न स्यादिति शङ्क्यम् आविद्यकप्रवृत्तिनिमित्तसम्बन्धादेरप्यविद्याशबलवृत्तितयाऽसङ्गोदासीने केवले आत्मन्यभावादिति भावः। ननु सम्बन्धादिनिमित्तशब्दप्रवृत्तिर्माभूत्स्वरूपनिमित्ता तु सा किं न स्यादिति चेन्न। संज्ञादिशब्दो हि स्वरूपनिमित्तः संज्ञाशब्दो हि यदित्थमिति विशेषतः पुरुषेण निर्देष्टुं शक्यते तत्रैव प्रवर्त्तते तस्य शब्दस्वाभाविकत्वाभावात् न तु केवलमात्मस्वरूपं तादृशं तस्य सर्वान्तरत्वेन शब्दातिरिक्तपराव्यापारप्रमाणाविषयत्वादित्यभिप्रेत्याह— सर्वस्य विज्ञातरीति। सर्वविज्ञातृत्वादेवात्मा न विज्ञेयः विज्ञातृविज्ञेयत्वयोरेकत्रानुपपत्तेरित्यर्थः। तर्हि सर्वप्रमाणागोचरत्वेन किमात्मनो ऽसत्त्वमेव नेत्याह—प्रत्यच इति। सर्वेषां स्वप्रकाशानुभवरूपेण प्रकाशमानत्वान्न तस्यासत्त्वमित्यर्थः। आत्मनि पूर्वोक्ते सम्बन्धाद्यभावे हेतुमाह—परिवर्जितेति। परिवर्जितो निरस्तो निखिलजगद्रूपोऽनित्यो द्वैतप्रपञ्चो यस्मिन्स तथोक्तः। यत्प्रमाणं विनापि प्रत्यक्ष इति तत्र हेतुमाह—दृशाविति। ज्ञानस्वरूप इत्यर्थः। तस्य ताटस्थ्यं वारयति—संत्यक्तव्यवधानक इति। अव्यवहित इत्यर्थः। एतादृशस्य दृशः पारमार्थिकं स्वरूपं दर्शयति—परमके विष्णोः पद इति। पदं स्वरूपं तस्य जगत्कारणत्वेन प्राप्तां विक्रियां वारयति—शाश्वत इति। कूटस्थ इत्यर्थः। तस्य व्यवधाननिराकरणफलमाह त्वयीति। अव्यवहार्यत्वसमर्थनफलमाह—अज्ञानाविजृम्भिता इति। अतो न केवलब्रह्मणः पदलक्ष्यतायै पदवाच्यत्वं स्वीकर्त्तुं शक्यत इति भावः। एवमभिनिवेशेपि नास्माकं क्षतिः। ब्रह्मणोऽप्यविद्यानाशपदवाच्यत्वादिति द्रष्टव्यम् ॥ २३६ ॥

किं च स्वसम्बन्धमनपेक्ष्य स्वविषये प्रवृत्तिसमर्थं मनोपि केवलं केवले आत्मनि विषये स्वभावान्न प्रवर्त्तते। किमु वक्तव्यं सम्बन्धापेक्षशब्दप्रवृत्त्यभाव इत्याह—

**आस्तामत्र वचः प्रवृत्तिविरहः प्रत्यक्त्वहेतोर्दृशि**
**व्यापाराय मनोपि न प्रभवति भ्राम्यत्पराग्भूमिषु।**
**एवं चेदखिलप्रमाणपदवीः षोढा विभिन्ना भवा-**
**नुल्लङ्घ्य व्यतिष्ठते त्वयि गिरः स्यान्मुख्यवृत्तिः कथम्।२४०।**

आस्तामिति। अथवा—शब्दसहकृतमनोव्यापारयोग्यस्यैव शब्दशक्तिविषयत्वमात्मनस्त्वनेवंरूपत्वान्न तत्र शक्तिः। नचैवं निमो निर्बीजः। अन्यथा शक्तिग्रहायोगादित्यभिप्रेत्याह—आस्तामिति। आत्मनि वचसः सम्बन्धापेक्षस्य प्रवृत्तिविरह आस्तां दृश्यात्मनि मनोपि स्वविषयप्रवृत्तौ सम्बन्धानपेक्षमपि व्यापाराय ज्ञानजननाय न प्रभवति। न समर्थं तत्र हेतुत्वेनात्मानं विशिनष्टि—प्रत्यक्त्वेति। ननु प्रतीच आन्तरत्वेन बाह्यचक्षुरादिप्रवृत्त्यभावेप्यात्ममनः प्रवृत्तिः किं न स्यादिशङ्क्य मनो विशेषयति—भ्राम्यदिति। शब्दादिपरागर्थेषु प्रवर्त्तमानमित्यर्थः। मनसो बाह्यगोचरत्वमनुभवतः सिद्धं शब्दाद्यवगमस्य तदन्वयव्यतिरेकानुविधानात्केवलात्माविषयत्वं च श्रुतिर्दर्शयति। पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्निति। अन्तरात्मानं न पश्यतीत्यर्थः। ननु मनोगोचरत्वमन्तरेणापि शब्दगोचरत्वं किं न स्यान्न हि प्रमाणान्तरप्रवृत्तिः प्रमाणान्तरेणोपजीव्यत इत्याशङ्क्य मनोगोचरे न केवलं शब्दप्रवृत्त्यभावः। किन्तु प्रत्यक्षानुमानोपमानार्थापत्त्यभावप्रमाणप्रवृत्तिरपीत्याह - एवंचेदिति। आत्ममनोगोचरश्चेद्भवान् षोढा विभिन्ना अखिलप्रमाणप्रवृत्तिरुल्लङ्घ्यातिक्रम्य वर्तते। यद्विषयज्ञानं मनो जनयति तत्रैव प्रत्यक्षादिकं शब्दश्च प्रमाणं प्रमिति-

जनकत्वस्यैव प्रमाणत्वात्। प्रमितेश्च मनोवृत्तिरूपत्वादतो मनःप्रवृतेः सर्वप्रमाणोपजीव्यत्वान्न तेन विना प्रत्यक्षादिप्रवृत्तिरित्यर्थः। फलितमाह—त्वयीति। केवले त्वयि केवलमनोव्यापारागोचरे शब्दस्य कथं मुख्यवृत्तिः स्यान्न कथमपीत्यर्थः। अथवा केवलस्य मनसोऽगोचरेपि घटादौ चक्षुरादिद्वारा तत्प्रवृत्तिदर्शनात्प्रकृतेपि तथा मनसः प्रवृत्तिः किं न स्यात्तत्राह-एवमिति। यथा केवलात्मा केवलमनोऽगोचर एवं रूपादिहीनतया चक्षुरादिप्रमाणागोचरश्चेत्कथमपि मनः प्रवृत्त्यभावात्त्वयि कथं शब्दस्य मुख्यवृत्तिः स्यादित्यर्थः॥ २४०॥

नन्वात्मनो मनोव्यापारागोचरत्वे कथं लक्षणयापि तमात्मानं वेदान्ताः विषयीकर्त्तुमीशीरन्निति चेन्न—वेदान्तानां लक्षणयापि तद्विषयत्वाभावात्तथा हि प्रमाणविषयत्वं हि तदभिव्यक्तचैतन्यभास्यत्वं भास्यत्वं च स्वव्यतिरिक्तचैतन्यसंसर्गित्वं तच्च भास्यत्वं द्विविधं वृत्तिव्याप्यत्वं फलव्याप्यत्वं च तत्रान्तःकरणवृत्त्यभिव्यक्तचैतन्यं फलं तदवच्छेदकं फलव्याप्यं वृत्त्यभिव्यक्तचैतन्यावच्छेदकमन्तरेण कथंचिच्चैतन्यसम्बन्धित्वमात्रं वृत्तिव्याप्यत्वम्। आद्यं तु घटादौ प्रसिद्धं तत्रेन्द्रियद्वारानिःसृतान्तःकरणवृत्त्यभिव्यक्तघटाद्यवच्छिन्नचैतन्यस्य वृत्तिसंसृष्टघटस्यावच्छेदकत्वाद् द्वितीयं नित्यानुमेये धर्मादौ प्रसिद्धं तत्र विषयस्येन्द्रियसम्बन्धाभावेन तदाकारवृत्तिसम्बन्धाभावात्तदवच्छिन्नचैतन्यस्य वृत्त्यभिव्यक्तत्वाभावात्तत्रादौ वेदान्तानामात्मा परोक्षप्रमित्युत्पादकतयात्मनः प्राप्तं तत्फलव्याप्यत्वलक्षणं तत्कर्मत्वं निराकरोति—

**आत्मानं न तु कर्मतामुपनयच्छन्दो वदेल्लक्षणा-**
**मार्गेणापि यतः पराग्विषयवन्नास्येष्यते कर्मता।**
**प्रत्यक्ता हि विरुद्ध्यते यदि भवेदस्याऽऽत्मनः कर्मता**
**यद्यत्कर्म न तस्य तस्य भवति प्रत्यक्स्वभावो यतः॥२४१॥**

आत्मानमिति । शब्दो वेदान्तो लक्षणावृत्त्याप्यात्मानं कर्मतामुपनयत्प्रापयन्न वदेन्न बोधयेदित्यर्थः । तत्र हेतुः—यत इति । अस्यात्मनो घटादेरिव कर्मत्वं यतो नेष्यते तत इत्यर्थः । घटादिर्हि स्वतःप्रकाशशून्यतया वृत्तिलक्षणक्रियाजन्यप्रकाशाख्यफलभाक्त्वेन चाक्षुषादिज्ञानस्य कर्मकारकं भवितुमर्हति । आत्मा तु न तथा । स्वत एवाभिव्यक्तप्रकाशात्मत्वात् प्रकाशान्तरस्याभावादतो न तस्य कर्मत्वमित्यर्थः । हेत्वन्तरमप्याह—प्रत्यक्त्वेति । हिः प्रसिद्धव्याप्तिविरोधमेव दर्शयति—यद्यदिति । यतो यद्यद्घटादिकं सम्वित्कर्म तस्य तस्य न प्रत्यक्स्वभावः प्रत्यक्त्वमात्मत्वं नेतीति प्रत्यक्त्वकर्मत्वयोः परस्पराभावव्याप्तिरनुभवसिद्धेत्यर्थः ॥ २४१ ॥

इदानीं नित्यानुमेयधर्मादिवदपि तस्य ज्ञानविषयत्वं निराकरोति—

**वागादेः खलु बाह्यवस्तुविषयो नात्मा यतो नाऽऽत्मनि**
**व्यापारं करणस्य कस्यचिदपि प्रेक्षामहे न्यायतः ।**
**यत्किञ्चित्करणं जगत्त्रयगतं तत्प्रत्यगात्मेच्छितं**
**बाह्ये वस्तुनि वर्ततेऽनुभवनं तत्र प्रमाणं मतम् ॥ २४२ ॥**

वागादेरिति । वाक्शब्दः आदिपदेनेतरप्रमाणसंग्रहः । आत्मेतिच्छेदः इतरप्रमाणस्येवात्मा शब्दप्रमाणस्यापि धर्मादिवन्न विषयः । तत्र हेतुः—यत इति । करणस्य शब्दस्यात्मनि व्यापारं विषयीकरणं न प्रेक्षामहे न पश्यामः प्रमाणाभावादित्यर्थः । नन्वौपनिषदमिति विशेषणेनात्मनोपि शब्दविषयत्वमवगम्यते तत्राह—न्यायत इति । यद्धि यज्जन्यवृत्त्यधीनस्वव्यतिरिक्तप्रकाशं तत्तद्वृत्तेर्विषयो भवति धर्मादिश्च शब्दाधीनवृत्त्यभिव्यक्तप्रमातृचैतन्यप्रकाशसंसर्गीति तस्य वृत्तिविषयत्वं युज्यते । आत्मा तु स्वयंप्रकाशतया न कथमपि वृत्त्यधीनप्रकाश इति

न वेदान्तजन्यवृत्तिविषय इति नात्मनि शब्दव्यापारं पश्याम इत्यर्थः । उक्तश्रुतिस्तु वेदान्तानां तदाकारबुद्धिजनकत्वमात्राभिप्रायेति भावः । मानान्तरमप्याह—यत्किञ्चिदिति । जगति यत्किञ्चित्करणं शब्दादि प्रमाणं तत्सर्वं प्रत्यगात्मप्रकाशितमेव बाह्यं विषयीकरोति । ततः शब्दस्य प्रत्यगात्मविषयत्वमनुपपन्नं तत्प्रकाशत्वात् । न हि खलु यद्येन प्रकाश्यते तत्तस्य विषयो भवति । न हि सवितृप्रकाश्यं रूपं सवितारं प्रकाशयति । तथाचोक्तं—मात्रादिबोधकं मानं प्रत्यगात्मनि साक्षिणि न व्यापारयितुं शक्यं वह्निं दग्धुमिवोल्मुकमिति । सर्वस्य प्रमाणस्य प्रत्यगात्मेक्षितत्वे प्रमाणमाह—अनुभवनमिति । तत्र प्रत्यगात्मेक्षितत्वेऽनुभूयमानस्यैव शब्दादेः स्वविषये प्रवृत्तावविवादादित्यर्थः । अत एव विषयत्वसामान्यलक्षणमात्मनि न सम्भवतीति भावः ॥ २४२ ॥

आत्मनो मनोजन्यवृत्त्यभिव्यक्तप्रकाशासंसर्गितया मनोविषयत्वाभावोनोपपादितशब्दाविषयत्वमुपसंहरति—

**प्रत्यग्रूपमतो न शब्दविषयो बुद्धेरवेद्यं यतो**
**बुद्धिर्यत्र हि विद्यते स विषयः शब्दस्य नाऽऽत्मन्यसौ ।**
**तेनाऽऽत्मानमसौ न गोचरयितुं शब्दः क्षमो मुख्यया**
**वृत्त्या वेतरयाऽपि तेन न तया तस्याऽऽत्मनः कर्मता ॥ २४३ ॥**

प्रत्यग्रूपमिति । नन्वस्त्येवात्मनि मनोव्यापारः 'दृश्यते त्वग्रया बुद्ध्या' 'एषोऽणुरात्मा चेतसा वेदितव्य' इत्यादिश्रुत्या आत्मनोपि मनोवेद्यत्वावगमादित्याशङ्क्याह—नात्मन्यसाविति । असौ बुद्धिरात्मनि येन न प्रवर्त्तते तेनासौ शब्दः कथमप्यात्मानं विषयीकर्त्तुं न क्षमते । तेन विषयत्वाभावादेवात्मनस्तया लक्षणयापि न विषयत्वविशेषकर्मता न वा धर्मादिवच्छब्दविषयतेत्यर्थः । एतदुक्तं भवति । शब्दविषयत्वे हि बुद्धिवृत्तिमात्रेण नालं किन्तु बुद्धिविषयत्वमपेक्षते । न चात्मा

बुद्धिविषयः। द्विविधस्यापि विषयत्वस्य तत्राभावात्। नचोक्तश्रुतेस्तर्हि का गतिरिति वाच्यम्। यन्मनसा न मनुते अन्यदेव तद्विदितादित्यादि न्यायोपोद्बलितश्रुत्या विरोधेन तस्या वेदान्तसहायेनात्माकारवृत्तिजनकत्वमात्रपरत्वेन चरितार्थत्वादिति ॥ २४३ ॥

नन्वात्मनो वेदान्ताविषयत्वाभिधानं सूत्रविरुद्धं शास्त्रयोनित्वसूत्रेण ब्रह्मणो वेदान्तप्रमाणकत्वप्रतिज्ञानान्न ह्यविषयस्य प्रमाणविषयत्वप्रतिज्ञायुक्तिमतीत्याशङ्कते—

**नन्वज्ञेयमिदं भवेद्यदि मम प्रत्यक्स्वरूपं ततः**
**प्रामाण्यं कथमस्य वेदशिरसस्तत्र प्रतिज्ञायते।**
**यन्मेयं न भवेत्कदाचिदपि तद्वेदान्तवेद्यं भवे-**
**दित्येतद्वचनं पराहतपदं वक्तुं न युक्तं बुधैः ॥२४४॥**

नन्वज्ञेयमिति। ममेदं प्रत्यक्स्वरूपमज्ञेयमविषयो यदि भवेत्तर्हि अत्रात्मन्यस्य वेदशिरसः प्रामाण्यं सूत्रकृता कथं प्रतिज्ञायत इति सम्बन्धः। अविषये शब्दप्रमाण्यप्रतिज्ञायां कानुपपत्तिस्तत्राह— यन्मेयमिति। यत्कदाचित्कथंचिदपि मेयं न भवेत्तद्वेदान्तवेद्यं भवेदित्येतद्वचनं विरुद्धार्थकतया पराहतपदम् अतएव बुधैर्वक्तुमयुक्तमित्यर्थः। विशेषे हि सामान्यं व्यापकमतो विषयत्वाभावे शब्दविषयत्वमपि न स्यादित्यर्थः ॥ २४४ ॥

आत्मनो विषयत्वं विनापि प्रयोजनसद्भावात्तत्र प्रामाण्यप्रतिज्ञा न विरुध्यत इति परिहरति—

**नैतद्वस्तुनि कल्पितस्य जगतो वाक्यप्रसूतप्रमा-**
**बुद्धिर्मूलधगिष्यते तव निजस्वाकारमात्रग्रहात्।**

**कर्मत्वं न करोति वाक्यजनिता बुद्धिः स्वरूपे तव**
**स्वाकारग्रहणेन केवलमियं संसारमूलं दहेत् ॥२४५॥**

नैतदिति। एतत्त्वदुक्तं न कुतस्तत्राह—कल्पितस्येति। यतस्तत्त्वमादिवाक्यजन्यब्रह्माकारापरोक्षप्रमाणवृत्तिर्वस्तुन्यात्मनि कल्पितस्य प्रमातृत्वादिप्रपञ्चस्य यन्मूलमज्ञानं तद्दहतीति मूलधगिष्यते। तत एतन्नेत्यन्वयः। वृत्तेर्जडायाः कथमनर्थमूलाज्ञाननिवर्त्तकत्वं तत्राह—तव निजस्वाकारमात्रग्रहादिति। तव स्वाभाविकब्रह्माकारमात्रग्रहात्पूर्णब्रह्मप्रतिबिम्बोद्ग्राहित्वादित्यर्थः। अतो वेदान्तानां बोधकत्वाभावेपि निवर्त्तकत्वेन ब्रह्मणि प्रामाण्यं संगच्छत इति भावः। ननु यद्विषयमज्ञानं तद्विषयज्ञानेनैव तन्निवर्त्तत इति वक्तव्यम्। समानविषययोरेव ज्ञानाज्ञानयोर्विरोधदर्शनात्ततो ब्रह्मणो ज्ञानविषयत्वाभावे वेदान्तजन्यज्ञानस्य कथं तदाकारग्रहणमात्रेण तदज्ञाननिवर्त्तकत्वमित्याशङ्क्याह—कर्मत्वमिति। तव स्वरूपे वाक्यजन्या बुद्धिः कर्मत्वं विषयत्वं न करोति नापादयति। उभयविधविषयत्वस्याप्यनुपपत्तेरित्यर्थः। तर्हि कथमज्ञाननिवृत्तिस्तत्राह—स्वाकारेति। इयं वृत्तिः केवलमात्मनो विषयत्वं विनापि ब्रह्माकारग्रहणेन संसारमूलमज्ञानं दहेदविद्यानिवृत्तेरभीप्सितत्वद्योतनाय संसारमूलमित्युक्तमिति द्रष्टव्यम्। अज्ञाननिवृत्तौ हि वृत्तेर्विषयाकारत्वमात्रमेवापेक्ष्यते न पुनस्तद्विषयत्वं केवलव्यतिरेकाभावादित्यर्थः। तथा च ब्रह्मणः फलव्याप्यत्वाभावेपि धर्मादिवद्वृत्तिविषयत्वाभावेप्याकारार्पकत्वेन वृत्तिविषयत्वं सर्वत्रोक्तमिति द्रष्टव्यम् ॥ २४५ ॥

ननु प्रमाणानां विषयबोधकत्वं विना कुत्र प्रामाण्यं दृष्टं ज्ञानस्य वा स्वविषयत्वं विनाऽज्ञाननिवर्त्तकत्वं क दृष्टमित्याशङ्क्य दृष्टं मीमांसकानां संविद्व्युत्पादकवचनतज्जन्यज्ञानयोरित्याह—

**संविद्व्युत्पादकं यद्वचनमभिमतं कर्म मीमांसकानां तत्कर्मत्वं न तावत्क्षिपति घटपटाद्यर्थसंवित्स्वरूपे। किंत्वज्ञानापनुत्त्या फलवदभिमतं तत्र शिष्यस्य तद्व- त्सर्वं वेदान्तवाक्यं फलवदिदमपि प्रत्यगात्मस्वरूपे॥२४६॥**

संविद्व्युत्पादकमिति। कर्ममीमांसकानां भाट्टानां प्राभाकराणां च ज्ञानं ज्ञातता वा स्वयंप्रकाशमिति तत्स्वरूपव्युत्पादकं यद्वचनं तद्घटपटाद्यर्थविषयसंवित्स्वरूपे कर्मत्वं न क्षिपति ज्ञानं ज्ञाततां वा न विषयीकरोति तयोः स्वयंप्रकाशत्वादित्यर्थः। ननु स्वप्रकाशस्यापि तस्य प्रत्यक्षज्ञानविषयत्वमेवानुपपन्नं परोक्षज्ञानविषयत्वं त्वविरुद्धमिति चेन्न। न हि परोक्षज्ञानविषयो ज्ञानं ज्ञातता वा ज्ञानविषयस्यापि स्वयंप्रकाशत्वे किमपराद्धं नैयायिकादिभिर्घटादिना वा। ननु भवन्मतेपि ज्ञानस्य स्वयंप्रकाशत्वानुमितिविषयत्वमस्तीति चेन्न—तत्राप्यस्मन्मते संशयविपर्यासादिनिवृत्तिव्यतिरेकेण ज्ञानविषयताया अभावात्। ननु वर्त्तमानयोरेव तयोः स्वयंप्रकाशत्वमिति चेत्तर्हि स्वप्रकाशत्वं न तत्स्वभावप्रयुक्तं किन्तु वर्त्तमानकालप्रयुक्तमेव स्यान्न हि विद्यमान एव दीपः स्वयंप्रकाशो विनष्टः स प्रदीपान्तरेण ज्ञायते। ननु ज्ञानस्य वर्त्तमानार्थप्रकाशत्वादवर्त्तमानस्य प्रकाशत्वमप्यविरुद्धमिति चेद्भवत्वेवं सर्वं ज्ञानं स्वयंप्रकाशमिति ज्ञानस्य वर्त्तमानस्य वेद्यत्वं विनापि वाक्यस्य तद्विषयत्वदर्शनाद्विद्यमानज्ञाततादशायां प्रयुक्तवाक्यस्यातद्विषयत्वेपि तत्र प्रमाणत्वदर्शनादिति भावः। किं तर्हि तत्र प्रमाणकृत्यमित्याह—किन्त्विति। संशयादिनिवृत्तिरेवेत्याह—अज्ञानापनुत्त्येति। ज्ञानादिकं स्वयंप्रकाशं न वा ज्ञानादिकं परप्रकाशमेवेति संशयविपर्यासान्यतरनिवृत्त्या तत्र ज्ञाने ज्ञाततायां वा तद्वाक्यं फलवदभिमतम्। ननु सहस्र एव मुक्तेपि न प्रतिवादिनोऽज्ञानं गच्छति तत्राह—शिष्यस्येति। यस्तु ज्ञानस्वरूप-

मवगन्तुमिच्छति तस्येत्यर्थः । ज्ञानस्यापि स्वविषयविषयत्वं विना तदाकारमात्रेणाविद्यानिवृत्तिरपि तत्रैव सिद्धेति द्रष्टव्यम् । नन्वात्माविद्यानिवृत्तेरात्ममात्रत्वात्तस्य च नित्यत्वान्न तथापि वेदान्ता अर्थवन्तः स्युरित्याशङ्क्य दार्ष्टान्तिकप्रदर्शनव्याजेन परिहरति—तद्वदिति । यद्यप्यविद्यानिवृत्तिर्नित्यसिद्धात्मस्वरूपमेव वस्तुतस्तथापि तस्मिन्नारोपिताविद्या तज्जन्योऽनर्थश्च न नेति शक्यं वक्तुम् । तथा च यावद्वेदान्तवाक्याद् ब्रह्माहमिति ज्ञानं न जन्यते तावद्भ्रमावस्थानं यदा तु तत्त्वमादिवाक्यात्तादृगाकारज्ञानं जायते तदा न भ्रम इत्यन्वयव्यतिरेकाभ्यां भ्रान्त्यदर्शनमेव ज्ञानफलमिति । यत्र त्वस्येत्यादिशास्त्रसिद्धमेवाङ्गीक्रियत इति न काचिदनुपपत्तिरिति भावः ॥ २४६ ॥

एवमात्मनो मुख्यविषयत्वाभावेपि ज्ञानाकारसमर्पकत्वेन वेदान्तविषयत्वमुक्तमिदानीं प्रकारान्तरेणापि तदाह—

**अकार्यस्वरूपस्य कार्यत्वमिष्टं**
**यथा कारकैर्मूर्त्तमुत्सारयद्भिः ।**
**तथैवाप्रमेयस्य मेयत्वमिष्टं**
**प्रमाणैस्तमस्तज्जमुत्सारयद्भिः ॥ २४७ ॥**

अकार्यस्वरूपस्येति । अथवा—अविषयस्याप्यात्मनः कथंचिद्विषयत्ववर्णनं न विरुद्धमित्येतत्सदृष्टान्तमाह—अकार्येति । यथा मूर्त्तं पृथिव्यादि द्रव्यमुत्सारयद्भिः कुद्दालादिकारकैरकार्यस्वरूपस्य कर्त्तुमयोग्यस्य गगनादेः कार्यत्वं कृतिविषयत्वं दृष्टं तथैवाप्रमेयस्यात्मनो वृत्तिद्वारा अविद्यां तत्कार्यं निवर्त्तयद्भिर्वेदान्तप्रमाणैर्विषयत्वमिष्यत इत्यर्थः । लोके हि कुद्दालादिभिः कूपं खनन्तीति प्रसिद्धम् । नचेयं प्रतीतिर्भ्रान्तिरिति कस्यचित्प्रतिपत्तिरस्ति । न च कूपस्यावच्छिन्नाकाशस्य साक्षात्कृतिविषयत्वमुपपद्यते । तथाप्युत्सार्यमाणमूर्त्तसम्बन्धादेव

तस्य कारकव्यापारविषयत्वप्रतीतिरेवं वेदान्तजन्यज्ञाननिवर्त्त्याविद्याधिष्ठानत्वमेवात्मनो वेदान्तविषयत्वमित्यर्थः ॥ २४७ ॥

नन्वात्मनो विषयत्वं विना ज्ञानस्य तदाकारत्वं ज्ञाननिवर्त्त्याविद्याविषत्वं वाऽनुपपन्नम् । अविषयस्य पटस्य घटज्ञानाकारत्वादर्शनाद्विषयत्वमन्तरेणात्मन आकरार्पकत्वशब्दार्थमपि न विद्मः । न वा ज्ञानविषयत्वमात्मनो दुर्निरूपं ज्ञानजन्यव्यवहारविषयत्वस्यैव सर्वत्र ज्ञानविषयत्वशब्दार्थत्वात्तस्मादात्मनोऽविषयत्वज्ञानाकारत्वाद्युपपादनं स्वमतश्रद्धाजाड्यमिति चेत्—न-तावदाकरार्पकत्वे विषयत्वं प्रयोजकं तत्प्रकारकबुद्धिवृत्तिसम्बन्धस्यैवापेक्षितत्वादत एव नातिप्रसङ्गः पटादेर्घटाकारबुद्धिवृत्तिसम्बन्धाभावात् । न च वाक्यार्थज्ञानस्य सप्रकारकत्वाङ्गीकारे तद्विषयस्याखण्डार्थत्वभङ्गः--ज्ञानस्य वैशिष्ट्यविषयत्वं विना सर्वतो व्यावृत्तावसङ्गात्सविषयविशेषमहिम्नैव ज्ञानजन्यज्ञानत्वेन वा तस्य सप्रकारत्वोपपत्तेः । अन्यथा गवादिज्ञानस्यापि गोत्वाद्यंशे सविकल्पकत्वानुपपत्तेः । न च तदंशे निर्विकल्पमेव, ज्ञानस्य तदंशेपि सविकल्पकतायाः प्रत्यक्षत्वादतः परेणापि वैशिष्ट्यविषयत्वं विना ज्ञानस्य सप्रकारकत्वं स्वीकर्त्तव्यम् । न च विषयत्वाभावे आकरार्पकत्वानुपपत्तिः । दर्पणे सूर्यप्रकाशस्येव तत्प्रकारकवृत्तौ स्वरूपचैतन्यप्रतिफलनस्यैवाकरार्पकशब्देनाभिधानात् । न च प्रतिबिम्बितत्वमेव विषयत्वं घटादावन्यस्यैव तस्य दर्शनात् । न च घटादेरपि बुद्धौ प्रतिफलनमस्ति । बहिष्ठ्वैनैव तस्यानुभवादत्र चाहं ब्रह्मेति वृत्तिमदन्तःकरणावच्छिन्नचैतन्याभेदेनानुभवः । न च ज्ञानजन्यव्यवहारविषयत्वमेव सर्वत्र ज्ञानविषयत्वं ज्ञानं स्वविषय एव व्यवहारं जनयतीति व्यवहारविषयत्वात्पृथगेव ज्ञानविषयत्वस्य वक्तव्यत्वात्तस्मात्प्रतिज्ञादिनामेवायमात्मनो विषयत्वाक्षेपः स्वमतश्रद्धाविलसित इत्यभिप्रेत्याह—

वाक्योत्थापितबुद्धिवृत्तिरमला यज्ञादिभिर्निश्चला-
वेदान्तश्रवणादिभिः स्फटिकवत्स्वच्छा सती तावकम्।
रूपं दर्पणवद्विभर्ति परमं विष्णोः पदं सन्निधे-
रेतस्मादिह कारणादथ भवेत्संसारबीजक्षयः॥ २४८॥

वाक्योत्थापितेति—तत्त्वमादिवाक्योत्थापिताखण्डब्रह्माकारा बुद्धिवृत्तिर्दर्पणवन्मुखं विष्णोः परमं पदं स्वरूपं बिभर्त्ति धत्तेऽविचलं तद्बिम्बं गृह्णातीति सम्बन्धः। नन्वहरहः श्रूयमाणवाक्यानां सर्वेषां पुरुषाणां मलिनदर्पण इव नैव तादृशवृत्तौ ब्रह्म प्रतिफलनं दृश्यते तत्कथं सिद्धवदुपन्यासस्तत्राह—अमला यज्ञादिभिरिति—इष्टकानिघर्षणादिना दर्पणमिव इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितयज्ञदानतपोऽनशनैर्विमलीकृता चित्तवृत्तिर्ब्रह्मप्रतिबिम्बं धत्त इति न सिद्धवदुपन्यासस्यानुभवविरोध इत्यर्थः। नन्वेवमप्यसंभावनादितीव्रवायुना प्रकम्पमाना सा न दृढतरप्रतिबिम्बग्रहणयोग्या इतस्ततो नीयमानदर्पणवत्तत्राह—निश्चलेति। भुवि निखातपाददर्पणवद्वेदान्तश्रवणमनननिदिध्यासनादिभिर्निराकृताऽसंभावनादितया निश्चला ब्रह्मैकाकारा स्वच्छोद्भूतसत्त्वप्रधाना च सतीत्यर्थः। एवं बिम्बसन्निधानाभावेन दूरस्थदर्पणवन्न तद्ग्रहणयोग्या सेत्याह—सन्निधेरिति। ब्रह्मणो बिम्बभूतस्यात्यन्तं सन्निहितत्वादित्यर्थः। अत्र हेतुत्वेन बिम्बस्वरूपं विशिनष्टि—तावकमिति। त्वदीयं वास्तवं स्वरूपमित्यर्थः। ब्रह्मणः स्वाकारवृत्तौ प्रतिफलनमात्रपरैव सम्प्रदायविदां तत्र तत्राकारसमर्पकत्वोक्तिरपि द्रष्टव्या। एतादृशज्ञानात्किं फलिष्यतीति तत्राह—एतस्मादिति। अथवा—वेदान्तजन्यज्ञाननिवर्त्याविद्याधिष्ठानत्वलक्षणं विषयत्वमपि सुदृढमित्याह—एतस्मादिति। अथ साक्षात्कारानन्तरम्॥२४८॥

एवं वेदान्तानामात्मनि घटादिवद्विषयत्वाभावेप्यविद्यानिवृत्ति-

फलकात्मज्ञानजनकत्वेन प्रामाण्यस्योपपादितत्वान्न सौत्रप्रतिज्ञानुपपन्नेत्युपसंहरति—

**एवं वेदशिरः प्रमाणमुदितं प्रत्यक्स्वरूपे तव**
**कर्मत्वं विरहय्य तत्र न हि नो बाधः प्रतिज्ञागिरः।**
**कर्मत्वं न करोति बोधयति च स्पष्टं वचो वैदिकम्**
**रूपं तावकमेवमस्य भवति प्रामाण्यमत्राऽऽत्मनि।२४९**

एवमिति। उदितमुपपादितं तत्र तथा सति प्रतिज्ञागिरः वाङ्मनसागोचरे ब्रह्मणि वेदान्ताः प्रमाणमिति प्रतिज्ञारूपशास्त्रयोनित्ववाक्यस्येत्यर्थः। ननु यदि वेदान्तजन्यज्ञानस्यात्मा न विषयतां भजते तर्हि तज्ज्ञानमेव न भवेद्विषयाभिमुखमनोवृत्तेरेव ज्ञानत्वानुपपत्त्याऽऽत्मनोविषयत्वे च न तस्याज्ञानत्वमुपपन्नमित्याशङ्क्य किं ज्ञानस्य ज्ञानत्वानुपपत्त्याऽऽत्मनोविषयत्वमापादयसि किं वा विषयत्वाभावे तस्मिन् ज्ञानमेव नोदेतीति। अथवोदीयमानस्यापि तस्यात्मनो विषयत्वे ज्ञानत्वमनुपपन्नमिति नाद्य इत्याह—कर्मत्वं न करोतीति। परसमवेतक्रियाफलशालित्वलक्षणविषयत्वस्य वृत्त्यभिव्यक्तप्रकाशसंसर्गित्वलक्षणविषयत्वस्य च सर्वप्रमाणफलभूते स्वप्रकाशे आत्मन्यसम्भवादित्यर्थः। द्वितीयं निराकरोति—बोधयति स्पष्टमिति। तथा च वेदान्ताद् ब्रह्माकारं ज्ञानं नोदेतीत्येतदनुभवविरुद्धमित्यर्थः। तृतीयनिराकरणाभिप्रायेणाह—एवमस्य भवतीति। अस्य वेदान्तवाक्यस्यात्मन्यविद्यानिवर्त्तकप्रमाजनकत्वलक्षणं प्रामाण्यं भवतीत्यर्थः। न हि वयं ब्रह्माविषय इत्येव ब्रूमः। स्वाकारसमर्पकत्वस्य निवर्त्यमानाविद्याधिष्ठानत्वस्य वा विषयत्वस्य तस्मिन्नङ्गीकारान्न हि ज्ञानं स्वविषयस्य मुख्यविषयत्वमपेक्ष्यैव स्वस्य ज्ञानत्वं भजते। संवित् स्वयंप्रकाशेति ज्ञानस्य स्वांशेऽज्ञानत्वप्रसङ्गादिति भावः॥ २४९॥

एवं तत्त्वमस्यादिविधिवाक्यस्याविद्यानिवृत्त्यादिफलकज्ञानोत्पादकत्वेनार्थवत्त्वमुक्तं सम्प्रत्यस्थूलादिनिषेधवाक्यस्यापि परम्परया तत्त्वंपदार्थबोधकत्वेनार्थवत्त्वं वक्तुं तत्र पूर्वपक्षमाह—

पृष्ठेन पूर्णवपुषा क्रियते प्रतीति-
र्नेतीति वाक्यजनिता जगतो निषेद्ध्री ।
प्राधान्यमस्तु विधिना सममेव तस्मा-
त्तस्याथवा भवतु तद्वचनं प्रधानम् ॥२५०॥

पृष्ठेनेति । स एष नेति नेत्यात्माऽस्थूलमनण्वित्यादिनिषेधवाक्यजन्या जगतो निषेद्ध्री निषेधविषयाऽभावविषया प्रतीतिः पृष्ठेन पश्चात्पूर्णवपुषा क्रियते पूर्णब्रह्माकारा भवति यस्मात्तस्मात्तस्य निषेधवाक्यस्य विधिना नञर्थास्पर्शितत्त्वमादिवाक्येन समप्राधान्यमेवास्तु न तद्गुणत्वमित्यर्थः । एतदुक्तं भवति—तत्त्वमस्यादिवाक्याज्जायमानं परिपूर्णब्रह्माकारं ज्ञानमविद्यानिवृत्तिद्वारानर्थनिबर्हकमिति हि स्वीक्रियते । तत्र नेति नेति वाक्याज्जायमानापि ब्रह्मव्यतिरिक्तसकलपरिच्छिन्ननिषेधविषयिणी बुद्धिरधिष्ठानं पूर्णमनालम्ब्यापर्यवस्यन्ती तद्विषयीकुर्वाणा परिच्छिन्नसर्वनिषेधादर्थात्पूर्णाकारा भवति । अतः साक्षात्फलवत्त्वात्तत्त्वमादिवाक्यैरस्य समप्राधान्यमिति तत्त्वबोधे प्रमाणविकल्पः स्यादित्यर्थः । अरुच्या पक्षान्तरमाह—अथवेति । तद्वचनं निषेधवाक्यमेव प्रधानं भवतु वक्ष्यमाणहेतोरित्यर्थः ॥ २५० ॥

ननु कथं तत्त्वमादिवाक्येन तस्य समप्राधान्यं यावता तत्त्वमादिवाक्येन साक्षादेव ब्रह्माकारबोधो भवति नैवं निषेधवाक्यात्तदुत्पन्नज्ञानस्यार्थादेव तदाकारत्वादत एव न तस्य तदपेक्षया प्राधान्यमपीत्याशङ्क्याद्यावुभयत्रापि बोधपूर्णाकारत्वस्याविशिष्टत्वादार्थत्वशाब्दत्वविशेषोऽकिञ्चित्कर इत्याह—

अद्वैताकरणं निषेधवचनादुत्पन्नबुद्धेरपि
तुल्यं तत्त्वमसीति वाक्यजनितप्रत्यक्प्रतीत्या सह ।
आर्थं शाब्दमथापि वा भवतु तत्किं तेन यद्वा विधि-
र्नाकर्त्तुं शबलार्थगोचरतया निर्भेदमर्थं क्षमः ॥ २५१ ॥

अद्वैताकरणमिति । आकरणमाकारः । आर्थं सकलपरिच्छेदनिषेधान्यथानुपपत्तिप्राप्तमथापि वेत्यनास्थायां तदद्वैताकरणं तेनार्थत्वशाब्दत्वविशेषेण द्वितीये पक्षे उपपत्तिमाह—यद्वेति । विधिस्तत्त्वमादिवाक्यं निर्भेदं त्रिविधपरिच्छेदशून्यमात्मानमाकर्त्तुं तत्त्वेन विषयीकर्त्तुं न क्षमं तत्र हेतुः—शबलार्थेति । तत्त्वंपदयोः शबलविषयतया केवलपूर्णात्मबोधकत्वासम्भवान्निषेधवाक्यस्य चानुपपत्त्या तत्सम्भवादेतदेव प्रधानं विधिवाक्यं तु तच्छेषमित्यर्थः ॥ २५१ ॥

ननु तत्त्वमादिपदं शबलार्थगोचरमपि लक्षणया निर्भेदं वस्तु विषयीकर्त्तुं समर्थमेवेत्याशङ्क्याह—

सम्बन्धजातविरहान्न च लक्षणाऽस्मि-
न्संभाव्यते परिहृताखिलदृश्यराशौ ।
ब्रह्मात्मवस्तुनि ततः प्रतिषेधवाक्य-
शेषत्वमेतु विधिरित्यपि केचिदन्ये ॥ २५२ ॥

सम्बन्धेति । अस्मिन् ब्रह्मात्मवस्तुनि संयोगादिसम्बन्धजातविरहान्नैव लक्षणा सम्भाव्यत इति सम्बन्धः । सम्बन्धाभावे हेतुमभिप्रेत्याह—परिहृतेति । यद्यपि सम्बन्धः प्रागुक्त एव तथापि वास्तवसम्बन्धो लक्षणाबीजत्वेन वक्तव्यः । अविनाभावो वा स चात्र न सम्भवतीत्याक्षेप्तुरभिप्रायः । द्वितीयपक्षमुपसंहरति तत इति ॥ २५२ ॥

पक्षद्वयमपि दूषयति—

वाक्यं मुक्तिफलां धियं जनयति स्पष्टं विधिव्यापृतं
साक्षादेव तव स्वरूपकथनान्नैवं निषेधात्मकम् ।
अध्यारोपितरूपभेदविलयव्यापारनिष्ठं तव
स्वाकारग्रहणक्षमां न हि धियं कर्त्तुं समर्थं यतः॥२५३॥

वाक्यमिति । विधिव्यापृतं वाक्यं तत्त्वमादिवाक्यं स्पष्टमुक्तिफलां धियं जनयतीति सम्बन्धः । तत्र हेतुः—साक्षादेव तव स्वरूपकथनादिति । अनुपपत्त्यादिकं विना त्वत्स्वरूपाभिधानसमर्थत्वादित्यर्थः । स्पष्ट मित्यनेन च तत्त्वमादिवाक्यात्पूर्णब्रह्माकारबुद्धौ विद्वत्प्रत्यक्षमुप-न्यस्तं भवति । तव स्वरूपकथनादित्यनेन तत्रार्थे उपपत्तिरुक्तेती द्रष्टव्यम् निषेधवाक्यस्य तु नैवं सामर्थ्यमित्याह—नैवं निषेधात्मकमिति । अस्थूलादिवाक्यमेव तत्त्वमादिवाक्यवन्मुक्तिफलां तव स्वरूपब्रह्मा-कारग्रहणक्षमां धिय जनयितुं न समर्थं, कुतः—यतस्तद्वाक्यमध्या-रोपितरूपभेदविलयव्यापारनिष्ठमध्यारोपितो यो रूपभेदः स्थौल्यादि-प्रपञ्चस्तस्य यो विलयो निषेधः अभावस्तद्विषयो यो व्यापारः निषेध-बोधः तन्निष्ठं तत्कारणं कल्पितभेदप्रपञ्चाभावमात्रबोधकत्वात्तदात्म-स्वरूपबोधकमित्यर्थः । अयम्भावः—विधिवाक्यस्य निषेधवाक्यशेष-त्वपक्षे कथं विधिवाक्यं निषेधवाक्य उपकरोति निषेधापेक्षिताऽ-धिष्ठानसमर्पकत्वादिति चेन्न—तथात्वे विधिवाक्यमुख्यार्थस्यानेक-रसत्वेन निषेधबुद्धेः पार्ष्ठिक्या अपि पूर्णाकारताया असिद्धिप्रसङ्गान्न वा तत्समर्पकत्वमपि लक्षणातः पूर्वमैक्यप्रतीत्यभावादुपस्थिततत्त्वं-पदार्थयोः प्रपञ्चाधिष्ठानत्वानुपपत्तेरधिष्ठानत्वे वा तत्पदार्थस्यैव तत्त्वेन त्वंपदवैयर्थ्यप्रसङ्गात् । किञ्चिज्ज्ञत्वकर्तृत्वादेर्ब्रह्मण्यप्रतीतस्य तत्र निषेधानुपपत्तेश्च । न च ब्रह्मधर्माणां ब्रह्मणि निषेधः जीवधर्माणां जीव इति वाच्यम् । अधिष्ठानभेदेन निषेधप्रतीतेः । पार्ष्ठिकपूर्णा-कारत्वानुपपत्तेस्तस्माद्वाक्यवैयर्थ्यपरिहाराय पूर्णाधिष्ठानत्वसिद्धये

च निषेधवाक्यमेव प्रधानमिति वदताप्यवश्यं येन केन चित्सम्बन्धेन तत्त्वमादिवाक्यं लक्षणयैव निषेधाधिष्ठानं समर्पयतीति वक्तव्यम्। तत्रापि निषेधवाक्यप्रवृत्तेः प्रागेव तत्प्रवृत्तिर्वक्तव्याऽधिष्ठानज्ञानं विना निषेधप्रतीत्यदर्शनाल्लोके इदमिदं नेत्यधिष्ठानावगमपूर्वकमेव निषेधप्रतीतिदर्शनादेवं च सति निषेधवाक्यात्प्रागेव तत्त्वमादिवाक्यादवश्यं भाविन्यखण्डार्थज्ञाने तेनैवानर्थनिवृत्तिसिद्धेः किं निषेधवाक्येन न वा तस्याद्वितीयात्मज्ञानजननसामर्थ्यं तस्य निषेधमात्रनिष्ठत्वादत एव न समप्राधान्यमपीति ॥ २५३ ॥

ननु माभूत्तत्त्वमादिवाक्यं निषेधवाक्यशेषं विधिवाक्यस्य सार्थकतायै निषेधवाक्योपकाराय तत्पूर्वमेव व्यापारेण निषेधवाक्यवैयर्थ्यात्समप्रधानपक्षस्तु भविष्यति । न च तत्राप्यधिष्ठानप्रकाशं विना निषेधानुपपत्तेः तदर्थं तत्त्वमादिवाक्यापेक्षास्तीति वाच्यम्—अधिष्ठानस्य स्वयं प्रकाशतया तदपेक्षाभावात्। नापि तस्य पूर्णत्वाकारप्रमितिजनकत्वानुपपत्तिः—साक्षात्तदभावेपि तज्जन्यज्ञानस्यार्थात्तदुपपत्तेरित्याशङ्क्याह—

**अस्थूलादिवचःसमुत्थितमतिर्नाऽऽकारमादास्यते**
**साक्षादद्वयवस्तुनस्तव विभोरज्ञानविच्छेदिनः।**
**अज्ञातस्य हि वस्तुनो न हि धिया स्वाकारसंवेदनं**
**मुक्त्वा तद्विषयस्य विभ्रमकृतो ध्वान्तस्य विध्वंसनम् २५४**

अस्थूलादीति । अस्थूलमनण्वह्रस्वमदीर्घमित्यादिवाक्यजन्यं ज्ञानं साक्षादद्वितीयवस्तुनोऽपरोक्षाद्वितीयस्यात एवाज्ञानविच्छेदिनो ज्ञानविरुद्धाकारस्य विभोस्तवाकारं परिपूर्णब्रह्माभिन्नं तद्रूपमर्थादपि नादास्यते न ग्रहीष्यत इत्यर्थः । निषेधवाक्यजन्यज्ञानस्य निषेधमात्रविषयतयोत्पन्नस्य विरम्य व्यापाराभावादर्थादपि न ब्रह्माकारता ।

ततो ज्ञानान्तरस्य तथात्वे च निषेधवाक्यजन्यज्ञानमेव तथेति पक्ष-पराहतिः। अर्थिकज्ञानस्य जीवपरतादात्म्याकारत्वाभावाद्विधिवाक्यं विनाऽधिष्ठानस्य ब्रह्मणः स्वरूपनिर्द्धारणायोगाच्च । न च सत्यादि-वाक्यैस्तन्निर्णयः—तैरेव तत्सिद्धेर्निषेधवाक्यप्राधान्यभङ्गापाताद्वै-यर्थ्यापाताच्च । न च तादात्म्यज्ञानवन्निषेधज्ञानं साक्षात्पुमर्थसाधनं तादात्म्यज्ञानं पुरुषार्थसाधनमित्यत्रानुपदमेव प्रमाणं प्रदर्शयिष्यते । एतस्मिन्पक्षे पाक्षिकतत्त्वमादिवाक्यवैयर्थ्यप्रसङ्गाच्च । न च संभवत्यां प्रकारान्तरेण गतौ बहुदोषदुष्टविकल्पो युज्यत इति। अथवोभयबोध-कताशङ्कायां यद्धि साक्षाद्बोधनं तदेव प्रधानं फलवदन्यत्वफल-मशाब्दज्ञानस्याविद्यानिवर्त्तकत्वाभावादित्यभिप्रेत्याह–अस्थूलादिति। अत्र तदाकारं साक्षान्न दास्यत इति सम्बन्धः। ननु माभून्निषेधवाक्यार्थ-ज्ञानस्य साक्षादर्थाद्वाऽद्वितीयब्रह्माकारता तथापि ब्रह्मणि परि-कल्पितानर्थात्मकप्रपंञ्चस्य तत्र साक्षात्तेन निषेधेनैव पुरुषार्थसिद्धेः निषेधवाक्यस्यापि तत्त्वमादिवाक्यसाम्यमवश्यमायातीति चेत्तत्राह–अज्ञातस्य हीति । अज्ञातस्य वस्तुनोऽनधिगतजीवपराभेदस्य स्वाकार-संवेदनं स्वस्य ब्रह्मणोऽद्वितीयत्वपरिपूर्णत्वाद्याकारसंवेदनमुक्त्वा धिया अस्थूलादिवाक्यजन्यज्ञानेन विभ्रमकृतः संसारहेतोस्तद्विषय-स्य ब्रह्मविषयस्याज्ञानस्य हि यतो निध्वंसनं न हि ततस्तस्य पुमर्थहेतुत्वं नास्तीत्यर्थः। एतदुक्तं भवति । अनीशया शोचति मुह्यमान इति स्वस्येश्वर-भावाप्रतिपत्तिलक्षणानीशाहेत्वज्ञानस्य शोकपदोपलक्षितसंसारहेतुत्वं दर्शयति ततः स्वस्येश्वरभावाज्ञानस्य संसारहेतुत्वे तज्ज्ञानस्यैव तन्निवृत्तिहेतुत्वं वक्तव्यमित्यस्त्येवात्र प्रमाणं स्थौल्यादिप्रपञ्चस्य ब्रह्मण्यारोपितस्याधिष्ठानापरोक्षब्रह्मज्ञाननिवर्त्यत्वात्तस्य च निषेध-वाक्यादसंभवेन ततस्तन्निवृत्त्यनुपपत्तेः। तन्निवृत्तिं विना च तत्कार्य-संसारस्यात्यन्तिकनिवृत्त्यनुपपत्तेस्तां विना च पुरुषार्थसमाप्त्यभावान्न निषेधवाक्येन पुरुषार्थसिद्धिस्ततस्तत्त्वमादिवाक्यतुल्यता नास्य

मनसापि संभाव्यत इति भावः ॥ २५४ ॥

अधिष्ठानाकारापरोक्षज्ञानं विनाऽऽरोपितनिवृत्तिर्नास्तीत्यत्रास्य दृष्टान्तमाह—

रज्ज्वज्ञानविजृम्भितस्य फणिनो रज्जुप्रकाशात्मकं
विज्ञानं विरहय्य न प्रशमनं दृष्टे निषेधे कृते
तद्वत्प्रत्यगविद्यया विरचितं संसारदुःखं न तत्-
संवित्तिं विरहय्य शाम्यति धिया नेतीति शब्दोत्थया ।२५५

रज्ज्वज्ञानेति । तस्य प्रत्यगात्मनः संवित्तिस्तत्संवित्तिस्तामित्यर्थः । यद्यदज्ञानविजृम्भितं तत्तज्ज्ञानान्निवर्त्यते न हि षष्ठ्यामलायां ? रात्रौ कुटिलसंस्थानां रज्जुं सर्पोऽयमिति मन्यमानस्याकस्माच्छ्रुताऽन्नायं सर्प इति वाक्यात्सर्पाभावनिश्चयो भवति किन्तु रज्जुरियमिति साक्षात्कृतायां रज्जौ तदभावनिश्चयो जायते एवं निषेधवाक्यात्प्रपञ्च-निषेधे कृतेपि न ब्रह्मपरिज्ञानं विना कर्तृत्वाद्यनर्थमूलाज्ञाननिवृत्तिः सम्भवतीति न निषेधवाक्यस्य विधिवाक्यसाम्यमिति भावः ॥२५५॥

नन्वेवं किं निषेधवाक्यं व्यर्थमेव भवेन्न तत्त्वमादिपदार्थशोधकतया तच्छेषत्वेनार्थवत्त्वादित्याह—

अस्थूलादिवचोनिषेधकतया भेदस्य संशोधना-
द्वाक्यार्थान्वयसिद्धये नु घटते वाच्यार्थलक्ष्यार्थयोः ।
एवं तत्त्वमसीति वाक्यगतयोस्तत्त्वंपदोक्तार्थयोः
संशुद्ध्यैव तु नेति नेति वचनं मोक्षाय साक्षान्न तु ॥२५६॥

अस्थूलादीति । अस्थूलादिवचस्तु भेदस्य स्थौल्यादिप्रपञ्चस्य निषेधकतया संशोधनाद्वाक्यर्थान्वयसिद्धयेऽखण्डवाक्यार्थप्रतिपत्तये

समर्थं भवतीत्यर्थः। कस्य संशोधनमित्यपेक्षायामाह—वाच्यार्थलक्ष्यार्थयोरिति। वाच्यार्थश्च लक्ष्यार्थश्च तयोर्वाच्यार्थसंशोधनं नाम तदेकदेशस्यानात्मत्वेन हेयत्वनिर्णयः लक्ष्यस्य परिशोधनमेकरसत्वेन निश्चयः। एतादृशसंशोधनं च निषेधवाक्यस्य वाच्यार्थविषयं साक्षाल्लक्ष्यार्थविषयं त्वर्थादर्थवादवाच्यार्थाभ्यां यौ लक्ष्यौ अपरोक्षद्वयानुभवरूपौ तयोरित्यर्थः। अत्र च संशोधनं भेदस्य निषेध एव। नन्वथात आदेश इति श्रुतिरादिश्यते उपदिश्यते ब्रह्मानेनेति व्युत्पत्त्या नेतीति वाक्यस्य ब्रह्मबोधकत्वमाह तत्कथं सर्वमपि निषेधवाक्यं विधिवाक्यशेषमेवेत्युच्यत इत्यभ्यधिकाशङ्कायां न तत्रापि करणव्युत्पत्तिरभिता। किन्त्वादिश्यते तत्त्वमादिवाक्यैरित्यादेशो निष्प्रपञ्चं ब्रह्मैव विवक्षितम् अथवा—करणव्युत्पत्तावपि परम्परया तद्बोधकत्वसंभवान्न तत्त्वमादिवाक्यशेषत्वं तस्य विरुध्यत इत्यभिप्रेत्यास्थूलादिवाक्योक्तं न्यायं तत्राप्यतिदिशति—एवमिति। यथाऽस्थूलादिवाक्यमेवं नेति नेति वाक्यमपि तत्त्वमसीति वाक्यगतयोस्तत्त्वमादिवाक्यप्रतिपाद्ययोस्तत्त्वंपदलक्षितार्थयोः संशुद्ध्यैव मोक्षाय घटते न तु साक्षान्मोक्षसाधनप्रमितिं जनयतीत्यर्थः॥ २५६॥

अन्ये पुनर्निषेधवाक्यस्यैतादृशमप्यर्थवत्त्वं नास्ति अहं ब्रह्मैव चेन्न सप्रपञ्च इति तस्य विधिवाक्यार्थप्रमित्यर्थसिद्धनिषेधानुवादकत्वादिति वदन्ति तन्मतमाह—

अन्ये पुनर्विधिवचोजनितात्मबुद्धिः
सामर्थ्यासिद्धमनुवक्ति निषेधवाक्यम्।
द्वैतोपमर्दमिति शासति शिष्यवर्गं
तच्च प्रशस्तमनवद्यमभीष्टमेव॥ २५७॥

अन्ये पुनरिति। तत्त्वमादिवाक्यं हि जीवपराभेदं प्रमाय यत्प्रपञ्चस्य

वस्तुतोऽसत्त्वमाक्षिपतीति तदेव निषेधवाक्येनानूद्यते न तु प्रमीयते तस्य पूर्वमेवासिद्धत्वात् त्वंपदार्थपरिशोधनं च योऽयंविज्ञानमय एकमेवाद्वितीयमित्यादिवाक्यैरेव भवति । न चायमनुवा निरर्थकः, आत्मसाक्षात्कारेण सर्वानर्थनिवृत्तिर्भवतीति तत्स्तुत्यथ त्वादिति भावः । अन्यपदोपादानेन प्राप्तामत्र स्वस्यास्वारस्यशङ्कां निराकरोति—तच्च प्रशस्तमिति । समीचीनं तत्र निर्दुष्टत्वं हेतुमाह— अनवद्यमिति । अत एव ममाप्यभीष्टमित्यर्थः ॥ २५७ ॥

विधिवाक्यार्थावबोधसामर्थ्यसिद्धाभावानुवादकत्वं निषेध वाक्यस्य क्व दृष्टमित्याशङ्क्य लोके दृष्टमित्याह—

दृष्टश्च रज्जुविधिनाऽवगतार्थवस्तु-
सामर्थ्यसिद्धभुजगप्रशमानुवादः ।
रज्जुस्तवाग्रत इयं न भुजङ्गमोऽय-
मित्येव तद्वदिह योजयितव्यमेतत् ॥ २५८ ॥

दृष्ट इति । रज्जुविधिरियं रज्जुरिति वाक्यं तेनावगतं यदर्थ वस्त्वबाधितोऽर्थो रज्जुस्तस्य यत्सामर्थ्यमध्यस्तविपरीतं रूपं तेन ज्ञातरज्जुतत्त्वस्वरूपेण सिद्धस्य रज्जुश्चेन्न सर्प इत्याक्षिप्तस्य भुजग- प्रशमस्य सर्पाभावस्यानुवाद इत्यर्थः । यथा तवाग्रे इयं रज्जुरेव न सर्प इति वाक्यं रज्जुरियमिति वाक्यावगतरज्जुस्वरूपमहिमाक्षित सर्पाभावस्यानुवादकं तद्वद्वेदेपि निषेधवाक्यमित्यर्थः ॥ २५८ ॥

एवं तत्त्वमादिवाक्यस्य निषेधवाक्योपजीव्यत्वाद् निषेध वाक्यस्य चानर्थनिवृत्तिक्षमब्रह्मप्रमित्युत्पादनसामर्थ्याभावाच्च तत्त्व मादिवाक्यमेव साक्षात्फलवदित्युक्तं संप्रति प्रकारान्तरेणापि तत्त्वमादिवाक्यस्य प्राधान्यं साधयति—